# उपोद्घातः

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
यत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः ।
आदिशन्माधवाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुर्माधवाचार्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥
आध्वर्य्यवस्य यज्ञेषु प्राधान्याद् व्याकृतः पुरा ।
यजुर्वेदोऽथ हौत्रार्थमृग्वेदो व्याकरिष्यते ॥ ५ ॥
एतस्मिन् प्रथमोऽध्यायः श्रोतव्यः सम्प्रदायतः ।
व्युत्पन्नस्तवता सर्वं बोद्धुं शक्नोति बुद्धिमान् ॥ ६ ॥

अत्र केचिदाहुः—ऋग्वेदस्य प्राथम्येन सर्वत्राम्नातत्वाद् 'अभ्यर्हितं पूर्वम्' इति न्यायेनाभ्यर्हितत्वात् तद्व्याख्यानमादौ युक्तम् । प्राथम्यं च पुरुषसूक्ते विस्पष्टम्—

'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥'
(ऋ० सं० १०, ९० ९। यजुः ३१ ७)

तस्मात् सहस्रशीर्षा पुरुष इत्युक्तात् परमेश्वराद् यज्ञाद् यजनीयात् पूजनीयात् सर्वहुतः सर्वैर्हूयमानात् । यद्यपीन्द्रादयस्तत्र तत्र हूयन्ते,तथापि परमेश्वरस्यैवेन्द्रादिरूपेणावस्थानादविरोधः ।

तथा मन्त्रवर्णः—

'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।

एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥'

(नि० ७.१८) (ऋग्वेद १ । १६४ । ४६ ) इति ।

वाजसनेयिनश्चामनन्ति—'तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः' (शत० ब्रा० १४।४।२। १२) इति । बृ० उ० १।४।६ तस्मात्सर्वैरपि परमेश्वर एव हूयते ।

न केवलमृचां पाठप्राथम्येनाभ्यर्हितत्वम्, किंतु यज्ञाङ्गदार्ढ्यहेतुत्वादपि । तथा च तैत्तिरीया आमनन्ति—'यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद्यदृचा तद्दृढम् । ( तैत्ति० सं० ६।५।१०।३ ) इति । तथा च सर्ववेदगतानि ब्राह्मणानि स्वाभिहितेऽर्थे विश्वासदार्ढ्याय 'तदेतदृचाभ्युक्तम्' इत्यृचमेवोदाहरन्ति । मन्त्रकाण्डेष्वपि यजुर्वेदगतेषु तत्र तत्राध्वर्युणा प्रयोज्या ऋचो बहव आम्नाताः । साम्नां तु सर्वेषामृगाश्रितत्वं प्रसिद्धम् । आथर्वणिकैरपि स्वकीयसंहितायामृच एव बाहुल्येनाधीयन्ते । अतोऽन्यैः सर्वैर्वेदैरादृतत्वादभ्यर्हितत्वं प्रसिद्धम् ।

छन्दोगास्तु प्राथम्येन सनत्कुमारं प्रति नारदवाक्यमेवमामनन्ति 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम् (छां० उ० ७। १।२) इति । मुण्डकोपनिषद्यप्येवमाम्नायते 'ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः ( मुं० उ० १ । १ । ५ ) इति । तापनीयोपनिषद्यपि मन्त्रराजपादेषु क्रमेणाध्ययनमेवमामनन्ति—ऋग्यजुःसामाथर्वाणश्चत्वारो वेदाः साङ्गाः सशाखाश्चत्वारः पादा भवन्ति' (नृसिंहता० १।२) इति । एवं सर्वत्रोदाहरणीयम् । तस्मादृग्वेदस्याभ्यर्हितस्यादौ व्याख्यानमुचितमिति ॥ तान् प्रत्येतदुच्यते—

अस्त्वेवं सर्ववेदाध्ययनतत्पारायणब्रह्मयज्ञजपादावृग्वेदस्यैव प्राथम्यम् । अर्थज्ञानस्य तु यज्ञानुष्ठानार्थत्वात्तत्र तु यजुर्वेदस्यैव प्राधान्यात्तद्व्याख्यानमेवादौ युक्तम् । तत्प्राधान्यं च काचिदृगेवाह—

'ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु ।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः ॥'

( ऋग्वेद १०।७१।११ ) इति ।

एतस्या ऋचस्तात्पर्यं निरुक्तकारो यास्कः संक्षिप्य दर्शयति । 'ऋत्विक्कर्मणां विनियोगमाचष्टे' ( निरु० १।८ ) इति ।

पुनरपि स एव प्रथमं पादं विवृणोति–'ऋचामेकः पोषमास्ते पुपुष्वान् होतर्गर्चनी' इति । अस्यायमर्थः । त्वशब्द एकशब्द-पर्यायो होतृविशेषणम् । होतृनामक एक ऋत्विग् यज्ञकाले स्वकीयवेदगतानामृचां पुष्टिं कुर्वन्नास्ते । भिन्नप्रदेशेष्वाम्नातानामृचां संघमेकत्र संपाद्यैतावदिदं शस्त्रमिति क्लृप्तिं करोति । सेयं पुष्टिः । अर्चनीत्यमुमर्थमृक्शब्द आचष्टे । अर्च्यते प्रशस्यतेऽनया देवविशेषः क्रियाविशेषस्तत्साधनविशेषो वेत्यृक्छब्दव्युत्पत्तेरिति ॥

अथ द्वितीयं पादं विवृणोति 'गायत्रमेको गायति शक्करीषूद्गाता । गायत्रं गायतेः स्तुतिकर्मणः, शक्कर्य ऋचः शक्नोतेस्तद्यदाभिर्वृत्रमशकद्धन्तुं तच्छक्करीणां शक्करीत्वमिति विज्ञायते' इति । अस्यायमर्थः— उद्गातृनामक एक ऋत्विग् गायत्रशब्दाभिधेयं स्तोत्रं शक्करीशब्दाभिधेयास्वृक्षु गायति । धातूनामनेकार्थत्वेन स्तुतिक्रियावाचिनो गायति-धातोरुत्पन्नोऽयं गायत्रशब्दः । शक्करीशब्दस्तु शक्नोतिधातोरुत्पन्नः । वृत्रं शत्रुं हन्तुं शक्नोत्याभिर्ऋग्भिरित्येषा व्युत्पत्तिः कस्मिंश्चिद्ब्राह्मणे विज्ञायत इति ।

अथ तृतीयं पादं विवृणोति–'ब्रह्मैको जाते जाते विद्यां वदति ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति' इति । अस्यायमर्थः–ब्रह्मनामक एक ऋत्विग् जाते जाते तदा तदोत्पन्ने यज्ञे प्रस्तुते प्रणयनादिकर्मणि विद्यामनुज्ञां वदति । 'ब्रह्मन्नपः प्रणेष्यामि' इत्येवं सम्बोधितः सन् 'ओं प्रणय' इत्युनुजानाति । स च ब्रह्मा वेदत्रयोक्तसर्वकर्माभिज्ञः । तस्माद्योग्यतां दृष्ट्वा तत्तदनुज्ञातुं सति प्रमादे समाधातुं च समर्थ इति । तच्च सामर्थ्यं छन्दोगा आमनन्ति–'एष एव यज्ञस्तस्य मनश्च वाक् च वर्तनी, तयोरन्यतरां मनसा संस्करोति ब्रह्मा वाचा होताध्वर्यु-रुद्गातान्यतराम्' ( छा० उ० ४।१६।१ ) इति कृत्स्नो यज्ञः प्रमादराहि-त्याय मनसा सम्यगनुसन्धेयो वाचा च वेदत्रयोक्तमन्त्राः पठनीयाः । तत्र होत्रादयस्त्रयो मिलित्वा वाग्रूपं यज्ञमार्गं संस्कुर्वन्ति । ब्रह्मा त्वेक

एव मनोरूपं यज्ञमार्गं कृत्स्नमपि संस्करोति । तस्मादस्यास्ति सामर्थ्यमिति ।

अथ चतुर्थं पादं विवृणोति–'यज्ञस्य मात्रां विमिमीत एकोऽध्वर्युः । अध्वर्युरध्वरयुध्वरं युनक्त्यध्वरस्य नेता' इति । अस्यायमर्थः । अध्वर्युनामक एक ऋत्विग् यज्ञस्य मात्रां स्वरूपं विमिमीते विशेषेण निष्पादयति । मीयते निर्मीयत इति मात्रा स्वरूपम् । तन्निष्पादकत्वं चाध्वर्योर्नामनिर्वचनादवगम्यते । अध्वर्युरित्यत्र छान्दस्या प्रक्रियया लुप्तमकारं पुनः प्रक्षिप्याध्वरयुरिति नाम सम्पादनीयम् । अध्वरं युनक्तीत्यवयवार्थः । अध्वरस्य नेतेति तात्पर्यार्थ इति ।

एतदेवाभिप्रेत्याध्वर्युवेदस्य यागनिष्पादकत्वद्योतकं निर्वचनं यास्को दर्शयति–'मन्त्रा मननात्, छन्दांसि छादनात्, स्तोमः स्तवनात् यजुर्यजतेः' ( निरु० ७।१२ ) इति । एवं सत्यध्वर्युसम्बन्धिनि यजुर्वेदे निष्पन्नं यज्ञशरीरमुपजीव्य तदपेक्षितौ स्तोत्रशस्त्ररूपाववयवावितरेण वेदद्वयेन पूर्येते इति, उपजीव्यस्य यजुर्वेदस्य प्रथमतो व्याख्यानं युक्तम् । तत ऊर्ध्वं साम्नाम् ऋगाश्रितत्वाद् उभयोर्मध्ये प्रथमत ऋग्व्याख्यानं युक्तमित्यृग्वेद इदानीं व्याख्यायते ।

---

ननु वेद एव तावन्नास्ति । कुतस्तदवान्तरविशेष ऋग्वेदः । तथा हि 'कोऽयं वेदो नाम ? न हि तत्र लक्षणं प्रमाणं वास्ति । न च तदुभयव्यतिरेकेण किञ्चिद्वस्तु प्रसिध्यति, 'लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः' इति न्यायविदां मतम् ॥

प्रत्यक्षानुमानागमेषु प्रमाणविशेषेष्वन्तिमो वेद इति तल्लक्षणमिति चेत्, न, मन्वादिस्मृतिष्वतिव्याप्तेः । 'समयबलेन सम्यक् परोक्षानुभवसाधनम्, इत्येतस्यागमलक्षणस्य तास्वपि सद्भावात् ।

अपौरुषेयत्वे सतीति विशेषणाददोष इति चेत्, न, वेदस्यापि परमेश्वरनिर्मितत्वेन पौरुषेयत्वात् ।

शरीरधारिजीवनिर्मितत्वाभावादपौरुषेयत्वमिति चेत्, न,

'सहस्रशीर्षा पुरुषः' ( ऋ० १०।९०।१ ) इत्यादिश्रुतिभिरीश्वरस्यापि शरीरित्वात् ।

कर्मफलरूपशरीरधारिजीवनिर्मितत्वाभावमात्रेणापौरुषयत्वं विवक्षितमिति चेत्, न, जीवविशेषैरग्निवाय्वादित्यैर्वेदानामुत्पादितत्वात् 'ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्' ( ऐतरे० ब्रा० ५।३२ ) इति श्रुतेरीश्वरस्याग्न्यादिप्रेरकत्वेन निर्मातृत्वं द्रष्टव्यम् ।

'मन्त्रब्राह्मणात्मकः शब्दराशिर्वेदः' इति चेत्, न, ईदृशो मन्त्र ईदृशं ब्राह्मणमित्यनयोरद्याप्यनिर्णीतत्वात् । तस्मान्नास्ति किञ्चिद्वेदस्य लक्षणम् ।

नापि तत्सद्भावे प्रमाणं पश्यामः । 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम्' ( छा० उ० ७।१।२ ) इत्यादिवाक्यं प्रमाणमिति चेत्, न, तस्यापि वाक्यस्य वेदान्तःपातित्वेनात्माश्रयत्वप्रसंगात् । न खलु निपुणोऽपि स्वस्कन्धमारोढुं प्रभवति ।

'वेद एव द्विजातीनां निःश्रेयसकरः परः' ( याज्ञ० १।४० ) इत्यादिस्मृतिवाक्यं प्रमाणमिति चेत्, न, तस्याप्युक्तश्रुतिमूलत्वेन निराकृतत्वात् ।

प्रत्यक्षादिकं तु शङ्कितुमप्ययोग्यम् । वेदविषया तु लोकप्रसिद्धिः सार्वजनीनापि नीलं नभ इत्यादिवद् भ्रान्ता । तस्माल्लक्षणप्रमाणरहितस्य वेदस्य सद्भावो नाङ्गीकर्तुं शक्यत इति पूर्वपक्षः ।

अत्रोच्यते—मन्त्रब्राह्मणात्मकत्वं तावददुष्टं लक्षणम् । अत एवापस्तम्बो यज्ञपरिभाषायामेवमाह—'मन्त्रब्राह्मणयोर्वेदनामधेयम्' ( आप० प० ३१ ) इति । तयोस्तु स्वरूपमुपरिष्टान्निर्णेष्यते । अपौरुषेयवाक्यत्वमितीदमपि यादृशमस्माभिर्विवक्षितं तादृशमुत्तरत्र स्पष्टीभविष्यति ॥ प्रमाणान्यपि यथोक्तश्रुतिस्मृतिलोकप्रसिद्धिरूपाणि वेदसद्भावे द्रष्टव्यानि । यथा घटपटादिद्रव्याणां स्वप्रकाशत्वाभावेऽपि सूर्यचन्द्रादीनां स्वप्रकाशकत्वमविरुद्धम्, तथा मनुष्यादीनां स्वस्कन्धारोहा-

सम्भवेऽप्यकुण्ठितशक्तेर्वेदस्येतरवस्तुप्रतिपादकत्ववत् स्वप्रतिपादकत्वमप्यस्तु। अत एव सम्प्रदायविदोऽकुण्ठितां शक्तिं वेदस्य दर्शयन्ति— 'चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवञ्जातीयकमर्थं शक्नोत्यवगमयितुम्' इति। यथा सति वेदमूलायाः स्मृतेस्तदुभयमूलाया लोकप्रसिद्धेश्च प्रामाण्यं दुर्वारम्। तस्माल्लक्षणप्रमाणसिद्धो वेदो न केनापि चार्वाकादिनाऽपोढुं सकयत इति स्थितम्।

---

नन्वस्तु नाम वेदाख्यः कश्चित्पदार्थः, तथापि नासौ व्याख्यानमर्हति। अप्रमाणत्वेनानुपयुक्तत्वात्। न हि वेदः प्रमाणम्। तल्लक्षणस्य तत्र दुःसम्पादत्वात्। तथा हि। 'सम्यगनुभवसाधनं प्रमाणम्' इति केचिल्लक्षणमाहुः। अपरे तु 'अनधिगतार्थगन्तृ प्रमाणम्' इत्याचक्षते। न चैतदुभयं वेदे सम्भवति। मन्त्रब्राह्मणात्मको हि वेदः। तत्र मन्त्राः केचिदबोधकाः। 'अम्यक्सा त इन्द्र ऋष्टिः' ( ऋग्वेद सं० १।१६९।३ ) इत्येको मन्त्रः। 'याद‍ृश्मिन्धायि तमपस्यया विदत्' ( ऋ० सं० ५।४४।८ ) इत्यन्यः। 'सृण्येव जर्भरी तुर्फरीतू' ( ऋ० सं० १०।१०६।६ ) इत्यपरः। एवम् 'आपान्तमन्युस्तृपलप्रभर्मा' ( ऋ० सं० १०।८९।५ ) इत्यादय उदाहार्याः। न ह्येतैर्मन्त्रैः कश्चिदप्यर्थोऽवबुध्यते। एतेष्वनुभव एव यदा नास्ति, तदा तत्सम्यक्त्वं तदीयसाधनत्वं च दूरापेतम्।

'अधः स्विदासी३दुपरि स्विदासी३त्' ( ऋ० सं० १०।१२९।५ ) इति मन्त्रस्य बोधकत्वेऽपि स्थाणुर्वा पुरुषो वेत्यादिवाक्यवत्संदिग्धार्थबोधकत्वान्नास्ति प्रामाण्यम्।

'ओषधे त्रायस्वैनम्' ( तै० सं० १।२।१।१। वा० सं० ४।१ ) इति मन्त्रो दर्भविषयः, ( आ० गृ० १।१७।९ ) स्वधिते मैनं हिंसीः' ( वा० सं० ४।१ ) इति क्षुरविषयः, ( अ० गृ० १।१७।९ ) 'शृणोत ग्रावाणः' ( तै० सं० १।३।१३।१ ) इति पाषाणविषयः। एतेष्वचेतनानां दर्भक्षुरपाषाणानां चेतनवत्सम्बोधनं श्रूयते। ततो द्वौ चन्द्रमसाविति वाक्यवद्विपरीतार्थबोधकत्वादप्रामाण्यम्।

'एक एव रुद्रो न द्वितीयाय तस्थे' ( तै० सं० १ । ८ । ६ । १ )। 'सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम्' ( तै०सं० ४। ५ । ११ । १। वा० सं० १६।५४ ) * इत्यनयोस्तु मन्त्रयोर्यावज्जीवमहं मौनीति वाक्यवद्व्याघातबोधकत्वादप्रामाण्यम् ।

'आप उन्दन्तु' ( तै० सं० १।२।१।१ ) इति मन्त्रो यजमानस्य क्षौरकाले जलेन शिरसः क्लेदनं ब्रूते । 'शुभिके शिर आरोह शोभयन्ती मुखं मम' इति ( बौधायनसूत्र ) मन्त्रो विवाहकाले मङ्गलाचरणार्थं पुष्पनिर्मितायाः शुभिकाया वरवध्वोः शिरस्यवस्थानं ब्रूते । तयोश्च मन्त्रयोर्लोकप्रसिद्धार्थानुवादित्वादनधिगतार्थगन्तृत्वं नास्ति । तस्मान्-मन्त्रभागो न प्रमाणम् ।

अत्रोच्यते—अग्न्यादिमन्त्राणामर्थो यास्केन निरुक्तग्रन्थेऽवबोधितः । तत्परिचयरहितानामनवबोधो न मन्त्राणां दोषमावहति । अत एवात्र लोकन्यायमुदाहरन्ति 'नैष स्थाणोरपराधो यदेनमन्धो न पश्यति, पुरुषापराधः स भवति' इति । (नि० १।१६)

'अधः स्विदासीद्' इति मन्त्रश्च न सन्देहबोधनाय प्रवृत्तः । किं तर्हि ? जगत्कारणस्य परवस्तुनोऽतिगम्भीरत्वं निश्चेतुमेव प्रवृत्तः । तदर्थमेव हि गुरुशास्त्रसम्प्रदायरहितैर्दुर्बोधत्वम 'अधः स्विद्' इत्यनया वचोभङ्ग्योपन्यस्यति । स एवाभिप्राय उपरितनेषु 'को अद्धा वेद' ( ऋ० ३ । ५४ । ५ ) इत्यादिमन्त्रेषु स्पष्टीकृतः । ओषध्यादिमन्त्रेष्वपि चेतना एव तत्तदभिमानिदेवतास्तेन तेन नाम्ना सम्बोध्यन्ते । ताश्च देवता भगवता बादरायणेन 'अभिमानिव्यपदेशस्तु' ( उ० मी० २ । १ । ५ ) इति सूत्रे सूत्रिताः । एकस्यापि रुद्रस्य स्वमहिम्ना सहस्र-मूर्तिस्वीकारान्नास्ति परस्परव्याघातः । जलादिद्रव्येण शिरःक्लेदनादे-र्लोकप्रसिद्धत्वेऽपि तदभिमानिदेवतानुग्रहस्याप्रसिद्धत्वात्तद्विषयत्वे-नाज्ञातार्थज्ञापकत्वम् । ततो लक्षणसद्भावादस्ति मन्त्रभागस्य प्रामाण्यम् । एतदेवाभिप्रेत्य भगवाञ्जैमिनिर्मन्त्राधिकरणे मन्त्राणां विवक्षितार्थत्वमसूत्रयत् पू० मी० १ । २ । ३१—५३ ॥ तानि च सूत्राणि

* वा सं० तु 'असंख्याताः सहस्राणि ये रुद्राः' इति पाठ उपलभ्यते ॥

क्रमेणोदाहृत्य व्याख्यास्यामः। तत्र पूर्वपक्षं सूत्रयति—

'तदर्थशास्त्रात्' ( पूर्व मी० अ० १ पा० २ सू० ३१ ) इति।

यस्यार्थस्याभिधाने समर्थो मन्त्रः स एवाभिधेयो यस्य शास्त्रस्य ब्राह्मणवाक्यस्य तदिदं वाक्यं तदर्थशास्त्रम्। तस्माच्छास्त्राददविवक्षितार्थो मन्त्र इत्यवगम्यते। तथा हि 'उरु प्रथस्व' (तै०सं० १।१।८ वा० सं० १।२२) इति मन्त्रेण पुरोडाशप्रथनमभिधीयते। 'पुरोडाशं प्रथयति (तै० ब्रा० ३।२।८।४। शत० ब्रा० १।२।२।८) इति ब्राह्मणेनापि तदेवाभिधीयते। तथा सति मन्त्रेणैव प्रतीतत्वात्तदर्थबोधनाय प्रवृत्तं ब्राह्मणमनर्थकं स्यात्। मन्त्रस्याविवक्षितार्थत्वे तु विनियोगबोधनाय ब्राह्मणमुपयुक्तम्। तस्मान्मन्त्रा उच्चारणेनैवानुष्ठाने उपकुर्वन्ति॥

ननूच्चारणार्थत्वे सत्यदृष्टं प्रयोजनं परिकल्प्येत। अर्थाभिधायकत्वे तु दृष्टं लभ्यते। तस्माद् ब्राह्मणस्यानुवादकत्वमभ्युपेत्यापि मन्त्रस्याभिधानार्थत्वमेवेत्याशङ्क्योत्तरं सूत्रयति—

'वाक्यनियमात्' ( पू० मी० अ० १ पा० २ सू० ३२ )

'अग्निर्मूर्द्धा दिवः ककुत्' ( ऋ० सं० ८।४४।१६ ) इत्येवमेव वाक्यं पठितव्यमिति मन्त्रे नियम उपलभ्यते। अर्थप्रत्यायनं तु मूर्द्धाग्निरित्येवं व्युत्क्रमपाठेऽपि भवत्येव। तस्मान्नियतपाठक्रमसाफल्यायोच्चारणमेव मन्त्रप्रयोजनम्॥

ननु पाठक्रमनियममात्रस्यादृष्टार्थत्वेऽपि मन्त्रपाठोऽर्थबोधार्थ एवेत्याशङ्क्य तत्र दोषान्तरं सूत्रयति—

'बुद्धिशास्त्रात्'। ( पू० मी० अ० १ पा० २ सू० ३३ )॥

'अग्नीदग्नीन्विहर' ( तै० सं० ६।३।१।२ ) इति प्रैषमन्त्रः प्रयोगकाले पठ्यते। तच्चाग्निविहरणादिकर्माग्नीध्रेणाध्ययनकाल एव स्वकर्तव्यत्वेन बुद्धम्। तस्य च बुद्धार्थस्य पुनर्मन्त्रोच्चारणेन शासनमनर्थकम्। न हि सोपानत्के पादे पुनरप्युपानहं प्रतिमुञ्चति।

ननु बुद्धस्यार्थस्य प्रामादिकविस्मरणपरिहाराय मन्त्रेण स्मरणमस्त्वित्याशङ्क्य दोषान्तरं सूत्रयति—

'अविद्यमानवचनात्' ( पू० मी० १ । २ । ३४ ) इति ॥

'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य' ( ऋ० सं० ४।५८।३) इति मन्त्र आम्नायते। न खलु चतुःशृङ्गत्वाद्युपेतं किञ्चिद्यज्ञसाधनं विद्यते यन्मन्त्रपाठेनानुस्मर्येत।

नन्वीदृशी काचिद्देवता स्यादित्याशङ्क्य दोषान्तरं सूत्रयति—

'अचेतनेऽर्थबन्धनात्' ( पू० मी० १ । २ । ३५ ) इति ॥

'ओषधे त्रायस्वैनं' 'शृणोत ग्रावाणः' इत्यादावचेतने द्रव्ये चेतनोचितरक्षणश्रवणाद्यर्थं बध्नाति। स चायुक्तः।

ननु 'अभिमानिव्यपदेशः' इति वैयासिकशास्त्रे सूत्रितत्वादोषध्याद्यभिमानिचेतनदेवतात्र विवक्ष्यतामित्याशङ्क्य दोषान्तरं सूत्रयति—

'अर्थविप्रतिषेधात्' ( पू० मी० । १ । २ । ३६ ) इति ॥

'अदितिर्द्यौरदितिरन्तरिक्षम्' ( ऋ० सं० १।८९।१० ) इति मन्त्र आम्नायते। यदेव द्यौस्तदेवान्तरिक्षमित्ययमर्थो विप्रतिषिद्धः। एवं, 'एक एव रुद्रः' 'सहस्राणि सहस्रशो ये रुद्राः' इत्यादिकमप्युदाहर्तव्यम्।

ननु 'त्वमेव माता च पिता त्वमेव' इत्यादिवदन्तरिक्षादिरूपत्वेनादितिः स्तूयते। एवमेकस्यापि रुद्रस्य योगसामर्थ्याद् बहुमूर्तिस्वीकारोऽस्तु। ततो नार्थविप्रतिषेध इत्याशङ्क्य दोषान्तरं सूत्रयति—

'स्वाध्यायवद्वचनात्' ( पू० मी० १ । २ । ३७ ) इति ॥

पूर्णिका नाम काचिद् योषिदवघातं करोति। तत्समीपे माणवकः स्वाध्यायग्रहणार्थं कदाचिदवघातमन्त्रमधीते। न च तस्यार्थप्रकाशनविवक्षास्ति, प्रतिमुशलप्रहारं तस्य मन्त्रस्यापठ्यमानत्वादक्षरग्रहणायैव तं मन्त्रमन्यांश्च मन्त्रानभ्यस्यति। तत्र स्वाध्यायकाले पठितोऽप्यवघातमन्त्रो यथा पूर्णिकां प्रति स्वार्थं न ब्रूते तथा कर्मकालेऽपि स्वार्थं न वक्ष्यति।

ननु तत्र माणवकस्यार्थे विवक्षा नास्ति। पूर्णिकाप्यवबोद्धुमक्षमा। कर्मणि त्वध्वर्योरर्थविवक्षा विद्यते बोधश्च सम्भवतीत्याशङ्क्य दोषान्तरं सूत्रयति—

'अविज्ञेयात्' ( पू० मी० १ । २ । ३८ ) इति ॥

केषाञ्चिन्मन्त्राणामर्थो विज्ञातुं न शक्यते । तद्यथा—'अम्यक्सा त इन्द्र ऋष्टिरस्मे' इत्येको मन्त्रः । 'सृण्येव जर्भरी तुर्फरीतू' इत्यपरो मन्त्रः ।

नन्वीदृशमन्त्रार्थबोधायैव निगमनिरुक्तव्याकरणानि प्रवृत्तानीत्याङ्क्य दोषान्तरं सूत्रयति—

'अनित्यसंयोगान्मन्त्रानर्थक्यम्' ( पू० मी० १ । २ । ३९ ) इति ॥

'किं ते कृण्वन्ति कीकटेषु' ( ऋ० सं० ३ । ५३ । १४ ) इति मन्त्रे कीकटो नाम जनपद आम्नातः । तथा नैचाशाखं नाम नगरं प्रमगन्दो नाम राजा इत्येतेऽर्था अनित्या आम्नाताः । तथा च सति प्राक् प्रमगन्दान्नायं मन्त्रो भूतपूर्व इति गम्यते ।

तदेवमेतैस्तदर्थशास्त्रादिभिर्हेतुभिर्मन्त्राणामर्थप्रत्यायनार्थत्वं नास्ति किन्तूच्चारणाददृष्टार्था एवेति पूर्वपक्षः ।

तत्र सिद्धान्तं सूत्रयति—

'अविशिष्टस्तु वाक्यार्थः' ( पू० मी० १ । २ । ४० ) इति ॥

तुशब्देन मन्त्राणामदृष्टार्थमुच्चारणमात्रं वारयति । क्रियाकारकसम्बन्धेन प्रतीयमानो वाक्यार्थो लोकवेदयोरविशिष्टः । तथा सति यथा लोकेऽर्थप्रत्यायनायैव वाक्यमुच्चार्यते तथा वैदिकयागप्रयोगेऽपि द्रष्टव्यम् । मन्त्रेण प्रकाशितस्त्वर्थोऽनुष्ठातुं शक्यते न त्वप्रकाशितः । तस्मान्मन्त्रोच्चारणस्यार्थप्रकाशनरूपं दृष्टमेव प्रयोजनम् ।

ननु 'अभ्रिरसि नारिरसि' इत्यारभ्य 'त्रैष्टुभेन त्वा छन्दसा ददे' ( तै० सं० ४ । १ । १ । ३ ) इति मन्त्र आम्नातः । तेनैव मन्त्रेण प्रतीतेऽप्यभ्र्यादाने पुनर्ब्राह्मणे 'तां चतुर्भिरभ्रिमादत्ते' ( तै० सं० ५ । १ । १ । ४ ) इति विधीयते । तदेतद्विधानं त्वत्पक्षे व्यर्थं स्यादित्याशङ्क्योत्तरं सूत्रयति—

'गुणार्थेन पुनः श्रुतिः' ( पू० मी० १ । २ । ४१ ) इति ॥

मन्त्रेण प्रतीतस्यैवार्थस्य ब्राह्मणे यत्पुनः श्रवणं तदेतच्चतुः-संख्यालक्षणगुणविधानार्थत्वेनोपयुज्यते । एतस्य विधानस्याभावे चतुर्णां मन्त्राणां मध्ये येन केनाप्येकेनाभ्रिरादीयेत ।

ननु 'इमामगृभ्णन्रशनामृतस्य' ( तै० सं० ४ । १ । २ । १ ) इति 'अश्वाभिधानीमादत्ते' (तै० सं० ५ । १ । २ । १) इत्यत्र मन्त्रसामर्थ्यादेव प्राप्तस्य रशनादानस्य पुनर्ब्राह्मणवाक्यं विनियोजकमाम्नायते । तदेतत्त्वन्मते व्यर्थमित्याशङ्क्योत्तरं सूत्रयति—

'परिसंख्या' ( पू० मी० १ । २ । ४२ ) इति ॥

गर्दभाभिधानीं नादत्त इति निषेधः परिसंख्या । तदर्थमिदं ब्राह्मणवाक्यम् । ननु परिसंख्यायां त्रयो दोषाः प्राप्नुयुः । आदत्त इति रशनादानलक्षणं स्वार्थं जह्यात् । निषेधलक्षणः परार्थोऽस्य शब्दस्य कल्प्येत । रशनात्वसामान्येन च प्राप्तं गर्दभरशनाया आदानं बाध्येतेति त्रयो दोषाः ।

मैवम् । गर्दभरशनाया अप्राप्तत्वात् । तथा हि—त्वत्पक्षे प्रकरणपाठान्यथानुपपत्त्या 'मन्त्रेणानेनादानं कुर्यात्' इति वाक्यं परिकल्प्यते । तेन च वाक्येन मन्त्रादानयोः सम्बन्धे सति पश्चात् 'किं विषयकमादानम्' इति वीक्षायां लिङ्गाद्रशनामात्रस्यादानमुपेत्य गर्दभरशनायाः प्राप्तिर्वक्तव्या । सा च विलम्ब्यत इत्यश्वाभिधानीमिति प्रत्यक्षेण वाक्येन । मन्त्रादानयोः सम्बन्धे सति लिङ्गाद्रशनामात्रे प्राप्तमादानमश्वाभिधानीमिति श्रुत्या विशेषे व्यवस्थाप्यते । ततो मन्त्रस्य निराकाङ्क्षत्वाद्गर्दभरशनाया अप्राप्तत्वान्नास्ति प्राप्तबाधः । अत एव निषेधार्थो न कल्प्यते । विध्यर्थश्च न त्यज्यते । तत्र कुतो दोषत्रयम् । ईदृशमप्राप्तिरूपमेव गर्दभरशनाया निवारणमभिप्रेत्य परिसंख्येति सूत्रितम् ।

ननु 'उरु प्रथस्व' इति, प्रथयति इति ब्राह्मणस्य वैयर्थ्यं तदवस्थमेवेत्याशङ्क्योत्तरं सूत्रयति—

'अर्थवादो वा' ( पू० मी० १ । २ । ४६ ) इति ॥

वाशब्दो वैयर्थ्यं वारयति । अस्त्यत्रार्थवादः—'यज्ञपतिमेव तत्प्रथयति' इति तेनार्थवादेन सम्बन्धाय ब्राह्मणे विधिः पठ्यते ।

ननु प्रथयतीत्यनेनैव विधिशब्देन प्रथनमनूद्य यज्ञपतिमेवेत्यादिनार्थवादेन स्तोव्यम् । तदेव तु प्रथनं कुतः प्राप्तमित्याशङ्क्योत्तरं सूत्रयति—

'मन्त्राभिधानात्' * ( पू० मी० १ । २ । ४४ ) इति ॥

अध्वर्युः पुरोडाशमुद्दिश्य मन्त्रे प्रथस्वेत्येवमभिधत्ते । तस्मादभिधानादध्वर्युकर्तृकं प्रथनं प्राप्तम् । यथा लोके यः कुर्विति ब्रूते स कारयत्येव तथात्रापि यः प्रथस्वेति ब्रूते स प्रथयत्येव ।

यदुक्तं 'अग्निर्मूर्द्धा दिवः' इति पाठक्रमनियमाददृष्टार्थो मन्त्र इति तत्रोत्तरं सूत्रयति—

'अविरुद्धं परम्' ( पू० मी० १ । २ । ४५ ) इति ॥

परं द्वितीयसूत्रोक्तमस्मत्पक्षेऽप्यविरुद्धम् । न हि वयं पाठक्रमनियमाददृष्टं निवारयामः । किं तर्हि, मन्त्रोच्चारणेन जायमानमर्थप्रत्यायनं दृष्टप्रयोजनत्वान्नोपेक्षितव्यमित्येतावदेव ब्रूमः ।

ननु 'प्रोक्षणीरासादय' ( वा० सं० १ । २८ ) इति मन्त्रो बुद्धमेवार्थं शास्ति । तदयुक्तम् । सोपानत्कस्योपानदन्तरासम्भवादित्युक्तमिति चेत् तस्य परिहारं सूत्रयति—

† 'सम्प्रैषकर्मणो गर्हानुपलम्भः संस्कारत्वात्' ( पू० मी० १ । २ । ४६ ) इति ॥

सम्प्रैषकर्मणो गर्हा त्वदुक्तदोषो नोपलभ्यते । बुद्धस्याप्यर्थस्य

---

* कलिकातामुद्रितशबरभाष्यपुस्तके तु 'मन्त्राभिधानात्' इत्यस्य भाष्यग्रन्थत्वमेवोपलभ्यते ।

† कलिकातामुद्रितशबरभाष्यपुस्तके तु 'सम्प्रैष कर्मगर्हानुपलम्भः' इत्येव पाठ उपलभ्यते ।

मन्त्रेणैवानुस्मरणे सति नियमाद्दृष्टलक्षणस्य संस्कारस्य सद्भावात् ।

यच्चोक्तम् 'चत्वारि शृङ्गा' इति मन्त्रोऽसन्तमेवार्थमभिधत्त इति तस्योत्तरं सूत्रयति—

'अभिधानेऽर्थवादः' ( पू० मी० १ । २ । ४७ ) इति ॥

असतोऽर्थस्याभिधाने वाक्ये गौणस्यार्थस्योक्तिर्द्रष्टव्या । तद्यथा-चत्वारो होत्रध्वर्यूद्गातृब्रह्माणोऽस्य कर्मणः शृङ्गाणि । प्रातःसवनादयस्त्रयः पादाः । पत्नीयजमानौ द्वे शीर्षे । गायत्र्यादीनि सप्त छन्दांसि हस्ताः । ऋग्वेदादिभिस्त्रिभिर्वेदैस्त्रेधा बन्धनम् । कामान्वर्षतीति वृषभः । रोरवीति स्तोत्रशस्त्रादिशब्दान् पुनः पुनः करोति । महो देवः सोऽयं प्रौढो यज्ञरूपो देवो मर्त्यानाविवेशेति मनुष्या एवात्राधिकारिणः । लोकेऽप्येवं गौणप्रयोगा दृश्यन्ते । चक्रवाकस्तनी हंसदन्तावली काशवस्त्रा शैवलकेशिनीत्येवं नद्याः स्तूयमानत्वात् । एवम् 'ओषधे त्रायस्व' 'शृणोत ग्रावाणः' इत्याद्यचेतनसम्बोधनानि स्तुतिपरत्वेन योजनीयानि । यस्मिन् वपन ओषधिरपि त्रायते तत्र वपनकर्ता त्रायत इति किमु वक्तव्यम् ? तथा ग्रावाणोऽपि प्रातरनुवाकं शृण्वन्ति किमुत विद्वांसो ब्राह्मणा इत्यामन्त्रणाभिप्रायः ।

योऽपि 'अदितिर्द्यौरदितिरन्तरिक्षम्' इति विप्रतिषेध उक्तस्तस्योत्तरं सूत्रयति—

'गुणाद(वि) प्रतिषेधः स्यात्' (पू० मी० १ । २ । ४८) इति ॥

यथा त्वमेव पिता त्वमेव मातेत्यत्र गौणप्रयोगादविरोधस्तद्वत् । एवमेकरुद्रदेवत्ये कर्मण्येको रुद्रः शतरुद्रदेवत्ये शतं रुद्रा इत्यविरोधः ।

यदप्युक्तं स्वाध्यायमधीयानो माणवकः पूर्णिकाया अवहतिं न प्रकाशयितुमिच्छतीति तत्रोत्तरं सूत्रयति—

'विद्यावचनमसंयोगात्' (पू० मी० १ । २ । ४९ ) इति ॥

वेदविद्याग्रहणकालेऽर्थस्य यदवचनं तदयज्ञसंयोगादुपपद्यते ।

न हि पूर्णिकाया अवघातो यज्ञसंयुक्तः । नापि माणवको यज्ञमनुतिष्ठति । अतो यज्ञानुपकारान्न तत्रार्थविवक्षा ।

यदप्युक्तं 'अम्यक्सा त इन्द्र' 'सृण्येव जर्भरी तुर्फरीतू' इत्यादावर्थस्य ज्ञातुमशक्यत्वान्नास्त्येवार्थं इति तत्रोत्तरं सूत्रयति—

'सतः परमविज्ञानम्' । ( पू० मी० १ । २ । ५० ) इति ॥

विद्यमान एवार्थः प्रमादालस्यादिभिर्न विज्ञायते । तेषां निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थः परिकल्पयितव्यः । तद्यथा—'जर्भरी तुर्फरीतू' इत्येवमादीन्यश्विनोरभिधानानि । तेषु हि द्विवचनान्तत्वं लक्ष्यते । आश्विनं चेदं सूक्तम् 'अश्विनोः काममप्राः' ( ऋ० सं० १० । १०६ । ११ ) इति दर्शनात् । एतदेवाभिप्रेत्य निरुक्तकारो व्याचष्टे । 'जर्भरी भर्तारौ इत्यर्थः तुर्फरीतू हन्तारौ' इत्यर्थः ( निरु० १३ । ५ ) इति । एवम् 'अस्यक्सा ते' इत्यादावप्युन्नेयम् ।

यदप्युक्तं प्रमगन्दाद्यनित्यार्थसंयोगान्मन्त्रस्यानादित्वं न स्यादिति तत्रोत्तरं सूत्रयति—

'उक्तश्चानित्यसंयोगः' ( पू० मी० १ । २ । ५१ ) इति ॥

प्रथमपादस्यान्तिमाधिकरणे सोऽयमनित्यसंयोगदोष उक्तः परिहृतः । तथा हि—तत्र पूर्वपक्षे वेदानां पौरुषेयत्वं वक्तुं काठकं कालापकमित्यादिपुरुषसम्बन्धाभिधानं हेतूकृत्य—

'अनित्यदर्शनाच्च' ( पू० मी० १ । १ । २८ ) इति ॥

इति हेत्वन्तरं सूत्रितम् । तस्यायमर्थः—'बबरः प्रावाहणिरकामयत' ( तै० सं० ७ । १ । १० । २ ) इति, अनित्यानां बबरादीनामर्थानां दर्शनात्ततः पूर्वमसत्वात् पौरुषेयो वेद इति । तस्योत्तरमेवं सूत्रितम्—

'परं तु श्रुतिसामान्यमात्रम्' ( पू० मी० १ । १ । ३१ ) इति ॥

तस्यायमर्थः—यत् काठकादिसमाख्यानं तत् प्रवचननिमित्तम् । यत्तु परं बबराद्यनित्यदर्शनं तच्छब्दसामान्यमात्रम् । न तु तत्रानित्यो बबराख्यः कश्चित्पुरुषो विवक्षितः । किन्तु बबर इति शब्दानुकृतिः ।

तथा सति 'बबर' इति शब्दं कुर्वन् वायुरभिधीयते। स च प्रावाहणिः। प्रकर्षेण वहनशीलः । एवमन्यत्राप्यूहनीयम् । तदेवं कस्यचिदपि दोषस्यासम्भवाद् विवक्षितार्था मन्त्राः स्वार्थप्रकाशनायैव प्रयोक्तव्याः।

नन्वर्थप्रकाशनार्थत्वे सति दृष्टं प्रयोजनं लभ्यत इति युक्तिमात्र-सिद्धमुच्यते । न त्वेतदुद्बलकं किञ्चिच्छ्रौतं लिङ्गं पश्याम इत्याशङ्क्योत्तरं सूत्रयति—

'लिङ्गोपदेशश्च तदर्थवत्' (पू० मी० १ । २ । ५२ ) इति ॥

'आग्नेय्याग्नीध्रमुपतिष्ठेत' इति श्रूयते । तस्यामर्थः-अग्निर्देवता यस्या ऋचः सेयमाग्नेयी। तयाऽऽग्नीध्रस्थानमुपतिष्ठेतेति। अत्र ह्युपस्थान-मुपदिशद्ब्राह्मणम् 'अग्ने नय' (ऋग्वेद १०।१८९।१) इत्यनयोपतिष्ठेतेति मन्त्रप्रतीकं पठित्वा नोपदिशति, किन्तु आग्नेयीत्वलिङ्गेनोपदिशति। यदा यस्यामृच्यग्निः प्राधान्येन प्रतिपाद्यते तदा तस्या ऋचोऽग्निर्देवता भवति, तथा सत्याग्नेय्येति देवतावाचितद्धितान्तनिर्देश उपपद्यते । तस्मादयमुपदेशस्तन्मन्त्रवाक्यमर्थवदिति बोधयति। अतो विवक्षितार्थ-त्वादर्थप्रत्यायनार्थं प्रयोगकाले मन्त्रोच्चारणम् ॥

तस्मिन्नेव विवक्षितार्थत्वे लिङ्गान्तरं सूत्रयति—

'ऊहः' ( पू० मी० १ । २ । ५३ ) इति ॥

प्रकृतावाम्नातस्य मन्त्रस्य विकृतौ समवेतार्थत्वाय तदुचित-पदान्तरस्य प्रक्षेपेण पाठ ऊहः । तद्यथा—'अन्वेनं माता मन्यतामनु पितानु भ्राता' ( शत० २ । ३ । ४ । २२ ) इति प्राकृतः पशुविषयो मन्त्रपाठः। तस्य च मन्त्रस्य विकृतौ पशुद्वये सति 'अन्वेनौ माता मन्यताम्' इत्यूहः। पशुबहुत्वे सति 'अन्वेनान् माता मन्यताम्' इत्यूहः कर्तव्यः। एतन्मन्त्रव्याख्यानरूपं ब्राह्मणमेवमाम्नायते—'न माता वर्धते न पिता' इति । तत्रेदं चिन्तनीयम्—किमत्र शारीरवृद्धिर्निषिध्यते, आहो स्विच्छब्दवृद्धिरिति। एकवचनान्तस्य मातृशब्दस्य मातराविति द्विवचनान्तत्वेन वा मातर इति बहुवचनान्तत्वेन वा प्रयोगः शब्दवृद्धिः। तत्र न तावच्छरीरवृद्धिर्निषेद्धुं शक्यते बाल्यकौमारयौवनादिवयोऽनु-

सारेण तद्वृद्धेः प्रत्यक्षत्वात्। अतः शब्दवृद्धिनिषेध एव परिशिष्यते। मातृशब्दपितृशब्दयोर्विशेषाकारेण वृद्धिनिषेधादितरस्यैनमिति शब्दस्यार्थानुसारिणी वृद्धिः सूचिता भवति। तत्र यद्यर्थो न विवक्ष्येत, तदा पशुद्वित्वे द्विवचनं पशुबहुत्वे बहुवचनं च कथमूह्येत। तस्माद्विवक्षितार्था मन्त्राः।

तस्मिन्नेवार्थे लिङ्गान्तरं सूत्रयति—

'विधिशब्दाच्च' ( पू० मी० १। २। ५४ ) इति॥

मन्त्रव्याख्यानरूपो ब्राह्मणगतः शब्दो विधिशब्द इत्युच्यते। स चैवमाम्नायते। 'शतं हिमाः शतं वर्षाणि जीव्याः स्मेत्येवैतदाह' ( शत० ब्रा० २। ३। ४। २१)। इति। तत्र 'शतं हिमाः' इत्येतद् व्याख्येयमन्त्रस्य प्रतीकम्। अवशिष्टं तु तस्य तात्पर्यव्याख्यानम्। मन्त्रस्याविवक्षितार्थत्वे तु किं नाम तात्पर्यं मन्त्रे व्याख्यायेत। तस्माद्विवक्षितार्था मन्त्राः प्रयोगकाले स्वार्थप्रकाशनायैवोच्चारयितव्याः।

तत्रसंग्रहश्लोकौ—( जै० न्या० १। २। ४ )॥

मन्त्रा उरु प्रथस्वेति किमदृष्टैकहेतवः।
यागेषूत पुरोडाशप्रथनादेश्च भासकाः॥
ब्राह्मणेनापि तद्भानान्मन्त्राः पुण्यैकहेतवः।
न तद्भानस्य दृष्टत्वाद् दृष्टं वरमदृष्टतः॥ इति॥

---

नन्वस्तु मन्त्रभागस्य प्रामाण्यम्। ब्राह्मणभागस्य तु न तद्युज्यते। तथा हि—द्विविधं ब्राह्मणम्। विधिरर्थवादश्चेति। तथा चापस्तम्बः—'कर्मचोदना ब्राह्मणानि—ब्राह्मणशेषोऽर्थवादः' ( आ० प० ३२। ३३ ) इति। विधिरपि द्विविधः। अप्रवृत्तप्रवर्तनमज्ञातज्ञापनं चेति। 'आग्नावैष्णवं पुरोडाशं निर्वपति दीक्षणीयम्' ( ऐतरेय ब्रा० १। १ ) इत्याद्याः कर्मकाण्डगतविधयोऽप्रवृत्तप्रवर्तकाः। 'आत्मा वा इदमेक एवाग्र आसीत्' ( ऐत० आ० २। ४। १ ) इत्यादयो ब्रह्मकाण्डगता अज्ञातज्ञापकाः। तत्र कर्मकाण्डगतानां 'जर्तिलयवाग्वा वा जुहुयाद् गवीधुकयवाग्वा वा' ( तै० सं० ५। ४। ३। २ ) इत्यादिविधीनां

नास्ति प्रामाण्यम् । प्रवृत्त्ययोग्यद्रव्यविधानेन सम्यगनुभवसाधनत्वाभावात् । अयोग्यत्वञ्च वाक्यशेषे समाम्नातम् 'अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च' ( तै० सं० ५ । ४ । ३२ ) इति । तत्र ह्यारण्यतिलानामारण्यगोधूमानां चाहुतिद्रव्यत्वं निषिद्धम् । तस्माद्बाधितो जर्तिलादिविधिरप्रमाणम् ॥ एवमैतरेयतैत्तिरीयादिब्राह्मणेषु 'तत्तन्नादृत्यं' ( तै० ब्रा० १ । १ । ८ ) 'तत्तथा न कार्यम्' ( ऐ० ब्रा० ५ । ३१ ) इति वाक्याभ्यां बहवो विधयो निषिद्धाः॥ अपि चैतरेयब्राह्मणेऽनुदितहोमं बहुधा निन्दित्वा 'तस्मादुदिते होतव्यम्' ( तै० ब्रा० २ । १ ) इत्यसकृन्निगमितम् । तैत्तिरीयाश्च तथैवामनन्ति 'यदनुदिते सूर्ये प्रातर्जुहुयादुभयमेवाग्नेयं स्यात् उदिते सूर्ये प्रातर्जुहोति' ( तै० ब्रा० २ । १ । २ । ७ ) इति । पुनरपि त एवोदितहोमे दोषमामनन्ति—'यदुदिते सूर्ये प्रातर्जुहुयाद्यथातिथये प्रद्रुताय शून्यायावसथायाहार्यं हरति तादृगेव तत्' ( तै० ब्रा० २ । १ । २ । १२ ) इति । तथैव 'अतिरात्रे षोडशिनं गृह्णाति' इति विधिः 'नातिरात्रे षोडशिनं गृह्णाति' इति निषेधेन बाध्यते, ज्योतिष्टोमादिष्वप्यनुष्ठानानन्तरमेव स्वर्गादिफलं नोपलभ्यते । न हि भोजनानन्तरं तृप्तेरनुपलम्भोऽस्ति । तस्मात् कर्मविधिषु प्रामाण्यं दुःसम्पादम् ॥

अज्ञातज्ञापकेषु ब्रह्मविधिष्वपि परस्परविरोधान्नास्ति प्रामाण्यम् । 'आत्मा वा इदमेक एवाग्र आसीत्' ( ऐ० आ० २ । ४ । १ ) इत्यैतरेयिण आमनन्ति । 'असद्वा इदमग्र आसीत्' ( तै० आ० ८ । ७ ) इति तैत्तिरीयकाः । सोऽयं विरोधः । तस्माद्वेदे विधिभागः सर्वोऽप्यप्रमाणमिति प्राप्ते ब्रूमः ॥ —

अस्त्वेवं जर्तिलादिविधेरप्रामाण्यं तदर्थस्याननुष्ठेयत्वात् । अनुष्ठेयस्त्वर्थ उपरितने 'अजाक्षीरेण जुहोति' इति वाक्ये विधीयते । तत्प्रशंसार्थमत्र जर्तिलादिकमनूद्य निन्द्यते । यथा गवामश्वानां च प्रशंसार्थम 'अपशवो वा अन्ये गोअश्वेभ्यः' इति वाक्येनार्थवादरूपेणाजादीनां पशुत्वं निन्द्यते तद्वत् ॥ एवं तर्ह्यजादेर्यथा वस्तुतः पशुत्वमस्ति तथा जर्तिलादिविधिरत्र निन्द्यमानोऽपि क्वचिच्छाखान्तरे भवेदिति

चेत् । भवतु नाम । प्रामाण्यमपि तच्छाखाध्यायिनं प्रति भविष्यति । यथा–गृहस्थाश्रमे निषिद्धमपि परान्नभोजनमाश्रमान्तरेषु प्रामाणिकं, तद्वत् ॥ अनेन न्यायेन सर्वत्र परस्परविरुद्धौ विधिनिषेधौ पुरुषभेदेन व्यवस्थापनीयौ । यथा मन्त्रेषु पाठभेदः शाखाभेदेन व्यवस्थितस्तद्वत् । तैत्तिरीयाः 'वायवः स्थोपायवः स्थ' ( तै० सं० १।१।१ ) इति मन्त्रमामनन्ति । वाजसनेयिनस्तु 'उपायवः स्थ' ( वा० सं० १ । १ ) इत्येतं भागं नामनन्ति । प्रत्युत शतपथब्राह्मणे (१ । ७ । १ । ३) स भागोऽनूद्य निराकृतः ॥ तथा सूक्तवाकमन्त्रे शाखान्तरपाठं निराकृत्य पाठान्तरं तैत्तिरीया आमनन्ति । "यद् ब्रूयात् सूपावसाना च स्वध्यवसाना चेति प्रमायुको यजमानः स्यात्" (तै० सं० २ । ६ । ९ । ६) इति निराकरणम् । 'सूपचरणा च स्वधिचरणा च इत्येव ब्रूयात्' इति पाठान्तरोपदेशः । तत्रानुष्ठातृपुरुषभेदेन व्यवस्था । तद्वद्विधिषु द्रष्टव्यम् ।। षोडशिग्रहणादिदूषणं त्वश्रुतमीमांसावृत्तान्तस्य तवैव शोभते । पूर्वमीमांसायां दशमाध्यायस्याष्टमपादे ( पू० मी० १०।८।६ ) षोडशिनो ग्रहणाग्रहणविकल्पो निर्णीतः ॥ द्वितीयस्याध्ययायस्य प्रथमपादे ( पू० मी० २।१।५ ) कालान्तरभाविफलसिद्ध्यर्थमपूर्वं निर्णीतम् ॥ तदुत्तरमीमांसायां प्रथमाध्यायस्य चतुर्थपादे 'कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः' (उ० मी० १।४।१४) इत्यस्मिन् सूत्रे जगत्कारणे परमात्मनि श्रुतेर्विप्रतिपत्तिर्निराकृता । द्वितीयस्याध्यायस्य प्रथमपादारम्भाधिकरणे तु 'असद्व्यपदेशान्नेति चेन्न, धर्मान्तरेण वाक्यशेषात्' (उ० मी० २ । १ । १७)इति सूत्रे तैत्तिरीयवाक्यगतस्य असच्छब्दस्य न शून्यपरत्वं किन्त्वव्यक्तावस्थापरत्वमिति निर्णीतम् ॥ तथा जैमिनिश्चोदनासूत्रे विधिवाक्यं धर्मे प्रमाणमिति प्रतिज्ञायौत्पत्तिकसूत्रे (पू० मी० १।१।२-५) तत्प्रामाण्यं समर्थयामास । व्यासोऽपि शास्त्रयोनित्वसूत्रे ( उ० मी० १। १ । ३) वेदान्तानां ब्रह्मणि प्रामाण्यं प्रतिज्ञाय 'तत्तु समन्वयात्' (उ०मी० १।१।४ ) इत्यादिसूत्रैः समर्थयामास । तस्मादमीमांसकस्य तव पूर्वोक्तस्थाणवन्धन्यायो दुष्परिहारः । अतो विधिभागस्य प्रामाण्यं सुस्थितम् ।

---

अर्थवादभागस्य प्रामाण्यं महता प्रयत्नेन जैमिनिः समर्थयामास । तत्सूत्राणि व्याख्यास्यन्ते (पू० मी० १ । २ । १-१८) । तत्र पूर्वपक्षं सूत्रयति—

'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां, तस्मादनित्यमुच्यते' ( पू० मी० १ । २ । १ ) इति ॥

आम्नायस्य सर्वस्य क्रियाप्रतिपादनाय प्रवृत्तत्वादक्रियाप्रतिपादकानामर्थवादानां नास्ति कश्चिद् विवक्षितः स्वार्थः । ते चार्थवादा एवमाम्नायन्ते—'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' ( तै० सं० १ । ५ । १ । १), 'स आत्मनो वपामुदखिद्रत्' ( तै० सं० २ । १ । १ । ४ ), 'देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्' ( तै० सं० ६ । १ । ५ । १ ) इति । यस्मादीदृशस्य वाक्यस्य विवक्षितार्थः कश्चिदपि नास्ति तस्मादिदं वाक्यमनित्यमुच्यते । यद्यप्यनादित्वात् स्वरूपेणानित्यत्वं नास्ति, तथापि धर्मावबोधनलक्षणस्य नित्यकार्यस्याभावादनित्यैः काव्यालापैः समानत्वादप्रमाणमित्यर्थः ।

ननूदाहृतानामर्थवादानामनुष्ठेये धर्मे प्रामाण्याभावेऽपि स्वार्थे प्रामाण्यमस्तु तत्प्रत्यायकत्वेन स्वतःप्रामाण्यस्यापवदितुमशक्यत्वादित्याशङ्क्यान्येषु केषुचिदर्थवादेषु मानान्तरविरोधदर्शनादप्रामाण्ये सति तद्दृष्टान्तेन सर्वेषामप्यर्थवादानामप्रामाण्यमित्यभिप्रेत्य सूत्रयति—

'शास्त्रदृष्टविरोधाच्च' ( पू० मी० १ । २ । २ ) इति ॥

शास्त्रविरोधो दृष्टविरोधः शास्त्रदृष्टविरोध इति त्रिविधो विरोधोऽर्थवादेषूपलभ्यते । तथा हि—'स्तेनं मनः' 'अनृतवादिनी वाक्' इत्यत्र श्रूयमाणं मानसं चौर्यं वाचिकमनृतवदनं च प्रतिषेधशास्त्रेण विरुद्धम् । 'तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिस्तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूमः' इत्यत्र दृष्टविरोधः । तथा 'न चैतद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वा' इत्यत्रापि प्रत्यक्षविरोधः । 'को हि तद्वेद यद्यमुष्मिंल्लोकेऽस्ति वा, न वा' ( तै० सं० ६ । १ । १ । १ ) इत्यत्र शास्त्रदृष्टविरोधः । 'स्वर्गकामो यजेत' इत्यादिशास्त्रे ह्यामुष्मिकं फलं दृश्यते । तस्माद्विरो-

धादर्थवादानामप्रामाण्यम् ।

ननु 'सोऽरोदीत्' इत्यादीनां निष्प्रयोजनत्वात् 'स्तेनं मनः' इत्यादीनां च विरोधादप्रामाण्येऽपि, फलप्रतिपादकानामर्थवादानां तदुभयवैलक्षण्यादस्तु प्रामाण्यमित्याशङ्क्योत्तरं सूत्रयति—

'तथा फलाभावात्' (पू० मी० । १ । २ । ३) इति ॥

यथा मानान्तरविरुद्धमर्थवादैरुक्तं तथा फलमप्यविद्यमानमेव तैरुच्यते । तथा हि। गर्गत्रिरात्रं प्रकृत्य श्रूयते—'शोभतेऽस्य मुखं य एवं वेद' इति । दर्शपूर्णमासयोर्वेदाभिमर्शनं प्रकृत्य श्रूयते—'आस्य प्रजायां वाजी जायते य एवं वेद' (तै० सं० १ । ७ । ४) इति । न च वयं वेदितॄणां तत्फलमुपलभामहे ।

नन्वैहिकफलवाक्यानां विसंवादादप्रामाण्येऽप्यामुष्मिकफलवाक्यानामस्तु प्रामाण्यमित्याशङ्क्योत्तरं सूत्रयति—

'अन्यानर्थक्यात्' (पू० मी० । १ । २ । ४) इति ॥

एवं हि श्रूयते—'पूर्णाहुत्या सर्वान् कामानवाप्नोति' 'पशुबन्धयाजी सर्वाँल्लोकानभिजयति' 'तरति मृत्युं, तरति पाप्मानं, तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' इति । तत्राग्न्याधेयगतया पूर्णाहुत्या सर्वकामप्राप्तेरन्यान्यग्निहोत्रादीन्युत्तरकालीनान्यनर्थकानि स्युः । तथा निरूढपशुबन्धानुष्ठानेन सर्वलोकाभिजयाज्ज्योतिष्टोमादीनामानर्थक्यम् । अध्ययनकालीनेनैवाश्वमेधवेदनेन ब्रह्महत्यादितरणात्तदनुष्ठानं च व्यर्थं स्यात् । तस्मादामुष्मिकफलवाक्यानामप्यप्रामाण्यम् ॥

ननु मा भूत् फलवाक्यानां प्रामाण्यम् । तथापि निषेधवाक्येषु विरोधानुपलम्भादस्तु प्रामाण्यमित्याशङ्क्योत्तरं सूत्रयति—

'अभागिप्रतिषेधात्' (पू० मी० १ । २ । ५) इति ॥

'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि' इत्यत्रान्तरिक्षस्य च दिवश्च प्रतिषेधभागित्वं नास्ति, तत्र चयनप्रसङ्गस्यैवाभावात् ।

मा भूत्तर्हि निषेधानां प्रामाण्यम् । 'बबरः प्रावाहणिरकामयत'

इत्यादीनां पूर्वपुरुषवृत्तान्ताभिधायिनां विरोधानुपलम्भादस्तु प्रामाण्यमित्याशङ्क्योत्तरं सूत्रयति—

'अनित्यसंयोगात्' ( पू० मी० १ । २ । ६ ) इति ॥

बबरादिरूपेणानित्येनार्थेन संयोगे सत्यस्य वाक्यस्य ततः पूर्वमभावात्कालिदासादिवाक्यवत्पौरुषेयत्वं प्रसज्येत ।

किं बहुना । सर्वथापि नास्त्येवार्थवादानां प्रामाण्यमिति पूर्वपक्षः ।

सिद्धान्तं सूत्रयति—

'विधिना त्वेकवाक्यत्वात्, स्तुत्यर्थेन विधीनां स्युः' ( पू० मी० १ । २ । ७ ) इति ॥

तुशब्दोऽर्थवादानामप्रामाण्यं वारयति। 'वायुर्वै क्षेपिष्ठा' इत्येवमादीनामर्थवादानां 'वायव्यं श्वेतमालभेत' ( तै० सं० २ । १ । १ । १ ) इत्यादिना विधिना सहैकवाक्यत्वादस्ति धर्मे प्रामाण्यम् । न च विधिवाक्यस्यार्थवादनैरपेक्ष्येण पदान्वयसम्पूर्तेस्तत्रार्थवादानां नास्त्युपयोग इति शङ्कनीयम् । ते ह्यर्थवादाः पुरुषप्रवृत्तिमाकांक्षतां विधीनां स्तुत्यर्थत्वेनोपयुक्ताः स्युः । स्तुत्या च प्रलोभितः पुरुषस्तत्र प्रवर्तते ।

नन्वर्थवादानां प्रमादपठितत्वेनोपेक्षणीयत्वात् किमनेनैकवाक्यताप्रयासेनेत्याशङ्क्याह—

'तुल्यं च साम्प्रदायिकम्' ( पू० मी० १ । २ । ८ ) इति ॥

अनध्यायवर्जनादिनियमपुरःसरं गुरुसम्प्रदायादध्ययनं यत्तत् साम्प्रदायिकम्। तच्च विधीनामर्थवादानां च समानम् । तस्माद्विधिवदेतेषामपि प्रमादपाठो न भवति ॥

ननु 'शास्त्रदृष्टविरोधाच्च' इत्येवमर्थवादेष्वनुपपत्तिरुक्तेत्याशङ्क्याह—

'अप्राप्ता चानुपपत्तिः, प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येते' (पू० मी० १ । २ । ९ ) इति ॥

'स्तेनं मनः' इत्यादौ शास्त्रविरोधाद्यनुपपत्तिरप्रासा, प्रयोगस्यानुक्तत्वात्। प्रयोगे हि स्तेयादीनामुच्यमाने शास्त्रविरोधः स्यात्। न चात्र 'स्तेयं कर्तव्यम्' इति प्रयोग उच्यते। किं तु स्तेयशब्दार्थ एवोच्यते। न च [ स्तेय ] शब्दार्थः प्रयोगभूतः। तस्माच्छब्दार्थवचनमात्रेण शास्त्रविरोधाभावादयमर्थवाद उपपन्न एव॥

ननु 'स्तुत्यर्थेन विधीनां स्युः' इति यदुक्तं, तदसत्, वैयधिकरण्यात्। 'वेतसशाखया चावकाभिश्च [ अग्निं ] वि कर्षत्यापो वै शान्ताः' ( तै० सं० ५।४।४।३ ) इत्यत्र वेतसावके विधीयेते आपश्च स्तूयन्त, इति वैयधिकरण्यमित्याशङ्क्याह—

'गुणवादस्तु' ( पू० मी० १।२।१० ) इति॥

तुशब्दो वैयधिकरण्यदोषं वारयति। गुणवादो ह्यत्र विवक्षितः। यथा लोके कश्मीराभिजनो देवदत्तः कश्मीरदेशेषु स्तूयमानेषु स्तुतमात्मानं मन्यते, एवमत्राप्यद्भ्यो जाते वेतसावके अप्सु स्तुतासु [ते एव] स्तुते भवतः। शान्ताभ्योऽद्भ्यो जातत्वाद् वेतसावके स्वयमपि शान्ते सत्यौ यजमानस्यानिष्टं शमयत इत्येतादृशस्य गुणस्य वादोऽत्राभिप्रेतः।

'सोऽरोदीत्' इत्यत्रापि रजतस्य पतिताश्रुरूपत्वाद् रजतदाने गृहेऽपि रोदनप्रसंगात् 'बर्हिषि रजतं न देयम्' इति तन्निषेधेन विधेयेनार्थवादस्यैकवाक्यत्वम्। तत्र रजतदानाभावे रोदनाभावरूपो गुणोऽत्र विवक्षितः। तेन च गुणेन रजतदाननिवारणरूपो विधिः स्तूयते। यद्यपि रजतस्याश्रुप्रभवत्वमत्यन्तमसत्तथापि यथोक्तनीत्या विधेः स्तुतिः सम्पद्यते।

'य प्रजाकामः पशुकामः स्यात् स एतं प्राजापत्यमजं तूपरमालभेत' ( तै० सं० २।१।१।४ ) इत्ययं विधिः प्रजापतिवपोत्खेदेन स्तूयते। यस्मात् प्रजापतिः स्ववपामप्युत्खिद्याग्नौ प्रहृत्य ततो जातं तूपरमजमात्मार्थमालभ्य प्रजाः पशूंश्च लब्धवांस्तस्मात् प्रजादिसम्पादकोऽयं तूपर इति तूपरगुणस्य वादोऽत्र विवक्षितः।

'आदित्यः प्रायणीयश्चरुः' (तै० सं० ६ । १ । ७) इत्येष विधिः 'दिशो न प्राजानन्' (तै० सं० ६ । १ । ५ । ४) इत्यनेन दिङ्मोहेन स्तूयते । यदियमदितिर्देवता दिङ्मोहमप्यपनीय दिग्विशेषं ज्ञापयति, तदा बहुविधकर्मसमुदायरूपे सोमयागेऽनुष्ठानविषयं भ्रममपनयतीति किमु वक्तव्यम्, इत्येवमदितिदेवतागतस्य गुणस्य वादोऽत्र विवक्षितः । स्वकीयवपोत्खेदो देवयजनाध्यवसानमात्रेण दिङ्मोहश्चेत्युभयमस्तु वा मा वा । सर्वथापि स्तुतिपरत्वमभ्युपगतवताम् (उपगच्छताम्) अस्माकं न किञ्चिद्धीयते । 'शिखा ते वर्धते वत्स गुडूचीं श्रद्धया पिब' इत्यादावविद्यमानेनाप्यर्थेन लोके स्तुतिदर्शनात् ॥

अथ पूर्वपक्षिणा शास्त्रविरोधं दर्शयितुं यदुदाहृतं 'स्तेनं मनोऽनृतवादिनी वाक्' इति तत्रोत्तरं सूत्रयति—

'रूपात्प्रायात्' (पू० मी० १ । २ । ११) इति ॥

'हिरण्यं हस्ते भवत्यथ गृभ्णाति' इत्येतं विधिं स्तोतुमयमर्थवाद उच्यते । यथा लोके किमृषिणा देवदत्त एव पूजयितव्य इत्यत्र देवदत्तपूजां स्तोतुमेवौदासीन्यमृषावुपन्यस्यते न तु पूज्यत्वमृषेर्वारयितुम् । एवमत्रापि हस्ते हिरण्यग्रहणं प्रशंसितुं मनसः स्तेनरूपत्वं वाचोऽनृतवादित्वं चोपन्यस्यते । तत्र गुणवादेन शब्दार्थो योजनीयः । यथा स्तेनाः प्रच्छन्नरूपा एवं मनोऽपीति, प्रच्छन्नरूपत्वमत्र गुणः । प्रायेण वागनृतं वक्तीति प्रायिकत्वं तत्र गुणः । हस्तस्तु न प्रच्छन्नो नाप्यनृतबहुलः । अतो हस्ते हिरण्यधारणं प्रशस्तमिति स्तूयते ।

यदपि दृष्टविरोधाय 'धूम एवाग्नेर्दिवा ददृशे' इत्यादिकमुदाहृतम्, तत्रोत्तरं सूत्रयति—

'दूरभूयस्त्वात्' (पू० मी० १ । २ । १२) इति ॥

'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' इति सायं जुहोति । 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा' (ऐ० ब्रा० ५ । ३ । १; य० सं०, ३ । ९) इति प्रातर्, इत्येतौ विधी स्तोतुं सोऽर्थवादः । यस्मादर्चिर्दिवा न दृश्यते तस्मात् सूर्यमन्त्र एव प्रातः प्रयोक्तव्यः । यस्माद् रात्रावर्चिरेव

दृश्यते तस्मादग्निमन्त्रो रात्रौ प्रयोक्तव्यः। इत्येवं तयोर्मन्त्रयोः स्तुतिः। धूमार्चिषोरदर्शनोपन्यासस्तु दूरभूयस्त्वगुणनिमित्तः। भूयसि हि दूरे पर्वताग्रे वृक्षादयोऽपि न विस्पष्टं दृश्यन्ते। किं तु तृणसादृश्येन तेषां दर्शनाभास एव। तद्वदत्रापि॥

यदप्यन्यदृदृष्टविरोधायैवोदाहृतम् 'न चैतद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वा' इति तत्रोत्तरं सूत्रयति—

'स्त्र्यपराधात् कर्तुश्च पुत्रदर्शनात्' (पू० मी० १।२।१३) इति॥

'प्रवरे प्रव्रियमाणे ब्रूयात्–'देवाः पितर' इत्यस्य विधेः स्तावकोऽयमर्थवादः। यदि यजमानो 'देवाः पितरः' इत्यादिमन्त्रेण प्रवरमनुमन्त्रयेत्–तदानीम् 'अब्राह्मणोऽपि ब्राह्मणो भवेत्' इत्यनुमन्त्रणस्य स्तुतिः। 'न चैतद्विद्मः' इत्येतदज्ञानवचनं दुर्ज्ञानत्वगुणेन तत्र प्रयुज्यते। यत्र स्त्रिया अपराधो भवति तत्र कर्तुरुत्पादयितुर्जारस्यापि पुत्रो दृश्यते। अतः पत्युपपत्योरुभयोः पुत्रदर्शनात् स्वकीयजन्म कीदृशमिति दुर्ज्ञानम्। अनेनाभिप्रायेण प्रयुक्तत्वान्नास्ति तत्र दृष्टविरोधः। न हि तत्र दृश्यमानं स्वब्राह्मण्यमपवदितुं 'न चैतद्विद्मः' इत्युपन्यस्तम्।

यदपि शास्त्रीयदर्शनविरोधायोदाहृतम् 'को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वा' इति तत्रोत्तरं सूत्रयति—

'आकालिकेप्सा' ( पू० मी० १।२।१४ ) इति॥

'दिक्ष्वतीकाशान् करोति' इति प्राचीनवंशस्य द्वारविधिः। तस्य शेषोऽयं 'को हि तद्वेद' इति। धूमाद्युपद्रवपरिहारेण प्रत्यक्षेण फलेन द्वारविधिः स्तूयते। स्वर्गप्राप्तिरूपं तु फलमाकालिकम्। अकाले भवमाकालिकं विप्रकृष्टकालीनं न त्विदानींतनमित्यर्थः। तस्येप्सा प्राप्तुमिच्छा। सा च 'को हि तद्वेद' इत्यनिश्चयोपन्यासे कारणम्। यथा भाविकालीनः पौत्रप्रपौत्रादिवृत्तान्तो निश्चेतुं न शक्यते तद्वत्स्वर्गप्राप्तिर्भाविकालीनेति गुणयोगादनिश्चयोपन्यासः। धूमादिपरिहारस्तु प्रत्यक्षत्वान्निश्चित इत्यभिप्रायः॥

यदप्यन्यदृदृष्टविरोधायोदाहृतम् 'शोभतेऽस्य मुखं य एवं वेद'

इति तत्रोत्तरं सूत्रयति—

'विद्याप्रशंसा' ( पू० मी० १ । २ । १५ ) इति ॥

सोऽयं गर्गत्रिरात्रविधेः शेषः । तद्विषयं वेदनमपि मुखशोभा-हेतुः किमुतानुष्ठानमिति स्तूयते । यथा कर्णाभरणादिना मुखं शोभितं भवति, एवं वेदितुरुत्साहेनैव विकसितं वदनं शोभितमिव शिष्यै-रुद्वीक्ष्यते । अतः शोभासादृश्यगुणयोगात् शोभत इत्युच्यते ।

यदप्यन्यद्विरोधायोदाहृतम् 'आस्य प्रजायां वाजी जायते य एवं वेद' इति सोऽपि वेदानुमन्त्रणविधेः शेषः । अत्रापि कैमुतिक-न्यायेन स्तुतिः पूर्ववद्योजनीया । वेदितुः पुत्रः पितृशिक्षया स्वयमपि विद्वान् भवति । ततः प्रतिग्रहेणान्नं प्राप्नोति । तस्मादीदृशं गुणमभि-प्रेत्य 'वाजी जायते' इत्युक्तम् ।

यदप्यन्यानर्थक्यायोदाहृतम् 'पूर्णाहुत्या सर्वान् कामानवाप्नोति' इति तत्रोत्तरं सूत्रयति—

'सर्वत्वमाधिकारिकम्' ( पू० मी० १ । २ । १६) इति ॥

'पूर्णाहुतिं जुहुयात्' इत्यस्य विधेः शेषोऽयम् । सर्वकामावाप्ति-हेतुत्वात् प्रशस्तेयमाहुतिरिति स्तूयते । यथा 'सर्वे ब्राह्मणा भोजयित-व्याः' इत्यत्र सर्वत्वं स्वगृहागतब्राह्मणविषयम् । एवं पूर्णाहुत्या कर्म-साङ्गत्वे यत्फलं तस्मिन्नधिकारे प्रस्तावे संभावितं तद्विषयमेव सर्वत्वं द्रष्टव्यम् । पूर्णाहुतेरभावे सत्याधानरूपं कर्माङ्गविकलं भवति । तच्च वैकल्यं पूर्णाहुत्या समाधीयत इत्येकः कामः । तस्मिन् समाहिते सत्याहवनीयाद्यग्नयोऽग्निहोत्रादिकर्मसु योग्या भवन्तीत्ययमन्यः कामः । तैश्च कर्मभिस्तत्फलं प्राप्यत इति कामान्तरम् । ईदृशी सर्वकामावा-प्तिराहुत्यन्तरेष्वपि विद्यत इति चेत् । विद्यतां नाम । किं नश्छिन्नम् । न खल्वेतावता पूर्णाहुतिस्तुतेः काचिद्धानिरस्ति ।

ननु पूर्णाहुतेरङ्गभावत्वात्तदीयफलश्रुतेरर्थवादत्वेन स्तावकत्वं भवतु । 'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः' ( पू० मी० ४ । ३ । १ ) इति सूत्रेण निर्णीतत्वात् । पशुबंधवाक्यस्य तु कर्मविधा-

यकत्वात् सर्वलोकाभिजयस्य मुख्यफलत्वादन्यानर्थक्यं दुर्वारमित्याशङ्क्योत्तरं सूत्रयति—

'फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः सारतो वा, फलविशेषः स्यात्' ( पू० मी० १।२।१७ ) इति ॥

पृथिव्यन्तरिक्षद्युलोकेष्वन्यतमलोकाभिजयरूपं फलं पशुबंधकर्मणा निष्पाद्यते । तेषां च पृथिव्यादीनां फलानां कर्मान्तरेण परिमाणाधिक्यं सारत्वं वा संपद्यते । ततः 'फलविशेषः स्याद्' इति नास्त्यानर्थक्यम् । 'लोकवत्' इत्युक्तार्थे दृष्टान्तः । यथा लोके निष्केण खारीपरिमितान् व्रीहीन् विक्रीय निष्कान्तरेण पुनः क्रये सति परिमाणाधिक्यं भवति । यथा वा निष्केण वस्त्रमात्रं लभ्यते निष्कद्वयेन तु सारभूतं दुकूलम् । तथा भोगाधिक्यं भोगसारत्वं वा कर्मान्तरेण द्रष्टव्यम् । ब्रह्महत्याया अपि मानस्याः स्वल्पाया वेदनमात्रेण तरणम्, कायिक्यास्तु महत्या अश्वमेधेन इति नास्त्यानर्थक्यम् ।

योऽपि 'नान्तरिक्षे न दिवि' इत्यप्रसक्तप्रतिषेध उदाहृतस्तथा 'बबरः प्रावाहणिः' इत्यनित्यसंयोगं उदाहृतः तत्रोभयत्रोत्तरं सूत्रयति—

'अन्त्ययोर्यथोक्तम्' ( पू० मी० १।२।१८ ) इति ॥

अन्त्ययोः उदाहरणयोरुत्तरं पूर्वोक्तमेव द्रष्टव्यम् । अन्तरिक्षादौ चयननिन्दारूपोऽर्थवादो 'हिरण्यं निधाय चेतव्यम्' इत्यस्य विधेः शेषः । अतोऽत्र 'स्तुत्यर्थेन विधीनां स्युः' इत्युक्तमेवोत्तरम् । अन्तरिक्षे चयनप्रसक्त्यभावात्तन्निन्दा नित्यानुवादोऽस्तु । तेनापि विधिः स्तोतुं शक्यते । नित्यसिद्धार्थानुवादिना वायोः क्षेपिष्ठत्वेन पशुविधेः स्तुतत्वात् । बबरः प्रावाहणिरकामयत इत्यत्रापि बबरनामकः कश्चिदनित्यः पुरुषो मनुष्यो न विवक्षितः । किन्तु बबरध्वनियुक्तः प्रकर्षेण वहनशीलो वायुर्व्यवहारदशायां नित्य एवार्थो विवक्षित इत्येतदुत्तरं प्रथमपादस्यान्तिमाधिकरणे प्रोक्तम् । तस्मात्संभावितदोषाणां परिहृतत्वादर्थवादानमस्ति प्रामाण्यम् ।

तत्र संग्रहश्लोकाः—( जै० न्या० १।२।१ )

वायुर्वा इत्येवमादेरर्थवादस्य मानता ।
न विधेयेऽस्ति धर्मे किं किं वासौ तत्र विद्यते ॥
विध्यर्थवादशब्दानां मिथोऽपेक्षापरिक्षयात् ।
नास्त्येकवाक्यता धर्मे प्रामाण्यं संभवेत् कुतः ॥
विध्यर्थवादौ साकांक्षौ प्राशस्त्यपुरुषार्थयोः ।
तेनैकवाक्यता तस्माद्वादानां धर्ममानता ॥ इति ॥

तदेवं वेदे विद्यमानानां त्रयाणां मन्त्रविध्यर्थवादभागानामप्रामाण्यकारणाभावादबोधकानां तेषां प्रामाण्यस्य स्वतस्त्वाङ्गीकारात् कृत्स्नस्यापि वेदस्य प्रामाण्यं सिद्धम् ।

---

नन्वेवमपि वेदस्य पौरुषेयत्वेन विप्रलम्भकवाक्यवदप्रामाण्यं स्यात् । पौरुषेयत्वं च प्रथमपादे पूर्वपक्षत्वेन जैमिनिः सूत्रयामास( पू० मी० १ । १ । २७–३२ ) ।

'वेदांश्चैके संनिकर्षं पुरुषाख्या' ( पू० मी० १ । १ । २७) इति ॥

एके वादिनो वेदान् प्रति संनिकर्षं मन्यन्ते । कालिदासादिभिर्निर्मितानां रघुवंशादिग्रन्थानां समुच्चयार्थश्चकारः । ते ह्यत्र दृष्टान्ततया समुच्चीयन्ते । यथा रघुवंशादय इदानीन्तनास्तथा वेदा अपि । न तु वेदा अनादयः । अत एव वेदकर्तृत्वेन पुरुषा आख्यायन्ते । 'वैयासिकं भारतं वाल्मीकीयं रामायणम्' इत्यत्र यथा भारतादिकर्तृत्वेन व्यासादय आख्यायन्ते, तथा काठकं कौथुमं तैत्तिरीयमित्येवं तत्तद्वेदशाखाकर्तृत्वेन कठादीनामाख्यातत्वाद्वेदाः पौरुषेयाः ।

ननु नित्यानामेव सतां वेदानामुपाध्यायवत् संप्रदायप्रवर्तकत्वेन काठकादिसमाख्या स्यादित्याशङ्क्य युक्त्यन्तरं सूत्रयति—

'अनित्यदर्शनाच्च' ( पू० मी० १ । १ । २८ ) इति ।

अनित्या जननमरणवन्तो बबरादयो वेदे श्रूयन्ते । 'बबरः प्रावाहणिरकामयत' ( तै० सं० ७ । १ । १० । २) । 'कुसुरुबिंद औद्दालकिरकामयत' ( तै० सं० ७ । २ । २ । १ ) इति । तथा सति बबरादिभ्यः पूर्वमभावादनित्या वेदाः । विमतं वेदवाक्यं पौरुषेयवाक्यत्वात् कालि-

दासादिवाक्यवदित्याद्यनुमानसमुच्चयार्थश्चकारः।

सिद्धान्तं सूत्रयति—

'उक्तं तु शब्दपूर्वत्वम्' ( पू० मी० १ । १ । २९ ) इति॥

तुशब्दो वेदानामनित्यत्वं वारयति। शब्दस्य वेदरूपस्य कठादिपुरुषेभ्यः पूर्वत्वमनादित्वं प्राचीनैरेव सूत्रैरुक्तम् । 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' (पू० मी० १ । १ । ५) इत्यस्मिन् सूत्र औत्पत्तिकशब्देन सर्वेषां शब्दानां वेदानां तदर्थानां तदुभयसम्बन्धानां च नित्यत्वं प्रतिज्ञायोत्तराभ्यां शब्दाधिकरणवाक्याधिकरणाभ्यामुपपादितत्वात्। का तर्हि काठकाद्याख्याया गतिरित्याशङ्क्य सम्प्रदायप्रवर्तनात् सेयमुपपद्यत इत्युत्तरं सूत्रयति—

'आख्याप्रवचनात्' ( पू० मी० १ । १ । ३० ) इति ।

अस्त्वियमाख्याया गतिः। ततः परं बबराद्यनित्यदर्शनं यदुक्तं तस्य किमुत्तरमित्याशङ्क्योत्तरं सूत्रयति—

'परं तु श्रुतिसामान्यमात्रम्' ( पू० मी० १ । १ । ३१ ) इति ।

यत्परं बबरादिकं, तच्छब्दसामान्यमेव न तु मनुष्यो बबरनामकोऽत्र विवक्षितः। बबरध्वनियुक्तस्य प्रवहणस्वभावस्य वायोरत्र वक्तुं शक्यत्वात् * ।

---

* सर्वमेतच्छबरभाष्यानुरोधेन। परन्त्वेतत् 'कुशिकस्य सूनुः' (ऋ० वे० ३।३३।५) इति मन्त्रं व्याचक्षाणस्य भगवतो यास्काचार्यस्य 'कुशिको राजा बभूव' ( नि० २ । २५ ) इत्युक्त्या विरुद्धम् । तस्मात् 'सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्। वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे'॥ (शांकरभा० १।३।२८) इति वेदेभ्य एव सर्वज्ञानपूर्विका सृष्टिरुक्ता सङ्गच्छते। कठादीनां पुनरुत्पत्तिरपि तन्नामकत्वमात्रेण 'कल्पे कल्पे विनश्यन्ति तन्नामानो भवन्ति च' इति देवीपुराणात्। पदानां ज्योतिष्टोमाद्यर्थस्य च नित्यत्वं समतया प्रवाहनित्यत्वेन तथा च व्याससूत्रम् 'समाननामरूपत्वाच्चावृत्तावप्यविरोधः'(उ० मी० १।३।३०) इति मंजूषोक्तदिशा वेदस्थैतिहासिकपुरावृत्तपदानां व्यत्ययेन

ननु वेदे क्वचिदेवं श्रूयते 'वनस्पतयः सत्रमासत' 'सर्पाः सत्रमासत' इति । तत्र वनस्पतीनामचेतनत्वात् सर्पाणां चेतनत्वेऽपि विद्यारहितत्वान्न तदनुष्ठानं सम्भवति । अतो 'जरद्गवो गायति मद्रकाणि' इत्याद्युन्मत्तबालवाक्यसदृशत्वात् केनचित्कृतो वेद इत्याशङ्क्योत्तरं सूत्रयति—

'कृते चाविनियोगः स्यात्कर्मणः समत्वात्' ( पू० मी० १ । १ । ३२ ) इति ॥

यदि ज्योतिष्टोमादिवाक्यं केनचित्पुरुषेण क्रियेत, तदानीं कृते तस्मिन् वाक्ये स्वर्गसाधनत्वे ज्योतिष्टोमस्य विनियोगो न स्यात् । साध्यसाधनभावस्य पुरुषेण ज्ञातुमशक्यत्वात् । श्रूयते तु विनियोगः । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । न चैतदुन्मत्तवाक्यसदृशं लौकिकविधिवाक्यवद्भाव्यकरणेतिकर्तव्यतारूपैस्त्रिभिरंशैरुपेताया भावनाया अवगमात् । लोके हि 'ब्राह्मणान् भोजयेत्' इति विधौ किं केन कथमित्याकाङ्क्षायां तृप्तिमुद्दिश्यौदनेन द्रव्येण, शाकसूपादिपरिवेषणप्रकारेणेति यथोच्यते, तथा ज्योतिष्टोमविधावपि स्वर्गमुद्दिश्य, सोमेन द्रव्येन, दीक्षणीयाद्यङ्गोपकारप्रकारेणेत्युक्ते कथमुन्मत्तवाक्यसदृशं भवेत् । वनस्पत्यादिसत्रवाक्यमपि न तत्सदृशम् । तस्य सत्रकर्मणो ज्योतिष्टोमादिना समत्वात् । 'यत्परो हि शब्दः स शब्दार्थः' इति न्यायविद आहुः । ज्योतिष्टोमादिवाक्यस्य विधायकत्वादनुष्ठाने तात्पर्यम् । वनस्पत्यादिसत्रवाक्यस्यार्थवादत्वात् प्रशंसायां तात्पर्यम् । सा चाविद्यमानेनापि कर्तुं शक्यते । 'अचेतना अविद्वांसोऽपि सत्रमनुष्ठितवन्तः किं पुनश्चेतना विद्वांसो ब्राह्मणाः' इति सत्रस्तुतिः । चकारः पूर्वपक्षोक्तस्य वाक्यत्वहेतोः कर्त्रनुपलम्भेन पराहतिं समुच्चिनोति । तस्मान्नास्ति वेदस्य पौरुषेयत्वम् ।

अत्रैतौ संग्रहश्लोकौ–( जै० न्या० १ । १ । ८ )

---

भाव्यर्थज्ञापकत्वमेव । अत एव 'वेदवेद्ये परे पुंसि जाते दशरथात्मजे । वेदः प्राचेतसादासीत् साक्षाद्रामायणात्मना' इत्यादिवाक्यसूचितं रामावतारचरितस्य वेदान्तर्भूतत्वं संगच्छते ॥

पौरुषेयं न वा वेदवाक्यं स्यात् पौरुषेयता ।
काठकादिसमाख्यानाद्वाक्यत्वाच्चान्यवाक्यवत् ॥
समाख्यानं प्रवचनाद्वाक्यत्वं तु पराहतम् ।
तत्कर्त्रनुलम्भेन स्यात्ततोऽपौरुषेयता ॥ इति ॥

ननु भगवता बादरायणेन वेदस्य ब्रह्मकार्यत्वं सूत्रितम् 'शास्त्रयोनित्वात् (उ० मी० १ । १ । ३) इति । ऋग्वेदादिशास्त्रकारणत्वाद्ब्रह्म सर्वज्ञमिति सूत्रार्थः । बाढम् । नैतावता पौरुषेयत्वं भवति, मनुष्यनिर्मितत्वाभावात् । ईदृशमपौरुषेयत्वमभिप्रेत्य व्यवहारदशायामाकाशादिवन्नित्यत्वं बादरायणेनैव देवताधिकरणे सूत्रितम् 'अत एव च नित्यत्वम्' (उ० मी० १ । ३ । २९) इति । श्रुतिस्मृती चात्र भवतः—"वाचा विरूपनित्यया" (ऋग्वेद ८ । ७५ । ६) इति श्रुतिः । "अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा" इति स्मृतिः । तस्मात् कर्तृदोषशङ्काया अनुदयान्मन्त्रब्राह्मणात्मकस्य वेदस्य निर्विघ्नं प्रामाण्यं सिद्धम् ।

---

ननु मन्त्रब्राह्मणात्मकत्वं वेदस्य न युक्तम् । तयोः स्वरूपस्य निर्णेतुमशक्यत्वात् । मैवम् । द्वितीयाध्यायस्य प्रथमपादे सप्तमाष्टमयोरधिकरणयोर्निर्णीतत्वात् ।

सप्तमाधिकरणमारचयति ( जै० न्या० २ । १ । ७)—
"अहेबुध्निय मन्त्रं म' इति मंत्रस्य लक्षणम् ।
नास्त्यस्ति वास्य नास्त्येतदव्याप्त्यादेरवारणात् ॥
याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितम् ।
तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते ॥"

आधान इदमाम्नायते—'अहे बुध्निय मन्त्रं मे गोपाय' ( तै० ब्रा० १ । २ । १ । २६ ) इति । तत्र मन्त्रस्य लक्षणं नास्ति । अव्याप्त्यतिव्याप्त्योर्वारयितुमशक्यत्वात् । विहितार्थाभिधायको मन्त्र इत्युक्ते 'वसन्ताय कपिञ्जलानालभते' (वा० सं० २४ । २०) इत्यस्य मन्त्रस्य विधिरूपत्वादव्याप्तिः । 'मननहेतुर्मन्त्रः' इत्युक्ते ब्राह्मणेऽतिव्याप्तिः । एवम् 'असिपदान्तो मन्त्रः' 'उत्तमपुरुषान्तो मन्त्रः' इत्यादिलक्षणानां

परस्परमव्याप्तिरिति चेत् । मैवम् । याज्ञिकसमाख्यानस्य निर्दोषलक्षणत्वात् । तच्च समाख्यानमनुष्ठानस्मारकादीनां मन्त्रत्वं गमयति । 'उरु प्रथस्व' ( तै० सं० १ । १ । ८ ) इत्यादयोऽनुष्ठानस्मारकाः । 'अग्निमीळे पुरोहितम्' (ऋ० वे० १ । १ । १) इत्यादयः स्तुतिरूपाः । 'इषे त्वा' ( वा० सं० १ । १ ) इत्यादयस्त्वान्ताः । 'अग्न आ याहि वीतये' (सा० वे० १ । १ ) इत्यादय आमन्त्रणोपेताः । 'अग्नीदग्नीन् विहर' ( तै० ब्रा० २ । ८ । ९ ) इत्यादयः प्रैषरूपाः । 'अधः स्विदासी३दुपरि स्विदासी३त्' ( तै० सं० ७ । ४ । १९ । १ ) इत्यादयो विचाररूपाः । 'अम्बे अम्बाल्यम्बिके (अम्बिके अम्बालिके) न मा नयति कश्चन' ( तै० सं० ७ । ४ । १९ । १) इत्यादयः परिदेवनरूपाः । 'पृच्छामि त्वा परमन्तं पृथिव्याः' ( तै० सं० ७ । ४ । १८ । २ ) इत्यादयः प्रश्नरूपाः । 'वेदिमाहुः परमन्तं पृथिव्याः' ( तै० सं० ७ । ४ । १८ । २ ) इत्यादयः उत्तररूपाः । एवमन्यदप्युदाहार्यम् । ईदृशेष्वत्यन्तविजातीयेषु समाख्यानमन्तरेण नान्यः कश्चिदनुगतो धर्मोऽस्ति यस्य लक्षणत्वमुच्येत । लक्षणस्य चोपयोगः पूर्वाचार्यैर्दर्शितः—

'ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥' इति ॥

तस्मादभियुक्तानां मन्त्रोऽयमिति समाख्यानं लक्षणम् ।

अष्टमाधिकरणमारचयति—( जै० न्या० २ । १ । ८ )

'नास्त्येतद्ब्राह्मणेऽन्यत्र लक्षणं विद्यतेऽथवा ।
नास्तीयन्तो वेदभावा इति कॢप्तेरभावतः ॥

मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः ।
अन्यद् ब्राह्मणमित्येतद्भवेद्ब्राह्मणलक्षणम् ॥'

चातुर्मास्येष्विदमाम्नायते— 'एतद्ब्राह्मणान्येव पञ्च हवींषि' ( तै० ब्रा० १ । ७ । १ । १) इति । तत्र ब्राह्मणस्य लक्षणं नास्ति । कुतः । वेदभागानामियत्तानवधारणेन ब्राह्मणभागेष्वन्यभागेषु च लक्षणस्या-

व्याप्त्यतिव्याप्त्योः शोधयितुमशक्यत्वात् । पूर्वोक्तो मन्त्रभाग एकः। भागान्तराणि च कानिचित्पूर्वैरुदाहर्तुं संगृहीतानि—

‘ हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः ।

परक्रिया पुराकल्पो व्यवधारणकल्पना ॥ ’ इति ॥

‘ तेन ह्यन्नं क्रियते ’ इति हेतुः । ‘ तद्दध्नो दधित्वम् ’ ( तै० सं० २ । ५ । ३ । ४ ) इति निर्वचनम् । ‘ अमेध्या वै माषाः ’ ( तै० सं० ५ । १ । ८ । १ ) इति निन्दा । ‘वायुर्वै क्षेपिष्ठा देवता’ ( तै० सं० ३।४।३।२) इति प्रशंसा । ‘तद्व्यचिकित्सज्जुहवानी३मा हौषा३म् ’ ( तै० सं० ६ । ५ । ९ । १ ) इति संशयः । ‘ यजमानेन सम्मितौदुम्बरी भवति ’ (तै० सं० ६ । २ । १० । ३ ) इति विधिः । ‘ माषानेव मह्यं पचन्ति ’ इति परकृतिः । ‘ पुरा ब्राह्मणा अभैषुः ’ ( तै० सं० १ । ५ । ७ ) इति पुराकल्पः । ‘ यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणाश्चतुष्कपालान्निर्वपेत्’ ( तै० सं० २ । ३ । १२ । १ ) इति विशेषावधारणकल्पना । एवमन्यदप्युदाहार्यम् ।

न च ‘हेत्वादीनामन्यतमं ब्राह्मणम् ’ इति लक्षणम् । मन्त्रेष्वपि हेत्वादिसद्भावात् । ‘ इन्दवो वामुशन्ति हि ’ ( ऋ० वे० १ । २ । ४ ) इति हेतुः । ‘उदानिषुर्महीरिति तस्मादुदकमुच्यते’ ( अथ० वे० ३।१३। ४ ) इति निर्वचनम् । ‘ मोघमन्नं विन्दते अप्रचेताः ’ ( ऋ० वे० १० । ११७ । ६ ) इति निन्दा । ‘अग्निर्मूर्धा दिवः ककुत्’ (ऋ० वे० ८ । ४४ । १६ ) इति प्रशंसा । ‘ अधः स्विदासी३दुपरि स्विदासी३त् ’ ( ऋ० वे० १० । १२९ । ५ ) इति संशयः । ‘ वसन्ताय कपिञ्जलानालभत ’ ( वा० सं० २४ । २० ) इति विधिः । ‘ सहस्रमयुता ददत् ’ ( ऋ० वे० ८ । २१ । १८ ) इति परकृतिः । ‘ यज्ञेन यज्ञमयजन्त देवाः ’ (ऋ० वे० १ । १६४ । ५० ) इति पुराकल्पः ॥ इतिकरणबहुलं ब्राह्मणमिति चेत् । न । ‘ इत्यददा इत्ययजथा इत्यपच इति ब्राह्मणो गायेत् ’ इत्यस्मिन् ब्राह्मणेन गातव्ये मन्त्रेऽतिव्याप्तेः ।

‘ इत्याह ’ इत्यनेन वाक्येनोपनिबद्धं ब्राह्मणमिति चेत् । न ।

'राजा चिद्यं भगं भक्षीत्याह' ( ऋ० वे० ७ । ४१ । २ ) 'यो माऽयातुं यातुधानेत्याह यो वा रक्षः शुचिरस्मीत्याह' ( ऋ० ७ । १०४ । १६ ) इत्यनयोर्मन्त्रयोरतिव्याप्तेः ।

'आख्यायिकारूपं ब्राह्मणम्' इति चेत् । न । यमयमीसंवाद-सूक्तादौ ( ऋ० वे० १० । १० ) अतिव्याप्तेः ।

तस्मान्नास्ति ब्राह्मणस्य लक्षणमिति प्राप्ते ब्रूमः—

मन्त्रब्राह्मणरूपौ द्वावेव वेदभागावित्यङ्गीकारान्मन्त्रलक्षणस्य पूर्वमभिहितत्वादवशिष्टो वेदभागो ब्राह्मणमित्येतल्लक्षणं भविष्यति। तदेतल्लक्षणद्वयं जैमिनिः सूत्रयामास ।

'तच्चोदकेषु मन्त्राख्या' ( पू० मी० २ । १ । ३२ ) इति ॥

'शेषे ब्राह्मणशब्दः' ( पू० मी० २ । १ । ३३ ) इति ॥

तच्चोदकेषु तदभिधायकेषु वाक्येषु मन्त्र इति समाख्या सम्प्र-दायविद्भिर्व्यवह्रियते–'मन्त्रानधीमहे' इति । मन्त्रव्यतिरिक्तभागे तु ब्राह्मणशब्दस्तैर्व्यवहृत इत्यर्थः ।

ननु ब्रह्मयज्ञप्रकरणे मन्त्रब्राह्मणव्यतिरिक्ता इतिहासादयो भागा आम्नायन्ते ।

'यद् ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसी' ( तै० आ० २ । ९ ) इति । नैवम् । विप्रपरिव्राजकन्यायेन ब्राह्मणाद्य-वान्तरभेदानामेवेतिहासादीनां पृथगभिधानात् । 'देवासुराः संयत्ता आसन्' ( तै० सं० ५ । ३ । ११ । १ ) इत्यादय इतिहासाः । 'इदं वा अग्रे नैव किंचनासीत्' ( तै० ब्रा० २ । २ । ९ । १ ) इत्यादिकं जगतः प्रागवस्थामुपक्रम्य सर्गप्रतिपादकं वाक्यजातं पुराणम् । कल्पस्त्वारु-णकेतुकचयनप्रकरणे समाम्नायते इति,मन्त्रः कल्पः–'अत ऊर्ध्वं यदि बलिं हरेत्' ( तै० आ० १ । ३१ । २ ) इति । अग्निचयने 'यमगाथाभिः परिगायति' ( तै० सं० ५ । १ । ८ । २ ) इति विहिता मन्त्रविशेषा गाथाः । मनुष्यवृत्तान्तप्रतिपादिका ऋचो नाराशंस्यः । तस्मान्मन्त्र—

ब्राह्मणव्यतिरिक्तभागाभावान्मन्त्रब्राह्मणस्वरूपस्य लक्षितत्वात्तदुभयात्मकत्वं वेदस्य सुस्थितम् ।

---

मन्त्रावान्तरविशेषश्च तस्मिन्नेव पाद इत्थं विचारितः (जै० न्या० २।१।१०)।

नर्क्सामयजुषां लक्ष्मसाङ्कर्यादिति शङ्किते ।
पादश्च, गीतिः, प्रश्लिष्टपाठ, इत्यस्त्यसङ्करः ॥

इदमाम्नायते—'अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रैविदा विदुः' ऋचः सामानि यजूंषीति। त्रीन् वेदान् विदन्तीति, त्रिविदः । त्रिविदां सम्बन्धिनोऽध्येतारस्त्रैविदाः । ते च यं मन्त्रभागमृगादिरूपेण त्रिविधमाहुस्तं गोपायेति योजना । तत्र त्रिविधानामृक्सामयजुषां व्यवस्थितं लक्षणं नास्ति । कुतः । साङ्कर्यस्य दुष्परिहरत्वात् । 'अध्यापकप्रसिद्धेष्वृग्वेदादिषु पठितो मन्त्र इति हि लक्षणं वक्तव्यम् । तच्च सङ्कीर्णम् । 'देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण, वसोः सूर्यस्य रश्मिभिः' (तै० सं० १।१।५।१) इत्ययं मन्त्रो यजुर्वेदे सम्प्रतिपन्नो यजुषां मध्ये पठितः । न च तस्य यजुष्ट्वमस्ति, तद्ब्राह्मणे 'सावित्र्यर्चा' (तै० ब्रा० ३।२।५।३) इत्युक्त्वेन व्यवहृतत्वात् ॥ 'एतत्साम गायन्नास्ते' (तै० आ० ९।१०।५) इति प्रतिज्ञाय किञ्चित्साम यजुर्वेदे गीतम् ॥ 'अक्षितमस्यच्युतमसि' 'प्राणसंशितमसि' (छा० उ० ३।१७।६) इति त्रीणि यजूंषि सामवेदे समाम्नातानि ॥ तथा गीयमानस्य साम्न आश्रयभूता ऋचः सामवेदे समाम्नायन्ते । तस्मान्नास्ति लक्षणमिति चेत् । न । पादादीनामसङ्कीर्णलक्षणत्वात् । 'पादेनार्थेन चोपेता वृत्तबद्धा मन्त्रा ऋचः' । 'गीतिरूपा मन्त्राः सामानि' । 'वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि' इत्युक्ते न क्वापि सङ्करः ।

तदेतत् त्रैविध्यं जैमिनिना सूत्रत्रयेण लक्षितम् ।

'तेषामृग्यत्रार्थवशेन पादव्यवस्था' (पू० मी० २।१।३५) इति ॥
'गीतिषु सामाख्या' (पू० मी० २।१।३६) इति ॥

'शेषे यजुःशब्दः' ( पू० मी० २ । १ । ३७ ) इति ॥

एतमेव मन्त्रावान्तरविशेषमुपजीव्य वेदानामृग्वेदो यजुर्वेदः सामवेद इति त्रैविध्यं सम्पन्नम् ।

---

तेषां च वेदानां सर्वेषामन्यतमस्य वा स्वप्रज्ञानुसारेणाध्ययनमुपनीतेन कर्तव्यम् । तथा च याज्ञवल्क्यः स्मरति—'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्' । इति । एकवेदपक्षे पितृपितामहादिपरम्पराप्राप्त एव वेदोऽध्येतव्य इत्यभिप्रेत्य 'स्वाध्यायोऽध्येतव्यः' इति स्वशब्द आम्नातः ।

तच्चाध्ययनं न काम्यं, किन्तु नित्यम् । अत एव पुरुषार्थानुशासने सूत्रितम्—

'वेदस्याध्ययनं नित्यमनध्ययने पातात्' इति ॥

पातित्यं चैवमाम्नायते—

'अपहतपाप्मा स्वाध्यायो,देवपवित्रं वा एतत्' (तै० आ० २।१५)।

'तं योऽनूत्सृजत्यभागो वाचि भवत्यभागो नाके ।' तदेषाभ्युक्ता—

यस्तित्याज सखिविदं सखायं न तस्य वाच्यपि भागो अस्ति ।
यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम् ॥
( ऋ० वे० १० । ७१ । ६ ) इति ॥

'तस्मात्स्वाध्यायोऽध्येतव्यः' (तै० आ० २।१५) इति । अध्येतारं पुरुषं तदीयप्रयासाभिज्ञानेन सखिवत् पालयतीति सखिविद्वेदः । बहुद्रव्यप्रयाससाध्यक्रतुफलस्याध्ययनमात्रेण सम्पादनं तत्पालनम् । तदप्याम्नायते—

'यं यं क्रतुमधीते तेन तेनास्येष्टं भवत्यग्नेर्वायोरादित्यस्य सायुज्यं गच्छति' ( तै० आ० २ । १५ ) इति ॥

यद्यप्येतद् ब्रह्मयज्ञस्वाध्यायफलं तथापि ग्रहणार्थाध्ययनमन्तरेण ब्रह्मयज्ञासम्भवात् तदीयफलमपि सम्पद्यते । ईदृशं सखिविदं वेदरूपं सखायं यः पुमानध्ययनमकृत्वा परित्यजति तस्य वाच्यपि भाग्यं नास्ति फले भाग्यं नास्तीति किमु वक्तव्यम् । सकलदेवतानां धर्मस्य परब्रह्म-

तत्त्वस्य च प्रतिपादकं वेदमनुच्चार्य परनिन्दानृतकलहहेतुं लौकिकीं वार्त्तां सर्वत्रोच्चारयतः स्पष्ट एव वाचि भाग्याभावः । अत एवाम्नायते—

'नानुध्यायाद्बहूञ्छब्दान् वाचो विग्लापनं हि तत् । (शत० ब्रा० १४ । ७ । २ । २३ ) ॥

यद्यप्यसौ काव्यनाटकं शृणोति तथापि निरर्थकमेव तच्छ्रवणम् । तेन सुकृतमार्गज्ञानाभावादित्यर्थः । स्मृतिरपि—

'योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥' ( मनु० २।१६८ )॥

एवमन्यान्यपि बहूनि वचनान्यत्रोदाहर्तव्यानि ।

---

नन्वधीते वेदे पश्चादध्ययनविध्यर्थं ज्ञानम् । ज्ञाने सति पश्चादध्ययनप्रवृत्तिरित्यन्योन्याश्रय इति चेत् । बाढम् । अत एव गुरुमतानुसारिण आचार्यकर्तृकाध्यापनेन प्रवृत्तिं माणवकाध्ययनस्य महता प्रयासेन सम्पादयन्ति ।

मतान्तरानुसारिणस्तु प्रकाशात्मादयोऽध्ययनात् प्रागेव सन्ध्यावन्दनादिविधिज्ञानवत् पित्रादिभ्योऽध्ययनविधिज्ञानं वर्णयन्ति । यद्यध्यापनविधिप्रयुक्तिर्यदि वा स्वविधिप्रयुक्तिः सर्वथाप्युपनीतैरध्येतव्य एव वेदः ।

---

तस्य चाध्ययनस्य दृष्टार्थत्वमक्षरग्रहणान्तत्वं च पुरुषार्थानुशासने सूत्रितम् । तानि सूत्राणि तद्वृत्तिं चोदाहरामः—

अध्ययनस्य दृष्टार्थत्वं साधयितुं पूर्वपक्षयति—
'अदृष्टार्था त्वधीतिर्विहितत्वात्' इति ॥१॥

दृष्टफलसाधने भोजनादौ विध्यदर्शनाद्विहितमध्ययनमदृष्टार्थमवगन्तव्यम् ।

अदृष्टविशेषो न श्रुत इति चेत् तत्राह—
'घृतकुल्याद्यतिदेशः स्वर्गकल्पनं वा' इति ॥२॥
ब्रह्मयज्ञजपाध्ययनार्थवादं नित्याध्ययनेऽतिदिश्य तत्रत्यं घृत-

कुल्यादिकं रात्रिसत्रन्यायेन फलत्वेन कल्पनीयम् । ये त्वर्थवादातिदेशं नेच्छन्ति तैर्विश्वजिन्न्यायेन स्वर्गः कल्पनीयः ।

दृष्टफलयोः संस्कारप्राप्त्योः सम्भवे कथमदृष्टकल्पनेत्यत आह-

'अयुक्ते संस्कारप्राप्ती' इति ॥३॥

संस्कृतस्वाध्यायस्य क्वचित्क्रतौ विनियोगादर्शनात् प्राप्तेः स्वयमपुरुषार्थत्वाच्चेत्यर्थः ।

स्वाध्यायप्राप्तिरर्थप्रमितिहेतुतया पुरुषार्थ इत्याशङ्क्य विषनिर्हरणादिकार्यविनियुक्तमन्त्रवदध्ययनाङ्गतया विनियुक्तानां ज्योतिष्टोमादिवाक्यानां न स्वार्थे प्रामाण्यमित्याह—

'अन्याङ्गं नार्थप्रमापकम्' इति ॥४॥

अध्ययनविधायकं तु वाक्यं स्वविहिताध्ययनस्यैवाङ्गमिति कृत्वा स्वार्थे प्रमाणमित्याह—

'अध्यनवाक्यमनन्याङ्गम्' इति ॥५॥

नन्वेवमदृष्टार्थत्वे कर्मकारकभूतस्वाध्यायगतफलाभावादध्येतव्य इति कर्मवाची तव्यप्रत्ययो विरुध्येत इत्यत आह—

'सक्तुवत्करणपरिणामः' इति ॥६॥

सक्तूञ्जुहोतीत्यत्र कर्मत्वेन (कर्मकारकत्वेन) प्रधानभूतान् सक्तूनुद्दिश्य होमसंस्कारविधाने प्रतीयमानेऽपि होमसंस्कृतानां भस्मीभूतानां सक्तूनामन्यत्र विनियोगाभावात् कर्मप्राधान्यं हित्वा सक्तुभिर्जुहोतीति करणपरिणामः कृतः । एवमत्रापि कर्मगतयोः संस्कारप्राप्त्योरसम्भवात् स्वाध्यायेनाधीयीतेति वाक्यपरिणामः कर्तव्यः—

इदानीं दृष्टफले सत्यदृष्टफलं न कल्प्यमिति सिद्धान्तयति—

'दृष्टे तु नादृष्टम्' इति ॥७॥

किं तद्दृष्टफलमिति तदाह—

'दृष्टौ प्राप्तिसंस्कारौ' इति ॥८॥

अक्षरप्राप्तेः परम्परया पुरुषार्थत्वमाह—

'प्राप्त्यार्थबोधः' इति ॥९॥

जायत इति शेषः।

न च भोजनादिवदन्वयव्यतिरेकसिद्धत्वाद्विधिवैयर्थ्यमिति शङ्कनीयम्। अवघातादिवन्नियमादृष्टाय विध्युपपत्तेरित्याह—

'विधिर्नियत्या ( विधिनिष्पत्या )' इति ॥१०॥

यत्तूक्तं संस्कृतस्य स्वाध्यायस्य विनियोगादर्शनान्न संस्कार इति, तत्राह—

'संस्कारसिद्धिः क्रत्वध्ययनविधिद्वयोपादानात्' इति ॥११॥

क्रतुविधयो हि विषयावबोधमपेक्षमाणास्तदवबोधे स्वाध्यायं विनियुञ्जते। अध्ययनविधिश्च लिखितपाठादिव्यावृत्त्याध्ययनसंस्कृतत्वं स्वाध्यायस्य गमयति। अत उभयोपादानात्तत्सिद्धिः।

ननु संस्कारो नामादृष्टातिशयः। स च न स्वाध्यायगतः। तव्यप्रत्ययेन स्वपदोपात्तप्रकृत्यर्थभूताध्ययनोपरक्तापूर्वाभिधानात्। ततः कथं स्वाध्यायस्य संस्कृतत्वमिति, तत्राह—

'तव्यः कर्मगादृष्टवाची' इति ॥१२॥

अत्र तव्यप्रत्ययस्य कर्माभिधायितया कर्मकारकस्य तव्यप्रत्ययं प्रति प्रकृत्यर्थादध्ययनादपि प्रत्यासन्नत्वात् स्वाध्यायगतमेवापूर्वं तव्यप्रत्ययो वक्ति। अपूर्वस्य धात्वर्थजन्यत्वनियमेऽपि तदुपरक्तत्वानियमादिति भावः।

यच्चोक्तमन्याङ्गं नार्थप्रमापकमिति, तदसत्। यतो मन्त्रानां स्वतन्त्रादृष्टशेषाणां तथात्वं युज्यते, इह तु स्वाध्यायाश्रितमदृष्टम्। तस्य च स्वाध्यायगताक्षरसामर्थ्यसिद्धार्थावबोधे फले सति फलान्तरकल्पनायोगात् प्रामाण्यस्योपबृंहकमेवादृष्टं न तु प्रतिबन्धकमित्याह—

'स्वतन्त्रादृष्टशेषत्वान्न स्वार्थप्रमा प्रतिबध्यते' इति ॥ १३ ॥

सक्तुन्यायेन कर्मकारकप्राधान्ये परित्यक्ते स्वतन्त्रादृष्टमेवात्रापि स्यादित्यत आह—

'यथाश्रुतोपपत्तेर्न सक्तुन्यायः' इति ॥ १४ ॥

सक्तुषु गत्यभावाच्छ्रुतं परित्यज्याश्रुतं कल्प्यतां नाम । नेह तद्युक्तं प्रदर्शितत्वादित्यर्थः ।

---

इत्थमध्ययनविधेर्दृष्टार्थत्वं प्रसाध्यार्थावबोधपर्यन्ततां निराकर्तुं पूर्वपक्षयति—

'वैधमर्थनिर्णयं भट्टगुरू विधेः पुमर्थावसानात्' इति ॥१॥

सर्वत्र विधेः पुरुषार्थपर्यवसायित्वनियमादत्रापि पुरुषार्थभूतं-फलवदर्थनिश्चयमध्ययनविधिप्रयुक्तं भट्टगुरू मन्येते ॥

ननु सकृदध्ययनादावृत्तिसहिताद्वार्थनिश्चयो नोपलभ्यत इत्याशङ्क्य तथा सति तत्सिद्धये सोऽध्ययनविधिरर्थनिश्चयहेतुं विचारं कल्पयिष्यतीत्याह—

'स विचारमाक्षिपेत्' इति ॥२॥

ननु स्वविधेयतदुपकारिणोरेव विधिः प्रयोजक इति सर्वत्र नियमः । तथा सत्येतादृशं कथमत्राध्ययनविधिराक्षेप्स्यतीत्यत आह—

'अविधेयानुपकार्याक्षेपोऽवघातावृत्तिवत्' इति ॥३॥

'व्रीहीनवहन्ति' इत्यत्रावघातमात्रं विधेयं न तु तदावृत्तिः, तस्या अधात्वर्थत्वात् । नापि सा विधेयोपकारिणी । अन्तरेणावृत्तिं सकृन्मुशलघातमात्रादवघातसिद्धेः । तथापि तण्डुलनिष्पत्तिफलसिद्धये स विधिरावृत्तिं यद्वदाचिक्षेप तद्वत् प्रकृतेऽप्यवगन्तव्यम् ।

ननु वेदमात्राध्यायिनोऽर्थावबोधानुदयेऽपि व्याकरणाद्यङ्गसहितवेदाध्यायिनस्तदुदयसद्भावात्तं प्रति व्यर्थं विचारं विधिर्न कल्पयेदित्याशङ्क्यार्थगतविरोधपरिहारायापेक्षित एव विचार इत्याह—

'साङ्गाध्ययनात्तद्भावे विचारो विरोधापनुत्' इति ॥४॥

सिद्धान्तयति—

'प्राप्तेस्तु गवादिवत् पुमर्थत्वाद्विधिस्तदन्तः' इति ॥५॥

यथा फलभूतस्य क्षीरादेर्हेतवो गवादयोऽपि पुरुषैरर्थ्यन्ते, तथा फलवदर्थावबोधहेतोरक्षरप्राप्तेरपि पुरुषार्थत्वादध्ययनविधिरक्षरप्राप्त्यवसानोऽवगन्तव्यः ।

नन्वक्षरप्राप्तेः पुरुषार्थत्वं फलवदर्थावबोधप्रयुक्तं चेत्तर्हि तद्बोधस्य मुख्यपुरुषार्थत्वाद्बोधान्त एव विधिः किन्न स्यादित्यत आह–

'फलवद्बोधान्तत्वेऽध्ययनाकार्त्स्न्यम्' इति ॥६॥

बोधस्य हि फलं कर्मानुष्ठानम् । तथा सति यस्य ब्राह्मणादेर्यस्मिन् बृहस्पतिसवादावधिकारस्तस्य तद्वाक्यमात्राध्ययनं स्यात् । न तु राजसूयादिवाक्याध्ययनम् । तत्र प्रवृत्त्यादिफलाभावात् ।

स्वपक्षे तु नायं दोष इत्याह—

'कृत्स्नप्राप्तिर्जपार्था' इति ॥७॥

न चाबोधकत्वेऽर्थावबोध एव न सिध्येदिति शङ्कनीयम्, प्रमाणस्य प्रमेयबोधकत्वस्वाभाव्यात् ।

लौकिकाप्तवाक्यानामन्तरेणैव विधिं बोधकत्वदर्शनादित्याह—

'लोकवन्नैजो बोधः' इति ॥८॥

ननु बोधस्य विधिफलत्वे बोधकाममुद्दिश्य विधातुं शक्यत्वात् सुलभोऽधिकारी स्यादित्याशङ्क्य प्राप्तिपक्षेऽपि प्राप्तिकाम उपनीताष्टवर्षब्राह्मणोऽत्राधिकारी सुलभ एवेति परिहारं स्पष्टत्वादुपेक्ष्य बोधस्य काम्यत्वं दूषयति—

'सोऽकाम्यः प्राग्बोध्यभानाभानयोः' इति ॥९॥

बोधस्याग्निहोत्रादिलक्षणवेदार्थस्याध्ययनात् प्राक् सन्ध्योपासनादिवत् पित्राद्युपदेशात एव भाने सिद्धत्वादेव सोऽर्थबोधो न काम्यः । अभाने कामयितुमशक्यः । ज्ञाते एव विषये कामनानियमात् ।

ननु सामान्यतो ज्ञाते विशेषतो बुभुत्सा संभवति । यद्वा विशेषतोऽपि पित्राद्युपदेशादवगते सत्यौपदेशिकज्ञानस्य प्रामाण्यनिर्णयाय पुनर्बोधकामना युक्तैवेत्याशङ्क्यैवमप्यर्थावबोधमुद्दिश्याध्ययनविधानं न सम्भवतीत्याह—

'उद्देशायोगात्' इति ॥१०॥

अग्निहोत्रादिविशेषज्ञानानां न तावदेकबुद्ध्या विशेषाकारेणो-

द्देशः सम्भवति । अनन्तत्वात् । सामान्याकारेणोद्देशे सामान्यमेव विधिफलं स्यात्, न तु ज्ञानविशेषः । ततो नोद्देशो युक्तः ।

नन्वर्थावबोधमुद्दिश्योच्चारणाभावे वेदस्य स्वार्थे तात्पर्यं न स्यादित्याशङ्क्योपक्रमादिलिङ्गगम्यं तात्पर्यं शब्दबलादेव सिद्ध्यतीत्याह—

'तात्पर्यं शब्दात्' इति ॥ ११ ॥

तर्ह्यर्थज्ञानमुद्दिश्य शब्दोच्चारणं लोके व्यर्थं स्यादिति चेत्, न, पुरुषसम्बन्धकृतदोषाख्यप्रतिबन्धपरिहारार्थत्वादित्याह—

'उद्दिश्योच्चारणं दोषघ्नं लोके' इति ॥ १२ ॥

नन्वध्ययनविधेर्बोधान्तत्वाभावे विचारशास्त्रं न प्रवर्तेत प्रयोजकाभावादित्याशङ्क्याह—

'विचार उत्तरविधिप्रयुक्त उपपद्यते' इति ॥ १३ ॥

क्रतुबोधविधयः साङ्गवेदाध्ययनादापातप्रतिपन्ना विरोधपरिहारेण प्रतिष्ठितं निर्णयज्ञानमन्तरेणानुष्ठापयितुमशक्नुवन्तस्तन्निर्णयाय क्रतुविचारं प्रयोजयन्ति । श्रवणविधिस्तु साक्षादेव ब्रह्मविचारं विधत्ते । एवं च सति श्रवणविधेः स्वविधेयप्रयोजकत्वं क्रतुविधीनां च विधेयोपकारिप्रयोजकत्वमित्युपपद्यतेतराम् ॥ अध्ययनविधिप्रयुक्तिपक्षे तु तद्विधेः क्रतुद्वारा स्वर्गसिद्धिपर्यन्तत्वात् क्रत्वनुष्ठानस्यापि तत्प्रयुक्तौ क्रतुविधिवैयर्थ्यमापद्येत ।

नन्वध्ययनविधेस्त्रैवर्णिकमात्रं प्रति नित्यत्वात् तत्प्रयुक्तौ विचारस्यापि तल्लभ्येत नान्यथेति चेत् । क्रतुविचारस्य त्रैवर्णिकमात्रेऽपि नित्यत्वसिद्धिः किं वा ब्रह्मविचारस्य । तत्राद्योऽस्मन्मतेऽपि सम इत्याह—

'अतो नित्यः क्रतुविचारस्त्रैवर्णिकमात्रस्य' इति ॥ १४ ॥

यतोऽकरणे प्रत्यवायश्रवणात् क्रतवस्त्रैवर्णिकानां नित्या अत इत्यर्थः ।

द्वितीयोऽनिष्ट इत्याह ।

'ब्रह्मविचारः पुनः परमहंसस्यैव' इति ॥ १५ ॥

नित्य इत्यऽनुषङ्ग इति ।

---

ननूक्तनित्याध्ययनस्याक्षरग्रहणान्तत्वेऽर्थज्ञानमविहितं स्यात्। मैवम् । वाक्यान्तरेण तद्विधानात् । 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति तद्विधिः । तत्र निष्कारणशब्देनाध्ययनज्ञानयोः काम्यत्व निवार्यते । अर्थज्ञाने पुरुषप्रवृत्तिकरं वचनद्वयं शाखान्तरगतं निरुक्तकारो यास्क एवमुदाजहार—

'अथापि ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च—

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ।

यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते ।

अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥' (निरु० १।१८)

अस्मिन् मन्त्रद्वये 'योऽर्थज्ञः' इत्यनेनैवार्धेन वेदार्थज्ञानं प्रशस्यते । इतरेणार्धत्रयेण ज्ञानराहित्यं निन्द्यते । यो वेदार्थं जानाति सोऽयमिह लोके सकलं श्रेयः प्राप्नोति । तथा तेन ज्ञानेन पापक्षये सति मृतः स्वर्गं प्राप्नोति । तदेतदैहिकामुष्मिकं च ज्ञानफलं तैत्तिरीया मन्त्रोदाहरणेन तदीयतात्पर्याभिधायिब्राह्मणेन च स्पष्टीचक्रुः—

'तदेषाभ्युक्ता','ये अर्वाङुत वा पुराणे वेदं विद्वांसमभितो वदन्ति ।आदित्यमेव ते परिवदन्ति सर्वे अग्निं द्वितीयं तृतीयं च हंसमिति।' 'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति । तस्माद् ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देवताः प्रीणाति ।' ( तै० आ० २ । १५ ) इति ।

वेदं विद्वान्, अर्थाभिज्ञः पुरुषः । स च द्विविधः—

अर्वाचीनकाले समुत्पन्नश्चतुर्दशविद्यास्थानकुशलः कश्चिदुपाध्यायः, पुरातनकाले समुत्पन्नो व्यासादिश्च । तमेतमुभयविधं विद्वांसं विद्यामदधनमदकुलमदोपेताः पण्डितम्मन्या ये पुरुषा अभितो विद्याः

दिषु दूषयन्ति ते सर्वेऽप्यादित्यमेव प्रथमं सर्वतो दूषयन्ति। आदित्यापेक्षया द्वितीयमग्निं दूषयन्ति। तदुभयापेक्षया तृतीयं हंसं दूषयन्ति। हन्ति सदा गच्छतीति हंसो वायुः।

अग्न्यादिरूपत्वं च वेदविद आम्नातम्—

'अग्नेर्वायोरादित्यस्य सायुज्यं गच्छति' इति (तै० आ० अ० २) न केवलमेतद्देवतात्रयं किन्तु सर्वा अपि देवता वेदविदि वसन्ति। तस्माद् ब्राह्मणान् वेदविदो दृष्ट्वा स्मृत्वा वा प्रतिदिनं नमस्कुर्यात्। न तु तस्मिन् विद्यमानमपि दोषं कीर्तयेत्। एवं सति तत्तन्मन्त्रार्थभूताः सर्वा अपि देवता वेदार्थविदा स्मर्यमाणतया तदीयहृदयेऽवस्थिता अयं नमस्कर्ता तोषयति। न चैतदध्ययनस्यैव फलमिति शङ्कनीयम्। विद्वांसमित्याम्नातत्वात्। अन्यथा 'वेदमधीयानम्' इत्याम्नायेत। तस्मात् सर्वदेवताबुद्ध्या प्राणिभिः पूज्यस्य वेदार्थविदो लोकद्वयेऽपि श्रेयः प्राप्तिरुपपद्यते।

यस्तु वेदमधीत्याप्यर्थं न विजानाति सोऽयं पुमान् भारमेव हरति धारयति। स्थाणुरिति दृष्टान्तः। छिन्नशाखं शुष्कं वृक्षमूलं स्थाणुशब्देनोच्यते। स च यथेन्धनार्थमेवोपयुज्यते, न तु पुष्पफलार्थम्। तथा केवलपाठकस्य व्रात्यत्वं न भवतीत्येतावदेव। न ह्यनुष्ठानं स्वर्गादिफलसिद्धिर्वास्ति। किलेत्यनेन लोकप्रसिद्धिर्द्योत्यते। लोकेऽपि पाठकस्य यावती धनादिपूजा ततोऽप्यधिका विदुषि दृश्यते। किं च यद्वेदवाक्यमाचार्याद् गृहीतमर्थज्ञानरहितं पाठरूपेणैव पुनः पुनरुच्चार्यते तत् कदाचिदपि न ज्वलति स्वार्थं न प्रकाशयति। यथाग्निरहितप्रदेशे प्रक्षिप्तं शुष्ककाष्ठं न ज्वलति तद्वत्। तथा सति तस्य वाक्यस्य वेदत्वमेव मुख्यं न स्यात्।

अलौकिकं पुरुषार्थोपायं वेत्यनेनेति वेदशब्दनिर्वचनम्।

तथा चोक्तम्—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।

एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता इति ॥

अतो मुख्यवेदत्वसिद्धये ज्ञातव्य एव तदर्थः । किं चात्र यास्केन काचिदन्याप्यृगुदाहृता ( निरु० १ । १९ )—

'उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः॥' इति।

तत्र पूर्वार्धस्य तात्पर्यं स एव दर्शयति । 'अप्येकः पश्यन्न पश्यति वाचमपि च शृण्वन्न शृणोत्येनामित्यविद्वांसमाहार्धम्' इति। अस्यायमर्थः—यः पुमानर्थं न वेत्ति तं प्रति पूर्वार्धेन मन्त्रो ब्रूते । एकः पुरुषः पाठमात्रपर्यवसितो वेदरूपां वाचं पश्यन्नपि न सम्यक् पश्यति एकवचनबहुवचनादिविवेकाभावे पाठशुद्धेरपि कर्तुमशक्यत्वात् ।

'वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' ( तै० सं० २ । १ । १ । १ ) आदित्यानेव स्वेन भागधेयेनोपधावति त एवैनं भूतिं गमयन्ति' ( तै० सं० २ । ३ । १ ) इत्यादावव्युत्पन्नः कथं पाठं निश्चिनुयात् । अन्यः कश्चिदर्थज्ञानाय व्याकरणाद्यङ्गानि शृण्वन्नपि मीमांसारहित्यादेनां वेदरूपां वाचं न सम्यक् शृणोति। 'यावतोऽश्वान् प्रति गृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' ( तै० सं० २। ३ । १२ । १ ) इत्यत्र व्याकरणमात्रेण प्रतिगृहीतुरिष्टिः प्रतीयते । मीमांसायां तु न्यायेन दातुरिति निर्णीतम् ( पू० मी० ३ । ४ । ३० ) तस्मादुभयविधमप्यविद्वांसं प्रत्येवमाहेति ।

तृतीयपादतात्पर्यं दर्शयति—'अप्येकस्मै तन्वं विसस्रे' इति। स्वमात्मानं विवृणुते । ज्ञानप्रकाशनमर्थस्याहानया वाचा' इति ।

अस्यायमर्थः—अपिशब्दपर्याय उतोशब्दः । स च पूर्वोक्तानभिज्ञवैलक्षण्यायात्र प्रयुक्तो, निपातानामनेकार्थत्वात् । यः पुमान् व्याकरणाद्यङ्गैः स्वशब्दार्थं मीमांसया तात्पर्यं च शोधयितुं प्रवृत्तस्तस्मा एकस्मै वेदः स्वकीयां तनुं विसस्रे । स्वमित्यादिकं पदव्याख्यानम् । ज्ञानमित्यादिकं तात्पर्यव्याख्यानम् । वेदार्थप्रकाशनक्षमं सम्यग्ज्ञानमनया तृतीयपादरूपया वाचा मन्त्र आहेति ।

चतुर्थपादतात्पर्यं दर्शयति 'उपमोत्तमया वाचा'। 'जायेव पत्ये कामयमाना सुवासाः' ऋतुकालेषु सुवासाः कल्याणवासाः कामयमाना ऋतुकालेषु। यथा स एनां पश्यति स शृणोतीत्यर्थज्ञ प्रशंसा' इति।

अस्यायमर्थः—उत्तमया चतुर्थपादरूपया वाचा तृतीयपादार्थस्योपमोच्यते। उशतीत्येतस्य व्याख्यानं कामयमानेति। यद्यप्यहि गृहकृत्यवेलायां मलिनवासास्तथापि सम्भोगकालेषु कल्याणवासा भवति। तत्र हेतुः—कामयमाना ऋतुकालेष्विति। यथा स पतिरेनां जायां साकल्येनादरयुक्तः पश्यति किं च तयोक्तमर्थं हितबुद्ध्या शृणोति, तथायं चतुर्दशविद्यास्थानपरिशीलनोपेतः पुरुषो वेदार्थरहस्यं सम्यक् पश्यति। वेदोक्तञ्च धर्मब्रह्मरूपमर्थं हितबुद्ध्या स्वीकरोति। सेयमुक्ता वेदार्थाभिज्ञस्य प्रशंसेति।

पुनरप्यृगन्तरं यास्क उदाजहार—'तस्योत्तरा भूयसे निर्वचनाय।
उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम्॥' इति
(नि० १।२०)

अयमर्थः—पूर्वोदाहृताया 'उत त्वः पश्यन्' इत्यादिकाया ऋचोऽनन्तरमेवाम्नाता काचिदृक् तस्य पूर्वोक्तमन्त्रार्थस्य भूयसे निर्वचनाय सम्पद्यते। तमर्थमतिशयेन प्रतिपादयितुं प्रभवति। कथमिति चेत्। तदुच्यते। अपि चैकं चतुर्दशविद्यास्थानकुशलं पुरुषं वेदरूपाया वाचः सख्ये स्थित्वा स्थैर्येण वेदोक्तार्थामृतपानयुक्तमाहुः, अभिज्ञाः कथयन्ति। 'सखिविदं सखायम्' इति मन्त्रे वेदस्य सखित्वमुदाहृतम्। यद्वा स्वर्गलोके वेदानां सख्ये स्थित्वातिशयेन पीतामृतमाहुः। वाचासिना ईश्वराः सभासु प्रगल्भा वा वाजिनाः, तेषु मध्येऽप्येनं वेदार्थकुशलं चोदयितुं न हिन्वन्ति। न केऽपि प्राप्नुवन्ति। तेन सह विवदितुमसमर्थत्वात्। यस्त्वन्यः पाठमात्रपरः पुष्पफलरहितां वाचं शुश्रुवान् भवति। पूर्वकाण्डोक्तस्य धर्मस्य ज्ञानं पुष्पम्। उत्तरकाण्डोक्तस्य ब्रह्मणो ज्ञानं फलम्। यथा लोके पुष्पं फलस्योत्पादकं

तथा वेदानुवचनादिधर्मज्ञानमनुष्ठानद्वारा फलात्मकब्रह्मज्ञानेच्छां जनयति। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन' ( बृ० उ० ४ । ४ । २२ ) इति श्रुतेः। यथा च फलं तृप्तिहेतुस्तथा ब्रह्मज्ञानं कृतकृत्यत्वहेतुः । 'यत्पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो भवति' इति श्रुतेः। तादृशपुष्पफलरहितवेदपाठकः स एष पुमानधेन्वा मायया सह चरति। नवप्रसूतिका क्षीरस्य दोग्ध्री गौः प्रीतिहेतुत्वाद्धिनोतीति व्युत्पत्त्या धेनुरित्युच्यते। पाठमात्रपरं प्रति वेदरूपा वाग्धर्मब्रह्मज्ञानरूपं क्षीरं न दोग्धीत्यधेनुः। अत एवासौ माया कपटरूपा । ऐन्द्रजालिकनिर्मितगोसदृशगोरूपत्वात् । तया मायया सह चरन्नयं परमपुरुषार्थं न लभत इत्यर्थः। इत्थं यास्केन ज्ञानस्तुत्यज्ञाननिन्दोदाहरणस्य प्रपञ्चितत्वात् । 'यच्च स्तूयते तद्विधीयते' इति न्ययेनाध्ययनवदर्थज्ञानस्यापि विधिरभ्युपगन्तव्यः।

किं च नक्षत्रेष्टिकाण्डे प्रतीष्टिफलवाक्यं यागतद्वेदनयोः समानमेवाम्नायते—

'यथा ह वा अग्निर्देवानामन्नाद एवं ह वा एष मनुष्याणां भवति, य एतेन हविषा यजते य उ चैनदेवं वेद' ( तै० ब्रा० ३ । १। ४ । १ ) इति। अतो यागवत् फलाय स्ववेदनमपि विधीयते। अनेन न्यायेन सर्वेष्वपि ब्राह्मणेषु वेदनविधयो द्रष्टव्याः।

ननु ' विद्याप्रशंसा ' ( पू० मी० १ । २ । १५ ) इति सूत्रे वेदनफलानां प्रशंसारूपत्वं जैमिनिना सूत्रितमिति चेत् । अस्तु नाम। विद्यमानेनापि फलेन प्रशंसितुं शक्यत्वात् । दर्शयागस्य पूर्णमासयागस्य चातिपाते सति प्रायश्चित्तरूपां वैश्वानरेष्टिं विधातुं विद्यमानेनैव स्वर्गफलेन स्तुतिः क्रियते ।' सुवर्गाय हि लोकाय दर्शपूर्णमासाविज्येते' ( तै० सं० २ । २ । ५ । ४) इति। एतच्चाचार्यैर्ब्रह्मज्ञानफलवाक्यस्य स्वार्थेऽपि तात्पर्यं दर्शयितुमुदाहृतम्—

'इच्छाम्येवार्थवादत्वं वचसोऽन्यपरत्वतः।
यथावस्त्वभिधायित्वान्न त्वभूतार्थवादता॥

इज्येते स्वर्गलोकाय दर्शादर्शौ यथा, तथा ।
न त्वभूतार्थवादत्वं पापश्लोका श्रुतिर्यथा ॥' इति ।

न च वेदनमात्रेण फलसिद्धावनुष्ठानवैयर्थ्यमिति शङ्कनीयम् । फलभूयस्त्वेन परिहृतत्वात् ।

उदाहृतं चात्र जैमिनिसूत्रम्—

'फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः सारतो वा फलविशेषः स्यात्' ( पू० मी० १ । २ । १७ ) इति ।

एतच्चास्माभिः 'तरति ब्रह्महत्यां योऽश्वमेधेने यजते य उ चैनमेवं वेद' इत्युदाहरणेन व्याख्यातम् ।

छन्दोगाश्च केवलादनुष्ठानाद्विद्यासहितेऽनुष्ठाने फलातिशयमामनन्ति—'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद । नाना तु विद्या चाविद्या च । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' ( छा० उ० १ । १ । १० ) इति । यद्यप्यङ्गावबोधोपास्तिरत्र विद्याशब्देन विवक्षिता, तथापि न्यायः सर्वास्वपि विद्यासु समानः ।

कुतस्तवैतावती वेदने भक्तिरिति चेत् । कुतो वा तवैतावान्प्रद्वेषः । प्रशंसा त्वस्माभिर्भूयसी दर्शिता । निन्दां तु न क्वाप्युपलभामहे । किं तु कर्मजन्यमपूर्वं यथा मरणादूर्ध्वं जीवेन सह गच्छति, तथा विद्याजन्यमप्यपूर्वं गच्छति । तथा च वाजसनेयिन आमनन्ति—'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' ( शत० ब्रा० १४ । ७ । २ । ३ ) ( तै० सं० ५ । ३ । १२ ) इति । तस्मादध्ययनवदर्थज्ञानस्यापि विहितत्वादर्थज्ञानाय वेदो व्याख्यातव्यः ॥

---

विषयप्रयोजनसम्बन्धाधिकारिज्ञानमन्तरेण श्रोतृप्रवृत्त्यभावाद्विषयादयो निरूप्यन्ते । व्याख्यानस्य व्याख्येयो वेदो विषयः । तदर्थज्ञानं प्रयोजनम् । व्याख्यानव्याख्येयभावः सम्बन्धः । ज्ञानार्थी चाधिकारी । यद्यप्येतावत् प्रसिद्धं, तथापि वेदस्य विषयाद्यभावे व्याख्यानस्यापि परमविषयादिकं न स्यात्, अतो वेदस्य चतुष्टयमुच्यते । वेदे

पूर्वोत्तरकाण्डयोः क्रमेण धर्मब्रह्मणी विषयः । तयोरनन्यलभ्यत्वात् ।

तथा च पुरुषार्थानुशासने सूत्रितम्—

'धर्मब्रह्मणी वेदैकवेद्ये' इति । जैमिनीये च द्वितीयसूत्रे चोदनैव धर्मे प्रमाणम्, चोदना प्रमाणमेवेति नियमद्वयं सम्प्रदायविद्भिरभिहितम् । चोदनैवेत्यमुमर्थमुपपादयितुं चतुर्थसूत्रे प्रत्यक्षविषयत्वं धर्मस्य निराकृतम्—'प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्' (पू० मी० १ । १ । ४ ) इति । अनुष्ठानादूर्ध्वमुत्पत्स्यमानस्य धर्मस्य पूर्वमविद्यमानत्वान्न प्रत्यक्षयोग्यतास्ति । उत्तरकालेऽपि रूपादिराहित्यान्नेन्द्रियैरवगम्यते । अत एवादृष्टमिति सर्वैरभिधीयते । लिङ्गराहित्यान्नानुमानविषयत्वमप्यस्ति । सुखदुःखे धर्माधर्मयोर्लिङ्गमिति चेत् । बाढम् । अयमपि लिङ्गलिङ्गिभावो वेदेनैव गम्यते । ततश्चोदनैव धर्मे प्रमाणम् ।

वैयासिकस्य तृतीयसूत्रस्य द्वितीयवर्णके ब्रह्मणः सिद्धवस्तुनोऽपि शास्त्रैकविषयत्वं भाष्यकृद्भिर्व्याख्यातम्—'शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यते इत्यभिप्रायः' इति । श्रुतिश्च भवति—'नावेदविन्मनुते तं बृहन्तम्' ( तै० ब्रा० ३ । १२ । ९ ) इति । तत्रोपपत्तिः पूर्वाचार्यैरेवमुदीरिता—'रूपलिङ्गादिराहित्यान्न मानान्तरयोग्यता' इति । तस्मादनन्यलभ्यत्वादस्ति धर्मब्रह्मणोर्वेदविषयत्वम् ।

तदुभयज्ञानं वेदस्य साक्षात् प्रयोजनम् । न च तस्य ज्ञानस्य सप्तद्वीपा वसुमती राजासौ गच्छतीत्यादिज्ञानवदपुरुषार्थपर्यवसायित्वं शङ्कनीयम्, धर्मप्रयुक्तस्य पुरुषार्थस्य स्तूयमानत्वात् । 'धर्मो विश्वस्य जगतः प्रतिष्ठा, लोके धर्मिष्ठं प्रजा उपसर्पन्ति, धर्मेण पापमपनुदन्ति धर्मे सर्वं प्रतिष्ठितम्, तस्माद्धर्मं परमं वदन्ति' ( तै० आ० १० । ६३ । ७ ) इति । उद्दण्डस्य राज्ञो नियामकत्वाद्विवदमानयोः पुरुषयोर्मध्ये दुर्बलस्यापि राजसाहाय्यवज्जयहेतुत्वाच्च धर्मः पुरुषार्थः । तथा च वाजसनेयिनः सृष्टिप्रकरणे समामनन्ति—'तच्छ्रेयो रूपमत्यसृजत

धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथोऽबलीयान्बलीयांसमाशंसते धर्मेण यथा राज्ञैवम्' ( शत० ब्रा० १४ । ४ । २ । २६ ) इति । 'ब्रह्मविदाप्नोति परं' ( तै० आ० ८ । १ ) । 'ब्रह्म वेद ब्रह्मैव भवति । तरति शोकमात्मवित्' ( छां० उ० ७ । १ । ३ ) इत्यादिश्रुतिषु ब्रह्मज्ञानप्रयुक्तः पुरुषार्थः प्रसिद्धः । तदुभयज्ञानार्थी वेदेऽधिकारी । स च त्रैवर्णिकः पुरुषः । स्त्रीशूद्रयोस्तु सत्यामपि ज्ञानापेक्षा-

---

१ पूर्वमीमांसायां ( अ० ६ पा० १ अ० ७ ) उत्तरमीमांसायां ( अ० १ पा० ३ सू० १० ) च शूद्रस्यैव वेदाध्ययनानधिकारो दर्शितः, न तु स्त्रीणाम् । अतस्तासां पतिसमानाधिकारत्वमेव । अत एव-(जै०न्या० अ० ६ पा० १ अ० ४ )

'स्त्रिया न सोऽस्त्यस्ति वा, नो पुंलिङ्गेन तदीरणात् ।
प्रकृत्यर्थतया लिङ्गं संख्यावन्नाविवक्षितम् ॥
अस्त्युद्देश्यगतत्वेन संख्यया सदृशत्वतः ।
यद्विभक्तिविकारादेरर्थस्तत्प्रकृतेर्न तु ॥'

'स्वर्गकामो यजेत' इति पुंलिङ्गशब्देनाधिकारिणो विधानात् सोऽधिकारः स्त्रिया नास्ति । न च ग्रहैकत्ववल्लिङ्गमविवक्षितम्, इति वाच्यम्, एकत्ववल्लिङ्गस्य प्रत्ययार्थत्वाभावात् । प्रकृत्यर्थतया तु ग्रहवद्विवक्षितं पुंलिङ्गम् । इति प्राप्ते—

ब्रूमः—

अस्ति स्त्रियाः कर्माधिकारः । कुतः पुंलिङ्गस्याविवक्षितत्वात् न ह्येकत्वस्य प्रत्ययार्थत्वमविवक्षायां निमित्तम् । किन्तूद्देश्यगतत्वम् । इहापि 'यः स्वर्गकामः स यजेत' इतिवचनव्यक्तौ पुंलिङ्गस्योद्देश्यगतत्वेनकत्वसंख्यासदृशत्वान्नास्ति विवक्षितत्वम् । न च प्रकृत्यर्थो लिङ्गम् ।

किन्तु स्त्रीलिङ्गं तावट्टाबादिभिः स्त्रीप्रत्ययैरभिधीयते । पुंलिङ्गं तु 'वृक्षान्' इत्यस्मिन् द्वितीयाबहुवचने विभक्तिविकारेण नकारादेशलक्षणेनाभिव्यज्यते । एवम् 'कुलम्' इत्यस्मिन् प्रथमैकवचने

यामुपनयनाभावेनाध्ययनराहित्याद्वेदेऽधिकारः प्रतिबद्धः । धर्मब्रह्मज्ञानं तु पुराणादिमुखेनोत्पद्यते । तस्मात् त्रैवर्णिकपुरुषाणां वेदमुखेनार्थज्ञानेऽधिकारः ।

---

नपुंसकाभिव्यक्तिः । तस्माल्लिङ्गस्य प्रकृत्यर्थत्वाभावादुद्देश्यगतत्वेनाविवक्षितत्वाच्च स्त्रिया अप्यधिकारः ।

'अथ च—विवाहरहितानामपि ब्रह्मवादिनीनामुपनयनादिभिरुत्तमलोकसम्भवात् । अत एव हारीतेनोक्तम्—' द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च, तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे भिक्षाचर्य्या ' इति । वधूनां तूपस्थिते विवाहे कथञ्चिदुपनयनमात्रं कृत्वा विवाहः कार्य्य इति । नैवम् । तस्य कल्पान्तरविषयत्वात् ।

तथा च यमः—

'पुराकल्पे कुमा( तु ना )रीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनं च वेदानां सावित्रीवाचनं तथा * ॥
पिता पितृव्यो भ्राता वा नैनामध्यापयेत् परः ।
स्वगृहे चैव कन्याया भैक्षचर्य्या विधीयते ॥
वर्जयेदजिनं चीरं जटाधारणमेव च ॥ '
( पराशरमाधव २ अ० पृ० ४८५ ) ।

इति स्वोक्तिद्वयं सङ्गच्छते । तस्मान्निश्चीयते स्त्रीपदमत्र केनचिन्महात्मना प्रक्षिप्तम् । एतदधिकरणानुसारेण सर्वेषु यागेषु स्त्रिया अधिकारप्राप्तौ वेदाध्ययनमन्तरा तदनुपपत्त्या 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत' इत्यत्रापि तस्या अधिकारित्वसिद्धौ का हानिः । उत्तराधिकरणेन ( ६ । १ । ५ ) दम्पत्योः सहैवाधिकारो बोधितो न तु पृथक् । तेन पत्यौ जीवति तस्या अप्रधानत्वात् स्वातन्त्र्यं नास्तीत्येव सूचितमिति त्वन्यत् ।

---

* बहुषु पुस्तकेषु ' सावित्रीवचनम् ' इति पाठो दृश्यते, स तु

सम्बन्धस्तु वेदस्य धर्मब्रह्मभ्यां सह प्रतिपाद्यप्रतिपादकभावः। तदीयज्ञानेन सह जन्यजनकभावः। त्रैवर्णिकपुरुषैः सहोपकार्योपकारकभावः। तदेवं विषयाद्यनुबन्धचतुष्टयमवगत्य समाहितधियः श्रोतारो वेदव्याख्याने प्रवर्त्तताम्।

---

अतिगम्भीरस्य वेदस्यार्थमवबोधयितुं शिक्षादीनि षडङ्गानि प्रवृत्तानि। अत एव तेषामपरविद्यारूपत्वं मुण्डकोनिषद्याथर्वणिका आमनन्ति—'द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति-परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते' (मु० उ० १।१।४) इति। साधनभूतधर्मज्ञानहेतुत्वात् षडङ्गसहितानां कर्मकांडानामपरविद्यात्वम्। परमपुरुषार्थभूतब्रह्मज्ञानहेतुत्वादुपनिषदां परविद्यात्वम्।

वर्णस्वराद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षा। तथा च तैत्तिरीया उपनिषदारम्भे समामनन्ति—' शीक्षां व्याख्यास्यामः। वर्णः स्वरो मात्रा बलं साम सन्तान इत्युक्तः शीक्षाध्यायः' (तै० आ० ७२) इति। वर्णोऽकारादिः। स चाङ्गभूतशिक्षाग्रन्थे स्पष्टमुदीरितः—

त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः सम्भवतो मताः।

---

प्रामादिकः, यतः—

' मनसा भर्तुरतिचारे त्रिरात्रं यावकं क्षीरोदनं वा भुञ्जानाधः शयीत ऊर्ध्वं त्रिरात्रादप्सु निमग्नायाः सावित्र्याष्टशतेन शिरोभिर्जुहुयात् पूता भवति' (अ० २० ख० ५) इति वसिष्ठस्मृतौ तत्तत्प्रायश्चित्तार्थं स्त्रीणामपि गायत्रीजपहोमविधानस्यान्यथानुपपत्त्या गायत्रीवचनस्यावश्यकत्वात्। तस्मात् सावित्र्या वाचनं इति पाठस्यैव प्रामाणिकत्वे ' अध्यापनम्' 'वाचनम्' इत्युभयत्रापि णिजर्थभूतप्रयोजकत्वस्यास्मिन् कल्पे निषेधेऽपि धात्वर्थव्यापाराश्रयत्वरूपप्रयोज्यत्वस्य निषेधे मानाभावः।

प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा' ( शि० ३ )

इत्यादिना ।

स्वर उदात्तादिः । सोऽपि तत्रोक्तः—

'उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः' ( शि० ११ ) ।

मात्रा ह्रस्वादिः । सापि तत्रोक्ता—

'ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि' (शि०११) इति।

बलं स्थानप्रयत्नौ । तत्र 'अष्टौ स्थानानि वर्णानाम्' ( शि० १३ ) इत्यादिना स्थानमुक्तम् । 'अचोऽस्पृष्टा यणस्त्वीषत्' इत्यादिना ( शि० ३८ ) प्रयत्न उक्तः । सामशब्देन साम्यमुक्तम् । 'अतिद्रुतातिविलम्बितगीत्यादिदोषराहित्येन माधुर्यादिगुणयुक्तत्वेनोच्चारणं साम्यम् । 'गीती शीघ्री शिरःकम्पी' ( शि० ३२ ) इत्यादिना 'उपांशु दष्टं त्वरितम्' (शि० ३५) इत्यादिना च दोषा उक्ताः । 'माधुर्यमक्षरव्यक्तिः' ( शि० ३३ ) इत्यादिना गुणा उक्ताः । सन्तानः संहिता 'वायवायाहि' इत्यत्रावादेशः, 'इन्द्राग्नी आगतम्' इत्यत्र प्रकृतिभावः । एतच्च व्याकरणेऽभिहितत्वाच्छिक्षायामुपेक्षितम् । शिक्ष्यमाणवर्णादिवैकल्ये बाधस्तत्रोदाहृतः—

'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्'॥(शि०५२)इति।

'इन्द्रशत्रुर्वर्धस्व' ( तै० सं० २ । ४ । १२ । १ ) इत्यस्मिन् मन्त्र इन्द्रस्य शत्रुर्घातक इत्यस्मिन् विवक्षितेऽर्थे तत्पुरुषसमासे 'समासस्य' ( अष्टाध्या० ६ । १ । २२३ ) इति सूत्रेण तत्पुरुषत्वादन्तोदात्तेन भवितव्यम् । आद्युदात्तस्तु प्रयुक्तः । तथा सति पूर्वपदप्रकृतिस्वरत्वेन बहुव्रीहित्वादिन्द्रो घातको यस्येत्यर्थः सम्पन्नः । तस्मात् स्वरवर्णाद्यपराधपरिहाराय शिक्षाग्रन्थोऽपेक्षितः ।

कल्पस्त्वाश्वलायनापस्तम्बबौधायनादिसूत्रम् । कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेतिव्युत्पत्तेः ।

नन्वाश्वलायनः किं मन्त्रकाण्डमनुसृत्य प्रवृत्तः, किं वा ब्राह्म-

णमनुसृत्य । नाद्यः । 'दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः' ( आ० १ । १ । ३ ) इत्येवं तेनोपक्रान्तत्वात् । न हि 'अग्निमीळे' ( ऋ० १।१।१ ) इत्यादयो मन्त्रा दर्शपपूर्णमासयोः कचिद्विनियुक्ताः । न द्वितीयः । 'आग्नावैष्णवं पुरोडाशं निर्वपन्ति दीक्षणीयमेकादशकपालम्' ( ऐ० ब्रा० १ । १ ) इत्येवं दीक्षणीयेष्टेर्ब्राह्मणे प्रक्रान्तत्वात् ।

अत्रोच्यते—मन्त्रकाण्डो ब्रह्मयज्ञादिजपक्रमेण प्रवृत्तो न तु यागानुष्ठानक्रमेण । ब्रह्मयज्ञश्चैवं विहितः—'यत्स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तद् ब्रह्मयज्ञः' ( तै० आ० २ । १० । ६ ) इति । सोऽयं ब्रह्मयज्ञजपोऽग्निमील इत्याम्नायक्रमेणैवानुष्ठेयः । तथा सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि वाचः स्तोमे पारिप्लवं शंसतीति विधीयते । तथाश्विने शस्यमाने ( सम्पत्स्यमाने ) सूर्यो नोदियादपि सर्वा दाशतयीरनुब्रूयादिति विधीयते—'तथा रिच्यत इव वा एष प्रेव रिच्यते, यो याजयति प्रति वा गृह्णाति याजयित्वा प्रतिगृह्य वानश्नन् त्रिःस्वाध्यायं वेदमधीयीत' ( तै० आ० २ । १६ ) इति प्रायश्चित्तरूपं वेदपारायणं विहितम् । इत्यादिषु कृत्स्नमन्त्रकाण्डविनियोगेषु सम्प्रदायपारम्पर्यागत एव क्रम आदरणीयः ।

विशेषविनियोगांस्तु मन्त्रविशेषाणां श्रुतिलिङ्गवाक्यादिप्रमाणान्युपजीव्याश्वलायनो दर्शयति । अतो मन्त्रकाण्डक्रमाभावेऽपि न कश्चिद् विरोधः ।

'इषे त्वा' इत्यादिमन्त्रास्तु क्रत्वनुष्ठानक्रमेणैवाम्नाता इत्यापस्तम्बादयस्तेनैव क्रमेण सूत्रनिर्माणे प्रवृत्ताः । आम्नातत्वादेव जपादिष्वपि स एव क्रमः । यद्यपि ब्राह्मणे दीक्षणीयेष्टिरुपक्रान्ता, तथापि तस्या इष्टेर्दर्शपूर्णमासविकृतित्वेन तदपेक्षत्वादाश्वलायनस्यादौ तद्व्याख्यानं युक्तम् । अतः कल्पसूत्रं मन्त्रविनियोगेन क्रत्वनुष्ठानमुपदिश्योपकरोति ।

तर्हि 'प्र वो वाजा' इत्यादीनां सामिधेनीनामृचामेव विनियोगमाश्वलायनो ब्रवीतु । 'नमः प्रवक्त्रे' ( आ० १ । २ ) इत्यादयस्त्वनाम्नाताः कुतो विनियुज्यन्त इति चेत् । नायं दोषः । शाखान्तरसमा-

ज्ञातानां ब्राह्मणान्तरसिद्धस्य विनियोगस्य गुणोपसंहारन्यायेनात्र वक्तव्यत्वात् । सर्वशाखाप्रत्ययमेकं कर्मेति न्यायविदः । तस्माच्छिक्षेव कल्पोऽप्यपेक्षितः ।

व्याकरणमपि प्रकृतिप्रत्ययाद्युपदेशेन पदस्वरूपतदर्थनिश्चयायोपयुज्यते । तथा चैन्द्रवायवग्रहब्राह्मणे समाम्नयते—'वाग्वै पराच्यव्याकृताऽवदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति । सोऽब्रवीद्वरं वृणै मह्यं चैवैष वायवे च सह गृह्याता इति तस्मादैन्द्रवायवः सह गृह्यते तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् । तस्मादियं व्याकृता वागुद्यते' (तै० सं० ६ । ४ । ७ । ३ ) इति । 'अग्निमीळे पुरोहितम्' इत्यादिवाक् पूर्वस्मिन् काले पराची समुद्रादिध्वनिवदेकात्मिका सती अव्याकृता प्रकृतिः प्रत्ययः पदं वाक्यमित्यादिविभागकारिग्रन्थरहितासीत् । तदानीं देवैः प्रार्थित इन्द्र एकस्मिन्नेव पात्रे वायोः स्वस्य च सोमरसग्रहणरूपेण वरेण तुष्टस्तामखण्डां वाचं मध्ये विच्छिद्य प्रकृतिप्रत्ययादिविभागं सर्वत्राकरोत् । तस्मादियं वागिदानीमपि पाणिन्यादिमहर्षिभिर्व्याकृता सर्वैः पठ्यत इत्यर्थः ।

तस्यैतस्य व्याकरणस्य प्रयोजनविशेषो* वररुचिना वार्तिके

---

*'इतः पूर्वं तु सवार्तिकशास्त्रान्वाख्यानप्रयोजनविषयप्रदर्शनपरो भाष्यकारस्यैव ग्रन्थ इति बोध्यम्' इति । 'सिद्धे शब्दार्थसम्बन्धे' इतिवार्तिकव्याख्यावसरे भाष्यप्रदीपोद्द्योते नागेशोक्त्यायं ग्रन्थो भाष्यकारस्यैवेति निश्चीयते। अत एव भाष्यकृता सिद्धपदस्यैव ग्रन्थारम्भे मङ्गलार्थत्वं स्थापितम् । भट्टोजिदीक्षितेनापि समासकौमुद्यामुक्तवाक्यस्य भाष्यीयत्वमेवोक्तम् । भाष्यकृतामेव शैली यत् स्वयं सूत्ररूपतयोक्तमेव व्याख्यायते । अत एव 'स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः' इति गुरुसम्प्रदायाकर्णितवाक्यं सङ्गच्छते । तस्मादत्र केनचित् सम्प्रदायानधीतभाष्येणैवं शोधितमिति प्रतीयते इति बोध्यम् ।

दर्शितः। 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इति। एतानि रक्षादि-प्रयोजनानि प्रयोजनान्तराणि च महाभाष्ये (महा० भा० आ० १) पतञ्जलिना स्पष्टीकृतानि।

रक्षार्थं वेदानामध्येयं व्याकरणम्। लोपागमवर्णविकारज्ञो हि सम्यग्वेदान् परिपालयिष्यति वेदार्थं चाध्यवस्यति।

ऊहः खल्वपि। न सर्वैर्लिङ्गैर्न सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः। ते चावश्यं यज्ञगतेन यथायथं विपरिणमयितव्याः। तान्नावैयाकरणः शक्नोति विपरिणमयितुम्। तस्मादध्येयं व्याकरणम्।

आगमः खल्वपि 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति। प्रधानं च षट्स्वङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति।

लघ्वर्थं चाध्येयं व्याकरणम्। बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम। बृहस्पतिश्च वक्ता। इन्द्रश्चाध्येता। दिव्यं वर्षसहस्रमध्ययनकालः। अन्तं च न जगाम। अद्य तु पुनर्यदि परमायुर्भवति स वर्षशतं जीवति। तत्र कुतः प्रतिपदपाठेन सकलपदावगमः। कुतस्तरां प्रयोगेण।

असन्देहार्थं चाध्येयं व्याकरणम्। याज्ञिकाः पठन्ति—'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' इति। तत्र न ज्ञायते किं स्थूलानि पृषन्ति यस्याः सा स्थूलपृषती किं वा स्थूला चासौ पृषती च स्थूलपृषतीति। तां नावैयाकरणः स्वरतोऽध्यवस्यति। यदि समासान्तोदात्तत्वं तदा कर्मधारयः। अथ पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिरिति।

इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि।

तेऽसुराः। दुष्टः शब्दः। यदधीतम्। यस्तु प्रयुङ्क्ते। अविद्वांसः। विभक्तिं कुर्वन्ति। यो वा इमाम्। चत्वारि। उत त्वः। सक्तुमिव सारस्वतीम्। दशम्यां पुत्रस्य। सुदेवो असि वरुण इति।

तेऽसुराः—

'तेऽसुराः* हेऽलयो हेऽलय इति कुर्वन्तः पराबभूवुः । तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै । म्लेच्छो ह वा एष यदपशब्दः ।' म्लेच्छा मा भूमेत्यध्येयं व्याकरणम् ।

दुष्टः शब्दः—'दुष्टः शब्दः† स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥

इति । दुष्टाञ्छब्दान् मा प्रयुक्ष्महीत्यध्येयं व्याकरणम् ।

यदधीतम्—'यदधीत‡मविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥'

अविज्ञातमनर्थकं माधिगीष्महीत्यध्येयं व्याकरणम् ।

यस्तु प्रयुङ्क्ते—

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः ॥
( कात्यायन निर्मित भ्रजानाम श्लोकः )

कः वाग्योगविदेव । यो हि शब्दाञ्जानाति, अपशब्दानप्यसौ जानाति । यथैव शब्दज्ञाने धर्म एवमपशब्दज्ञानेऽप्यधर्मः प्राप्नोति । अथवा भूयानधर्मः प्राप्नोति । भूयांसो ह्यपशब्दाः । अल्पीयांसः शब्दाः। एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः । यथा 'गौः' इत्येतस्य शब्दस्य गावी गोणा गोता गोपोतलिकेत्येवमादयः । अथ योऽवाग्योगविदज्ञानं तस्य शरणम् । विषम उपन्यासः । नात्यन्तायाज्ञानं शरणं भवितुमर्हति। यो ह्यजानन्वै ब्राह्मणं हन्यात् सुरां वा पिबेत् सोऽपि मन्ये पतितः स्यात्। एवं तर्हि कः । अवाग्योगविदेव अथ यो वाग्योगविज्ज्ञानं तस्य शरणम्।

---

*तेऽसुरा आत्तवचसो हेऽलवो हेऽलव इति वदन्तः पराबभूवुः (शत० ब्रा० ३।२।१ २३)......तस्मान्न ब्राह्मणो म्लेच्छेदिति ( ३।२।१।२४ )

† 'दुष्टः शब्दः' इत्यस्य स्थाने मन्त्रो हीनः इति पाठः (ना० शि० १।५ पा० शि० श्लो० ५२ )

‡ निरुक्ते (१।१८ खण्डे) यदधीतमित्यस्य स्थाने यद्गृहीतमिति पाठः ।

अविद्वांसः*—अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः ।
कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ॥ इति ।

स्त्रीवन्मा भूमेत्यध्येयं व्याकरणम् ।

विभक्तिं कुर्वन्ति † विभक्तिं कुर्वन्ति–याज्ञिकाः पठन्ति–'प्रयाजाः सविभक्तिकाः कर्तव्याः' इति । न चान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम् । तस्मादध्येयं व्याकरणम् ।

यो वा इमाम्—यो वा इमां पदशः स्वरशोऽक्षरशो वर्णशो वाचं विदधाति स आर्त्विजीनो भवति ।

आर्त्विजीनाः ‡ स्यामेत्यध्येयं व्याकरणम् ।

चत्वारि—चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश ॥
(ऋग्वेद ४ । ५८ । ३) इति ।

चत्वारि शृङ्गा चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च । त्रयो अस्य पादाः त्रयः काला भूतभविष्यद्वर्त्तमानाः । द्वे शीर्षे सुपस्तिङश्च । सप्त हस्तासो अस्य सप्त विभक्तयः । त्रिधा बद्धः—त्रिषु स्थानेषु बद्धः–उरसि कण्ठे शिरसि च । वृषभो वर्षणात् कामानाम् । रोरवीति । रौतिः शब्दकर्मा । महो देवो मर्त्याँ आ विवेश । महता देवेन नस्तादात्म्यं यथा स्यादित्यध्येयं व्याकरणम् ।

अथवा चत्वारि—

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।

---

* नामधेयस्य ये केचिदभिवादं न जानते ।
तान् प्राज्ञोऽयमहं ब्रूयात् स्त्रियः सर्वास्तथैव च ॥ (मनु २ । १२३)

† 'प्रयाजानां विभक्तीः कुर्यात्-कस्मात्-सविभक्तयः प्रयाजा भवन्तीति ( का० सं० ६ । १ मै० सं० १ । ७ । ३ । ४)

‡ वर्णशोऽक्षरशो ज्ञानादविभक्तिपदशोऽपि च । (वाज० प्रा० ८।२७)

गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥
( ऋ० १ । १६४ । ४५ गो० ब्रा० २ । १६ ) ।

ये मनीषिणः । मनस ईषिणो मनीषिणः । गुहायां त्रीणि निहितानि नेङ्गयन्ति । न चेष्टन्ते । न निमिषन्ति । तुरीयं वाचो मनुष्या वदन्ति । तुरीयं ह वा एतद्वाचो यन्मनुष्येषु वर्तते ॥

उत त्वः—

'उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः ॥'
( ऋ० वे० १० । ७१ । ४ )

अपि खल्वेकः पश्यन्नपि न पश्यति, अपि खल्वेकः शृण्वन्नपि न शृणोत्येनाम् । अविद्वांसमाहार्धम् । त्वस्मै अन्यस्मै तन्वं वि सस्रे—तनुं विवृणुते । जायेव पत्य उशती सुवासाः । यथा जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते, एवं वाग् वाग्विदे स्वमात्मानं विवृणुते । वाङ् नो विवृणुयादित्यध्येयं व्याकरणम् ।

सक्तुमिव—

'सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥'
( ऋ० वे० १० । ७१ । २ )

सक्तुः सचतेर्दुर्धावो भवति । कसतेर्वा स्याद्विपरीतस्य विकसितो भवति । तितउ परिपवनं भवति, ततवद्वा, तुन्नवद्वा । धीराः ध्यानवन्तः मनसा प्रज्ञानेव वाचमक्रत वाचमकृषत । अत्रा सखायः सख्यानि जानते । अत्र सखायः सख्यानि सञ्जानते । सायुज्यानि जानते । क एष दुर्गो मार्गः । एकगम्यः । वाग्विषयः । के पुनस्ते । वैयाकरणाः । कुत एतत् । भद्रैषां लक्ष्मीर्निहिताधिवाचि । एषां वाचि भद्रा लक्ष्मीः निहिता भवति । लक्ष्मीर्लक्षणाद्भासनात् परिवृढा भवति ।

सारस्वतीम्—

याज्ञिकाः पठन्ति—'आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेदिति ।'

प्रायश्चित्तीया मा भूमेत्यध्येयं व्याकरणम् ।

दशम्यां पुत्रस्य—

दशम्यां पुत्रस्य जातस्य नाम विदध्याद्घोषवदाद्यन्तरन्तस्थमभिनिष्ठान्तं द्व्यक्षरं चतुरक्षरं वा कृतं नाम कुर्यान्न तद्धितमिति । न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम् । तस्माद्ध्येयं व्याकरणम् ।

सुदेवो असि—

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः ।
अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥

( ऋ० वे० ८ । ६९ । १२ )

सप्त सिन्धवः सप्त विभक्तयः । काकुज्जिह्वा । सास्मिन्विद्यत इति काकुदं तालु । सूर्मिः स्थूला लोहप्रतिमेति । एवं 'सिद्धे शब्दार्थसम्बन्धे' इत्यादिवार्तिकोक्तान्यत्रापि प्रयोजनान्यनुसन्धेयानि ।

अथ निरुक्तप्रयोजनमुच्यते—'अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम् । गौः ग्मा ज्मा क्ष्मा क्षा क्षमा' इत्यारभ्य 'वसवः वाजिनः देवपत्न्यो देवपत्न्यः' इत्यन्तो यः पदानां समाम्नायः समाम्नातस्तस्मिन् ग्रन्थे पदार्थावबोधाय परापेक्षा न विद्यते । एतावन्ति पृथिवीनामान्येतावन्ति हिरण्यनामानीत्येवं तत्र तत्र विस्पष्टमभिहितत्वात् । तदेतन्निरुक्तं त्रिकाण्डम् । तच्चानुक्रमणिकाभाष्ये दर्शितम्—

आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा ।
तृतीयं दैवतं चेति समाम्नायस्त्रिधा स्थितः ॥
गौराद्यपारपर्यन्तमाद्यं नैघण्टुकं मतम् ।
जहाद्युल्बमृबीसान्तं नैगमं सम्प्रचक्षते ॥
अग्न्यादिदेवपत्न्यन्तं देवताकाण्डमुच्यते ।
अग्न्यादिदेवीऊर्जाहुत्यन्तः क्षितिगतो गणः ॥
वाय्वादयो भगान्ताः स्युरन्तरिक्षस्थदेवताः ।

सूर्यादिदेवपत्न्यन्ता द्युस्थाना देवता इति ।
गवादिदेवपत्न्यन्तं समाम्नायमधीयते' ॥ इति ॥

एकार्थवाचिनां पर्यायशब्दानां संघो यत्र प्रायेणोपदिश्यते तत्र निघण्टुशब्दः प्रसिद्धः । तादृशेष्वमरसिंहवैजयन्तीहलायुधादिषु दश निघण्टव इति व्यवहारात् । एवमत्रापि पर्यायशब्दसंघोपदेशादाद्यकाण्डस्य नैघण्टुकत्वम् । तस्मिन् काण्डे त्रयोऽध्यायाः । तेषु प्रथमे पृथिव्यादिलोकदिक्कालादिद्रव्यविषयाणि नामानि । द्वितीये मनुष्यतदवयवादिद्रव्यविषयाणि । तृतीये तदुभयद्रव्यगततनुबहुत्वह्रस्वत्वादिधर्मविषयाणि ।

निगमशब्दो वेदवाची । यास्केन तत्र तत्रापि निगमो भवतीत्येवं वेदवाक्यानामवतारितत्वात् । तस्मिन्निगम एव प्रायेण वर्तमानानां शब्दानां चतुर्थाध्यायरूपे द्वितीयस्मिन् काण्ड उपदिष्टत्वात्तस्य काण्डस्य नैगमत्वम् ।

पञ्चमाध्यायरूपस्य तृतीयकाण्डस्य दैवतत्वं विस्पष्टम् ।

पञ्चाध्यायरूपकाण्डत्रयात्मक एतस्मिन् ग्रन्थे परनिरपेक्षतया पदार्थस्योक्तत्वात्तस्य ग्रन्थस्य निरुक्तत्वम् । तद्व्याख्यानं च 'समाम्नायः समाम्नातः' इत्यारभ्य 'तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति' इत्यन्तैर्द्वादशभिरध्यायैर्यास्को निर्ममे । तदपि निरुक्तमित्युच्यते । एकैकस्य पदस्य सम्भाविता अवयवार्थास्तत्र निःशेषेणोच्यन्त इति व्युत्पत्तेः । तत्र हि 'चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च' इति प्रतिज्ञाय 'उच्चावचेष्वर्थेषु निपतन्ति' इति निपातस्वरूपं निरुच्यैवमुदाहृतम्—"नेति प्रतिषेधार्थीयो भाषायामुभयमन्वध्यायम् । 'नेन्द्रं देवममंसत' इति प्रतिषेधार्थीय इति 'दुर्मदासो न सुरायाम्' इत्युपमार्थीयः" इति च (नि० १।४)। तच्च लोके केवलप्रतिषेधार्थीयस्यापि नकारस्य वेदे प्रतिषेधोपमालक्षणोभयार्थोदाहरणमस्मिन् ग्रन्थेऽवगम्यते । एवं ग्रन्थकारेणोक्तास्तत्तत्पदनिर्वचनविशेषास्तत्तन्मन्त्रव्याख्यानावसर एवास्माभिरुदाहरिष्यन्ते । न च निर्वचनानां निर्मूलत्वं शङ्कनीयम् ।

एतद्व्युत्पत्त्यर्थमेव ब्राह्मणेषु पदनिर्वचनानां केषाञ्चिदुक्तत्वात् । 'तदाहुतीनामाहुतित्वम्' इति । 'तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते' (ऐ० आ० २।४।३) इति । 'यदप्रथयत्तत्पृथिव्याः (व्यै) पृथिवीत्वम्' (तै० ब्रा० १।१।३।७) इति च । ग्रन्थकारोऽपि तत्र तत्र स्वोक्तनिर्वचनमूलभूतब्राह्मणान्युदाहरिष्यति । केषाञ्चिन्निर्वचनानां व्याकरणबलेन सिद्धावपि न सर्वेषां सिद्धिरस्ति । अत एव ग्रन्थकार आह— 'तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकं च' (नि० १।१५) इति । तस्माद्वेदार्थावबोधायोपयुक्तं निरुक्तम् ।

तथा छन्दोग्रन्थोऽप्युपयुज्यते । छन्दोविशेषाणां तत्र तत्र विहितत्वात् । 'तस्मात् सप्त चतुरुत्तराणि छन्दांसि प्रातरनुवाकेऽनूच्यन्त' इति ह्याम्नातम् । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीत्येतानि सप्त छन्दांसि । चतुर्विंशत्यक्षरा गायत्री । ततोऽपि चतुर्भिरक्षरैरधिकाष्टाविंशत्यक्षरोष्णिक् । एवमुत्तरोत्तराधिका अनुष्टुबादयोऽवगन्तव्याः । तथान्यत्रापि श्रूयते—'गायत्रीभिर्ब्राह्मणस्यादध्यात् । त्रिष्टुब्भी राजन्यस्य । जगतीभिर्वैश्यस्य' इति । तत्र मगणयगणादिसाध्यो गायत्र्यादिविवेकश्छन्दोग्रन्थमन्तरेण न सुविज्ञेयः । किं च । यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छेति गर्तं वापद्यति प्र वा मीयते (गर्ते वा पात्यते प्रमीयते वा) पापीयान् भवति । तस्मादेतानि मन्त्रे मन्त्रे विद्यात्' इति श्रूयते । तस्मात्तद्वेदनाय छन्दोग्रन्थ उपयुज्यते ॥

ज्योतिषस्य प्रयोजनं तस्मिन्नेव ग्रन्थेऽभिहितम्—यज्ञकालार्थसिद्धय इति । कालविशेषविधयश्च श्रूयन्ते । 'संवत्सरमेतद्व्रतं चरेत् । संवत्सरमुख्यं भूत्वा' इत्येवमादयः संवत्सरविधयः । 'वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्य आदधीत, शरदि वैश्य आदधीत' इत्याद्या ऋतुविधयः । 'मासि मासि पृष्ठान्युपयन्ति, मासि मास्यतिग्राह्या गृह्यन्ते' इत्याद्या मासविधयः ।

यं कामयेत वसीयान्त्स्यादिति तं पूर्वपक्षे याजयेत' इत्याद्याः पक्षविधयः। 'एकाष्टकायां दीक्षेरन्, फल्गुनीपूर्णमासे दीक्षेरन्' (तै० सं० ७।४।८।१) इत्याद्यास्तिथिविधियः। 'प्रातर्जुहोति सायं जुहोति' इत्याद्याः प्रातः कालादिविधयः 'कृत्तिकास्वग्निमादधीत' (तै० ब्रा० १।१।२।१) इत्याद्या नक्षत्रविधयः। अतः कालविशेषानवगमयितुं ज्योतिषमुपयुज्यते॥

एतेषां च वेदार्थोपकारिणां षण्णां ग्रन्थानां वेदाङ्गत्वं शिक्षायामेवमुदीरितम्—(शि० ४१—४२ शौनकीये चरणव्यूहपरिशिष्टे २)

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते'॥ इति॥

---

षडङ्गवत् पुराणादीनामपि वेदार्थज्ञानोपयोगो याज्ञवल्क्येन स्मर्यते—

'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ १।३ इति॥
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति॥'
इत्यन्यत्रापि स्मर्यते।

ऐतरेयतैत्तिरीयकाठकादिशाखासूक्तानि, हरिश्चन्द्रनाचिकेताद्युपाख्यानानि, धर्मब्रह्मावबोधोपयुक्तानि तेषु तेष्वितिहासग्रन्थेषु स्पष्टीकृतानि। उपनिषदुक्ताश्च सृष्टिस्थितिलयादयो ब्राह्मपाद्मवैष्णवादिपुराणेषु स्पष्टीकृताः—

'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम्॥' इति॥

सृष्ट्यादेः पुराणप्रतिपाद्यत्वावगमनात्। न्यायशास्त्रे प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तादीनां षोडशपदार्थानां निरूपणात्

तदनुसारेणेदं वाक्यमस्मिन्नर्थे प्रमाणं भवति नेतरदिति निर्णयः कर्तुं शक्यते । पूर्वोत्तरमीमांसयोर्वेदार्थोपयोगोऽतिस्पष्ट एव । मन्वत्रिविष्णुहारीतादिप्रोक्तासु स्मृतिषु वेदोक्तसन्ध्यावन्दनादिविधयः प्रपञ्चिताः । 'तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्र्याभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ति' [ तै० आ० २ । २ । २ ] इत्यादिकः सन्ध्यावन्दनविधिः । 'पञ्च वा एते महायज्ञाः सततिं प्रतायन्ते' ( तै० आ० २ । १० ) इत्यादिको महायज्ञविधिः । एवं विध्यन्तराणि द्रष्टव्यानि । उक्तप्रकारेण पुराणादीनां वेदार्थज्ञानोपयोगाद्विद्यास्थानत्वं युक्तम् ।

---

एतैः पुराणादिभिश्चतुर्दशभिर्विद्यास्थानैरुपबृंहिताया विद्याया ग्रहणेऽधिकारिविशेषः शाखान्तरगतैश्चतुर्भिर्मन्त्रैरुपदर्शितः । तांश्च मन्त्रान् यास्क उदाजहार—( निरु० २ । ४ ) ॥

तत्रायं प्रथमो मन्त्रः—

'विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम् ॥'

( विष्णुस्मृतिः २९ अध्यायः, वशिष्ठस्मृति २ अ० ) इति ॥

विद्याभिमानिनी देवता ब्राह्मणमुपदेष्टारमाचार्यमाजगाम । आगत्य चैवं प्रार्थयामास । हे ब्राह्मण ! मामनधिकारिणेऽनुपदिश्य पालय । तवाहं निधिवत् पुरुषार्थहेतुरस्मि । तादृश्यां मयि तदुपदेष्टरि त्वयि च योऽसूयां करोति, यश्चार्जवेन विद्यां नाभ्यस्यति, योऽपि स्नानाचमनाद्याचारनियतो न भवति, तादृशेभ्यः शिष्याभासेभ्यो मा न ब्रूयाः । तथा सति त्वद्धृदये स्थित्वा फलप्रदा भवेयम् ।

अथ द्वितीयो मन्त्रः—

'य *आतृणत्त्यवितथेन कर्णावदुःखं कुर्वन्नमृतं सम्प्रयच्छन् ।

---

* 'आवृणोत्यवितथेन' वशिष्ठः । विष्णुस्मृ० ३० अध्यायः ।

तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत् * कतमच्चनाह ॥'

(वसिष्ठ स्मृ० २ अ०) इति॥

पूर्वस्मिन् मन्त्र आचार्यस्य नियममभिधायास्मिन् मन्त्रे शिष्यस्य नियमोऽभिधीयते । वितथमनृतमपुरुषार्थभूतं लौकिकं वाक्यम् । तद्विपरीतं सत्यं वेदवाक्यमवितथम् । तादृशेन वाक्येन य आचार्यः शिष्यस्य कर्णावातृणत्ति सर्वतस्तर्दनं पूरणं करोति । उपसर्गवशादौचित्याच्च तृणत्तिधातोरर्थान्तरे वृत्तिः । सर्वदा वेदं यः श्रावयतीत्यर्थः । किं कुर्वन् । न दुःखं कुर्वन् । मन्दप्रज्ञस्य माणवकस्यादावर्धर्चमृचं वा ग्रहीतुमशक्तस्य यथा दुःखं न भवति, तथा पादं पादैकदेशं वा ग्राहयन् । किं च । अमृतं सम्प्रयच्छन् । अमृतत्वस्य देवजन्मनो मोक्षस्य वा प्रापकत्वादमृतं वेदार्थः । तस्य प्रदानं कुर्वन् । तं तादृशमाचार्यं सच्छिष्यो मुख्यमातापितृरूपं मन्येत। पूर्वसिद्धौ तु मातापितरावधमस्य मनुष्यस्य शरीरस्य प्रदानाद् मुख्यौ । तस्मै मुख्यमातापितृरूपायाचार्यायैकमपि द्रोहं न कुर्यात् ।

अथ तृतीयो मन्त्रः—

"अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा।
यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत् ॥' इति।

ये त्वधमा विप्रा गुरुणाध्यापिताः सन्तो विनयोक्त्या, तदीयहितचिन्तनेन, शुश्रूषया वा गुरुं नाद्रियन्ते । आदररहितास्ते शिष्याभासा गुरोर्न भोजनीयाः । अनुभवयोग्या न भवन्ति । न हि तेषु गुरुः कृपां करोति । यथैव गुरुणा ते न पालनीयास्तथैव तानधमाञ्छिष्यांस्तच्छ्रुतं गुरूपदिष्टं वेदवाक्यं न पालयति । फलप्रदं न भवतीत्यर्थः ।

अथ चतुर्थो मन्त्रः—

'यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।

---

* कृतमस्य जानन् (विष्णु० ३० अ०)

यस्ते न द्रुह्येत् कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन् ॥'
( विष्णुस्मृति २९ अध्याय । वशिष्ठ २ अध्याय ) इति ॥

हे आचार्य यमेव मुख्यशिष्यं शुचित्वादिगुणोपेतं जानीयाः। किं च यो मुख्यशिष्यस्तुभ्यं कदाचिदपि न द्रुह्येत् । तस्मै तु मुख्यशिष्याय त्वदीयनिधिपालकाय ब्रह्मन् वेदरूपां मां विद्यां ब्रूयाः । इत्थं विद्यादेवतया प्रार्थितत्वादाचार्येण मुख्यशिष्याय वेदविद्योपदेष्टव्या। तदर्थमृग्वेदोऽस्माभिः षडङ्गानुसारेण व्याख्यायते ।

इत्युपोद्घातप्रकरणम् ।



# प्रथमं मण्डलम्



## प्रथमं सूक्तम्

### मन्त्रब्राह्मणात्मके वेदे ब्राह्मणस्य मन्त्रव्याख्यानोपयोगित्वादादौ

१—अत्र केचिदाचक्षीरन्—न ब्राह्मणानां वेदसंज्ञा भवितुमर्हति कुतः पुराणेतिहाससंज्ञकत्वाद्वेदव्याख्यानादृषिभिरुक्तत्वात्कात्यायन-भिन्नैर्ऋषिभिर्वेदसंज्ञायामस्वीकृतत्वान्मनुष्यबुद्धिरचितत्वाच्चेति। अपरे तु—ब्राह्मणानां पुराणेतिहाससंज्ञायां मानाभावः। अथवा स्वीकृता-यामप्युक्तसंज्ञायां किं नश्छिन्नम्—कम्बुग्रीवादिमतः पदार्थविशेषस्य सत्यामपि कलशकुम्भाख्यायां घटनामधेयत्वमस्त्येव, 'वेदव्याख्यानत्वं' तेषां नैव वेदत्वाबाधकं वेदव्याख्यानस्यापि वेदत्वात्। यथा 'अथ शब्दानुशासनम्' इत्यस्या व्याख्याया महाभाष्यत्वमस्त्येव। 'काव्यं यशसे' इति कारिकावृत्तेरपि तथैव काव्यप्रकाशत्वमेव। तथा च ग्रन्थकाराः प्रायः स्वयमेव सूत्रादिकं रचयित्वा तत्प्रतीकमादाय व्याख्यापयन्ति, न हि तत्र व्याख्यानतः सूत्रादिकस्य भेदः, अतो यदि व्याख्यानमपि भवेन्मन्त्रस्य ब्राह्मणं तथापि वेदत्वे का क्षतिः। अत एव सूत्रस्य व्याकरणत्वसिद्धान्तेपि तद्व्याख्यानभूतभाष्य-वृत्त्यादीनामपि व्याकरणत्वं सर्वैरेवाङ्गीक्रियते। अत एव 'त्रिमुनि-व्याकरणम्' इति सङ्गच्छते। ऋषिप्रोक्तत्वमपि मन्त्रब्राह्मणयोरुभयोः समानमेव। अत एव 'तेन प्रोक्तम्' (पाणि० ४। ३। १०१) इति सूत्रभाष्यम्, 'य एवाप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च' इति वात्स्यायन-भाष्यं च सङ्गच्छते। प्रायः सर्वैरेव ऋषिभिः कात्यायनवत् तेषां वेद-संज्ञा स्वीक्रियत एव। सर्व एव ब्राह्मणवाक्यानुद्दिश्य 'वेदे यथा' इति लिखन्ति। तद्यथा मनुनापि—

ब्राह्मणमारण्यककाण्डसहितं व्याख्यातम् । अथ तत्र तत्र ब्राह्मणोदाह-

---

'उदितेऽनुदिते चैव समयाध्युषिते तथा ।
सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः ॥'

इत्यत्रैतरेयादिब्राह्मणभागमात्रोपलभ्यमानस्योदितादिहोमस्य वेदप्रोक्तता दर्शिता । अत एव 'शेषे ब्राह्मणशब्दः' इति सूत्रे जैमिन्युक्तं शेषपदं सङ्गच्छते । 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इति सूत्रेऽपि ब्राह्मणभागस्याम्नायपदेनोपादानं जैमिनिना कृतं च ।

'वाक्यविभागस्य चार्थग्रहणात्' ( न्या० २ । १ । ६१ ) ॥

एतत् सूत्रभाष्ये वात्स्यायनर्षिणा 'प्रमाणं शब्दो यथा लोके विभागश्च ब्राह्मणवाक्यानां त्रिविधः' इत्युपक्रम्य—

'विध्यर्थवादानुवादवचनविनियोगात् ।' ( सू० ६२ ) ॥

'विधिर्विधायकः' ( सू० ६३ ) ॥

'स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः' ( सू० ६४ ) ॥

इति सूत्रत्रयं व्याख्याय—

'विधिविहितस्यानुवचनमनुवादः' ( सू० ६५ ) ॥

एतस्य व्याख्याने 'यथा लौकिके वाक्ये विभागेनार्थग्रहणात् प्रमाणत्वम्, एवं वेदवाक्यानामपि विभागेनार्थग्रहणात् प्रमाणत्वं भवितुमर्हतीति' इत्युपसंहृतम् । तेन निश्चीयते ऋषिपुङ्गवस्यास्य 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' एवैवेष्टिरिति । तेन कात्यायनभिन्नैर्ऋषिभिरित्याद्यभिधानमार्षग्रन्थानवलोकनमूलकमेव ।

नैवास्ति ब्राह्मणेष्वपि मनुष्यबुद्धिरचितत्वम् । मन्त्रवत् तत्रापि दृश्यत्वं न तु कृतकत्वं प्रोच्यमानत्वं च । यथा लोकोपकारार्थं वेदाः प्रकाशितास्तद्वद्ब्राह्मणान्यपि । 'ऋषिर्दर्शनात्' न तु कर्तृत्वात् । यथा ते मन्त्रान् ददृशुस्तथार्थानपि ब्राह्मणरूपान् ।

पुनरप्याग्रहग्रहग्रस्ताः पूर्वपक्षयन्ति—

'द्वितीया ब्राह्मणे' ( पाणि० २ । ३ । ६० ) ॥

रणेन मन्त्रात्मकः संहिताग्रन्थो व्याख्यातव्यः ।

---

'चतुर्थ्यर्थे बहुलं छन्दसि' ( पाणि० २ । ३ । ६२ ) ॥
'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' ( पाणि० ४ । ३ । १०५ ) ॥
'छन्दोब्राह्मणानि च तद्विषयाणि' ( पा० ४ । २ । ६६ ) ॥

इति सूत्रचतुष्टयेऽनुमीयते पाणिनिमुनेर्वेदसंज्ञातो ब्राह्मणसंज्ञायाः पृथक्त्वमिष्टमन्यथा 'द्वितीया ब्राह्मणे' इत्यतो ब्राह्मणपदानुवृत्त्यैव सिद्धे 'चतुर्थ्यर्थे, इति सूत्रे छन्दोग्रहणं व्यर्थं स्यात्' इति। नैतत् सम्प्रदायाधीतसंस्कृतग्रन्थेषु शोभते। छन्दःपदस्य मन्त्रब्राह्मणोभयवाचकत्वाद्ब्राह्मणपदानुवृत्तौ मन्त्रभागे प्रवृत्तिः कथं स्यात् । तस्मात 'द्वितीया ब्राह्मणे' इति सूत्रं तु केवलं ब्राह्मणभाग एव प्रवर्तते। 'चतुर्थ्यर्थे' इति सूत्रं तु मन्त्रभागे ब्राह्मणभागे च इति विषयभेदबोधनाय पृथगुपादानस्य न्याय्यत्वम् ।

गुर्वध्ययनलब्धप्रतिभैस्तु ऋचि पदघटितसूत्राणां ऋक्ष्वेव प्रवृत्तिः, न यजुषि सामनि वा, यजुषि पदघटितसूत्राणां यजुःष्वेव प्रवृत्तिः, न सामनि नाप्यृक्षु, 'यजुषि काठके' इति सूत्रं तु यजुःष्वपि काठकेष्वेव प्रवर्तते, नान्येषु यजुःष्वपि, एवमेव ब्राह्मणपदघटितसूत्रं केवलं ब्राह्मणेष्वेव प्रवर्तते न मन्त्रभागे,एवं मन्त्रपदघटितसूत्रं मन्त्रभाग एव प्रवर्तते न ब्राह्मणभागे। छन्दःपदघटितसूत्रं तु मन्त्रब्राह्मणयोरुभयोरपि प्रवर्तते । अत एव 'मन्त्रेश्वेतवहोक्थशस्पुरोडाशो ण्विन्' 'अवेयजः' 'विजुपे छन्दसि' एवमष्टाध्यायीपाठस्य सर्वत्रोपलभ्यमानत्वात् पूर्वसूत्रमन्त्रपदे स्वरितत्वेपि छन्दःपदं सार्थकं भवति इति मन्यते । भवन्मते तु मन्त्रछन्दसोः समानार्थकत्वे छन्दःपदं व्यर्थमेव स्यात् । छन्दोब्राह्मणानि च तद्विषयाणि इत्यत्र छन्दःपदेनैव ब्राह्मणानामपि ग्रहणे ब्राह्मणपदोपादानं व्यर्थं स्यात् इत्यपि गुर्वनध्ययनविकृतबुद्धित्वद्योतनाय, गुर्वध्ययनसंस्कृतबुद्धिभिस्तु 'नामाख्यातोपसर्गनिपाताश्च' इत्यत्र गोबलीवर्दन्यायेन विशेषवाचकपदसन्निधाने सामान्यवाचकपदानां तद्विशेषातिरिक्तपरत्वाङ्गीकारेण निपातपदस्योपसर्गा-

स च ' अग्निमीळे ' इत्यारभ्य ' यथा वः सुसहासति ' इत्यन्तो-

---

तिरिक्तपरत्वमिव छन्दःपदस्य ब्राह्मणातिरिक्तपरत्वमङ्गीक्रियते । अतो न ब्राह्मणपदवैयर्थ्यम् । दृश्यते चान्यत्रापि पाणिनिमुनेरियं रीतिः । तथाहि ' तनादिकृञ्भ्य उः ' इति सूत्रे कृञ्पदोपादानेन तनादिपदस्य कृञतिरिक्तपरत्वमङ्गीकृत्योभयोपादानम् । कृञ्पदस्य गणकार्यानित्यत्वज्ञापकता तु भाष्यादृष्टत्वादप्रमाणैव इति शेखरकृता स्पष्टीकृम् । यथा वा विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् ' (पाणि० ३। ३ । १६१ ) इत्यत्र प्रवर्तनात्वेन सर्वेषां साजात्येपि पृथगुपादानम् । तथा चोक्तम्—

'अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि ।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥
न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा ।
विध्यादीनामुपादानं चतुर्णामादितः कृतम्' ॥ इति ॥

तत्र न्यायस्तु—विशेषवाचकपदसन्निधाने सामान्यवाचकपदानां तद्विशेषातिरिक्तपरत्वम्' इत्येवाङ्गीक्रियते । तस्य व्युत्पादनं 'गामानय बलीवर्दं चानय' इत्यादौ लोक आश्रितस्य शास्त्रे स्मरणमेव । प्रपञ्चार्थमित्यस्य स्पष्टार्थतायै पुनरुक्तावपि 'नासूया कर्तव्या यत्रानुगम आचार्येण क्रियते' इति भाष्योक्त्या दोषाभावसूचनात् ।

यत्तु 'ब्राह्मणेषु याज्ञवल्क्यादीनां संवादकथनमितिहासत्वं च दृश्यते अतो वेदभिन्नत्वमेव तेषाम्'—इति गदनम् । तदप्यकिञ्चित्करम् । वेदेपि सुदासो वसिष्ठस्य वसिष्ठविश्वामित्रयोरन्येषां च संवादाः सन्त्येव । इतिहासोपि यथा कौशिकस्य 'कुशिकस्य सूनुः' इत्यादौ । मानमत्र 'कुशिको नाम राजा बभूव' इत्यादियास्काचार्यकथनमेव ।

अपौरुषेयत्वं तूभयोः समानम् । स्मर्यमाणकर्तृकत्वाभावात् । ' एवं वा अरे अस्य महतो भूतस्य ' ( शतपथ १४ । ४ । ४ । १ ) इति कथनाच्च । एषोऽत्र राद्धान्तः । ' वेदोऽखिलो धर्ममूलम् ' इति स्मृतिवचनान्निखिलवैदिकवाक्यानां धर्मप्रतिपादकत्वमायातम् । तच्च

ऽष्टकाण्डैर्दशमण्डैलश्चतुःषष्ट्यध्यायैः पञ्चाशीत्यनुवाकैरीषदधिकसहस्र-सूक्तैरीषदधिकद्विसहस्रवर्गैरीषदधिकाभि*र्दशसहस्रसंख्याभिर्ऋग्भि-श्चोपेतः। तस्य च ग्रन्थस्य कृत्स्नस्याप्याम्नातक्रमेणैव सामान्यविनि-योगो ब्रह्मयज्ञजपादौ पूर्वमेवाभिहितः। विशेषविनियोगस्तु तत्तत्क्रतौ सूत्रकारेण प्रदर्शितः। स च त्रिविधः सूक्तविनियोगस्तृचादिविनियोग एकैकस्या ऋचो विनियोगश्चेति।

तत्र 'अग्निमीळे' इति सूक्तं प्रातरनुवाक आग्नेये क्रतौ विनियुक्तम्। स विनियोग आश्वलायनेन चतुर्थाध्यायस्य त्रयोदशे खण्डे सूत्रितः।

---

'चोदनालक्षणोऽर्थो धर्मः' इति पूर्वमीमांसावचनेन न सङ्गच्छते। यतो विधिवाक्येभ्य एव धर्मज्ञानमुदेति 'अहरहः सन्ध्यामुपासीत' 'स्वर्ग-कामो यजेत' अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादिभ्यः। विधेस्तु मन्त्र-भागे सद्भाव एव न। अतो ब्राह्मणेभ्य एव धर्मज्ञानं शक्यम्। अतः

'धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः'

इत्यादौ श्रुतिपदं ब्राह्मणग्रन्थपरम् इति निश्चीयते। अत्रैकमत्यं बौधायन( मन्त्रब्राह्मणमित्याहुः)आपस्तम्ब( मन्त्रब्राह्मणयोर्वेदनामधेयम्) जैमिनि( मन्त्रब्राह्मणात्मकः शब्दराशिर्वेदः )प्रभृतीनाम्—

तथैव षड्गुरुशिष्यः सर्वानुक्रमणिकावृत्तिभूमिकायाम्—

'मन्त्रब्राह्मणयोराहुर्वेदशब्दं महर्षयः॥
विनियोक्तव्यरूपो यः स मन्त्र इति चक्षते।
विधिस्तुतिकरं शेषं ब्राह्मणं कथयन्ति हि॥'

इत्थं समादधति।

* अध्यायाश्चतुःषष्टिर्मण्डलानि दशैव तु
एकश्च एकवर्गश्चैकश्च नवकस्तथा।
द्वौ वर्गौ तु द्व्यचौ ज्ञेयौ न्यूनं तृचशतं स्मृतम्।
वर्गाणां परिसङ्ख्यातं द्वे सहस्रे षडुत्तरे।
ऋचां दशसहस्राणि ऋचां पञ्चशतानि च।
ऋचामशीतिपादश्चैतत्पारायणमुच्यते॥ १॥
( शौनकीये चरणव्यूहपरिशिष्टे प्रथमा काण्डिका )

अवा नो अग्न इति षळग्निमीळेऽग्निं दूतमिति । तत्र हीनपादग्रहणात् सूक्तनिश्चयः । 'सूक्तं सूक्तादौ हीने पादे' ( आ० १ । १ ) इति परिभाषितत्वात् । तस्मिन् सूक्ते प्रथमाया ऋचो द्वितीयस्यां पवमानेष्टौ स्विष्टकृतो याज्यात्वेन विनियोगः । स च द्वितीयाध्यायस्य प्रथमखण्डे सूत्रितः । 'साह्वान्विश्वा अभियुजोऽग्निमीळे पुरोहितमिति संयाज्ये' इति । तत्र कृत्स्नपादग्रहणादृगित्यवगम्यते । 'ऋचं पादग्रहणे' (आ० १ । १ ) इति परिभाषितत्वात् । तथा 'संयाज्ये इत्युक्ते सौविष्टकृती प्रतीयात्' ( आ० २।१) इति परिभाषितत्वात् स्विष्टकृत्सम्बन्धनिश्चयः । तत्रापि द्वितीयमन्त्रत्वेनोदाहृतत्वाद्याज्यात्वम् । यद्यपि साह्वानित्यनया पुरोनुवाक्ययैव देवताया अनुस्मरणरूपसंस्कारः सिद्धस्तथापि याज्यानुवाक्ययोः समुच्चयो द्वादशेऽध्याये चतुर्थपादे मीमांसितः—

' पुरोनुवाक्यया याज्या विकल्प्या वा समुच्चिता ।
विकल्प्यान्यतरेणैव देवतायाः प्रकाशनात् ।
पुरोनुवाक्यासमाख्यानाद्वचनाच्च समुच्चयः ॥ '

देवताप्रकाशनकार्यस्यैकत्वात् युग्मयोर्यथा विकल्पस्तथैवैकयुग्मगतयोरिति चेत्, मैवम्, पुरोनुवाक्येति समाख्याया उत्तरकालीनयाज्यामन्तरेणानुपपत्तेः । किंच 'पुरोनुवाक्यामनूच्य याज्यया जुहोतीति प्रत्यक्षवचनेन देवतोपलक्षणहविष्प्रदानकार्ये भेदोक्तिपुरःसरं साहित्यं विधीयते । तस्मात्समुच्चय इति ।

एतच्चाग्निमित्यादिसूक्तं नवर्चम्—'अग्निं नव मधुच्छन्दा वैश्वामित्रः' इत्यनुक्रमणिकायामुक्तत्वात् । विश्वामित्रपुत्रो मधुच्छन्दोनामकस्तस्य सूक्तस्य द्रष्टृत्वात्तदीय ऋषिः । 'ऋष गतौ' इति धातुः 'सर्वधातुभ्य इन्' ( उ० ४ । ११७ ) इगुपधात् कित्' ( उ० ४।११९) वेदप्राप्त्यर्थं तपोऽनुतिष्ठतः पुरुषान् स्वयम्भूर्वेदपुरुषः प्राप्नोत् । तथा च श्रूयते—'अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्तदृषयोभवन्' ( तै० आ० २ । ९ ) इति । तथा अतीन्द्रियस्य वेदस्य परमेश्वरानुग्रहेण प्रथमतो दर्शनादृषित्वमित्यभिप्रेत्य स्मर्यते—

'युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥' इति ॥

ऋष्यादिज्ञानाभावे प्रत्यवायः स्मर्यते—

'अविदित्वा ऋषिं छन्दो दैवतं योगमेव च ।
योऽध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः ॥'

'ऋषिच्छन्दोदैवतानि ब्राह्मणार्थं स्वराद्यपि ।
अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते ॥' इति॥

वेदनविधिश्च स्मर्यते—

'स्वरो वर्णोऽक्षरं मात्रा विनियोगोऽर्थ एव च ।
मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे ।' इति ॥

'अग्निम्' इत्यादिसूक्तस्य छन्दोऽनुक्रमणिकायां यद्यप्यत्र नोक्तं तथापि परिभाषायामेवमुक्तम्—'अदौ * गायत्रं प्राग्घिरण्यस्तूपात्' (अनु० १२ । १४) इति हिरण्यस्तूप ऋषिर्येषां मन्त्रणां वक्ष्यते ततः प्राचीनेषु मन्त्रेषु सामान्येन गायत्रं छन्द इत्यर्थः। पुरुषस्य पापसम्बन्धं वारयितुमाच्छादकत्वाच्छन्द इत्युच्यते । तच्चारण्यकाण्डे समाम्नायते— 'छादयन्ति ह वा एनं छन्दांसि पापात् कर्मणः' इति । अथवा चीयमानाग्निसन्तापस्याच्छादकत्वाच्छन्दः । तच्च तैत्तिरीया आमनन्ति— 'प्रजापतिरग्निमचिनुत स क्षुरपविर्भूत्वातिष्ठत्, तं देवा बिभ्यतो नोपायन्, ते छन्दोभिरात्मानं छादयित्वोपायन्, तच्छन्दसां छन्दस्त्वम्' (तै० सं० ५ । ६ । ६ । १) इति । यद्वा अप मृत्युं वारयितुमाच्छादयतीति छन्दः । तदपि छान्दोग्योपनिषद्याम्नातम्—'देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशन्, ते छन्दोभिरात्मानमाच्छादयन्, यदेभिराच्छादयंस्तच्छन्दसां छन्दस्त्वम्' (छा० उ० १ । ४ । २) इति ।

तथा द्योतनार्थदीव्यतिधातुनिमित्तो देवशब्द इत्येतदाम्नायते—

---

* अत्र चतुर्विंशत्यक्षरं गायत्री छन्दः अतोऽस्य 'आर्षी गायत्री' इति संज्ञा । त्रिपाच्चेदम् । पादेचास्याष्टाक्षराणि । 'प्राग् यजुषामार्ष्य' इति पिङ्ग० । २ । १६ । 'गायत्र्या वसवः' पिङ्ग० ३ । इत्युक्तत्वात् ।

'दिवा वै नोऽभूदिति तद्देवानां देवत्वम्' इति । अतो दीव्यतीति देवः । मन्त्रेण द्योत्यत इत्यर्थः ।

अस्मिन् सूक्ते स्तूयमानत्वादग्निर्देवः । तथा चानुक्रमणिकाया-मुक्तम्—' मण्डलादिष्वाग्नेयमैन्द्रात् ' ( अनु० १२ । १२ ) इति ।

तस्य सूक्तस्य प्रथमामृचं भगवान् वेदपुरुष आह—

ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ १ ॥

प०—ॐ अग्निम् । ईळे । पुरःऽहितं । यज्ञस्य । देवम् । ऋत्विजम् । होतारं । रत्नऽधातमम् ॥ १ ॥

अग्निनामकं देवमीळे स्तौमि । ईड स्तुतौ ( धा २४ । ९ ) इति धातुः । डकारस्य ळकारो बह्वृचाध्येतृसम्प्रदायप्राप्तः । तथा च पठ्यते 'अज्मध्यस्थडकारस्य ळकारं बह्वृचा जगुः । अज्मध्यस्थढकारस्य ळ्हकारं वै यथाक्रमम्' इति । मन्त्रस्य होत्रा प्रयोज्यत्वादहं होता स्तौमीति लभ्यते । कीदृशमग्निम् । यज्ञस्य पुरोहितम् । यथा राज्ञः पुरोहितस्तदभीष्टं सम्पादयति, तथाग्निरपि यज्ञस्यापेक्षितं होमं सम्पादयति । यद्वा । यज्ञस्य सम्बन्धिनि पूर्वभाग आहवनीयरूपेणावस्थितम् । पुनः कीदृशम् । देवं दानादिगुणयुक्तम् । पुनः कीदृशम् । होतारमृत्विजम् । देवानां यज्ञेषु होतृनामक ऋत्विगग्निरेव । तथा च श्रूयते— 'अग्निर्वै देवानां होता' ( ऐ० ब्रा० ३ । १४ ) इति । पुनरपि कीदृशम् । रत्नधातमं यागफलरूपाणां रत्नानामतिशयेन धारयितारं पोषयितारं वा ।

अत्राग्निशब्दस्य यास्को बहुधा निर्वचनं दर्शयति—'अथातोऽनुक्रमिष्यामः । अग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामः । अग्निः

कस्मात्। अग्रणीर्भवत्यग्रं(2) यज्ञेषु प्रणीयते, अङ्गं(3) नयति सन्नममानः। अक्नोपनो भवतीति स्थौलाष्ठीविः। न क्नोपयति न स्नेहयति॥ त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः। इतादक्ताद्दग्धाद्वा, नीतात्। स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा। नीः परः। तस्यैषा भवति। अग्निमीळे' ( नि० ७। १४ ) इति। अस्यायमर्थः—सामान्येन सर्वदेवतानां लक्षणस्याभिहितत्वादनन्तरं यतः प्रतिपदं विशेषेण वक्तव्यत्वमाकांक्षितमतोऽनुक्रमेण वक्ष्यामः। तत्र पृथिवीलोके स्थितोऽग्निः प्रथमं व्याख्यास्यते। कस्मात् प्रवृत्तिनिमित्तादग्निशब्देन देवताभिधीयत इति प्रश्नस्याग्रणीरित्यादिकमुत्तरम्। देवसेनामग्रे स्वयं नयतीत्यग्रणीः। एतदेकमग्निशब्दस्य प्रवृत्तिनिमित्तम्।

तथा च ब्राह्मणान्तरम्—'अग्निर्देवानां सेनानीः' इति। एतदेवाभिप्रेत्य बह्वृचा मन्त्रब्राह्मणे आमनन्ति—'अग्निर्मुखं प्रथमो देवतानाम्' इति मन्त्रः ९(ऐ० ब्रा० १। ४)।'अग्निर्वै देवानामवमः' (ऐ० ब्रा० १। १) इति ब्राह्मणम्।

तथा तैत्तिरीयाश्चामनन्ति—'अग्निरग्रे प्रथमो देवतानाम्' [ तै० ब्रा० २।४।३।३] इति, 'अग्निरवमो देवतानाम्' इति च।

वाजनसनेयिनस्त्वेवमामनन्ति 'स वा एषोऽग्रे देवतानामजायत तस्मादग्निर्नाम' इति।

(2) यज्ञेष्वग्निहोत्रेष्टिपशुसोमरूपेष्वग्रं पूर्वदिग्वर्त्याहवनीयदेशं प्रति गार्हपत्यात् प्रणीयत इति द्वितीयं प्रवृत्तिनिमित्तम्।

(3) सन्नममानः सम्यक् स्वयमेव प्रह्वीभवन्नङ्गं स्वकीयशरीरं नयति काष्ठदाहे हविष्पाके च प्रेरयतीति तृतीयं प्रवृत्तिनिमित्तम्।

स्थूलाष्ठीवनामकस्य महर्षेः पुत्रो निरुक्तकारः कश्चिदक्नोपन इत्यग्निशब्दं निर्वक्ति। तत्र न क्नोपयतीत्युक्ते न स्नेहयति किन्तु काष्ठादिकं रूक्षयतीत्युक्तं भवति।

शाकपूणिनामको निरुक्तकारो धातुत्रयादग्निशब्दनिष्पत्तिं मन्यते। इत इण गतौ (धा० २४, ३६) इति धातुः अक्तो-अञ्जू व्यक्ति-

म्रक्षणकान्तिगतिषु (धा० २९ । २१) इति धातुः । दग्धो—दह भस्मीकरणे ( धा० २३ । २२ ) इति धातुः । नीतो णीञ् प्रापणे (धा० २२।५) इति धातुः । अग्निशब्दो ह्यकारगकारनीशब्दापेक्षमाण एतिधातोरुत्पन्नादयनशब्दादकारमादत्ते । अनक्तिधातुगतस्य ककारस्य गकारादेशं कृत्वा तमादत्ते । यद्वा दहतिधातुजन्याद्दग्धशब्दाद्गकारमादत्ते । नीरिति नयतिधातुः । स च ह्रस्वो भूत्वा परो भवति । ततो धातुत्रयं मिलित्वाग्निशब्दो भवति। यज्ञभूमिं गत्वा स्वकीयमङ्गं नयति काष्ठदाहे हविष्पाके च प्रेरयतीति समुदायार्थः । तस्याग्निशब्दार्थस्य देवताविशेषस्य प्राधान्येन स्तुतिदर्शनायैषाग्निमीळ इत्यृग्भवतीति ।

तामेतामृचं यास्क एवं व्याख्यातवान्–'अग्निमीळे अग्निं याचामीडिरध्येषणाकर्मा पूजाकर्मा वा । पुरोहितो व्याख्यातः।यज्ञस्य । देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा । यो देवः सा देवता। होतारं ह्वातारम्। जुहोतेर्होतेरित्यौर्णवाभः। रत्नधातमं रमणीयानां धनानां दातृतमम् ' ( नि० ७ । १५ ) इति ।

अस्यायमर्थः—ईडतिधातोः स्तुत्यर्थत्वं प्रसिद्धम् । धातूनामनेकार्थत्वमिति न्यायमाश्रित्य याच्ञाध्येषणापूजा अप्यत्रोचितत्वात्तदर्थतया व्याख्याताः । पुरोहितशब्दो द्वितीयेऽध्याये (नि० २।१२) 'यद्देवापिः शन्तनवे पुरोहितः' इत्येतामृचमुदाहृत्य 'पुर एनं दधति' इति व्याख्यातः।

तैत्तिरीयाश्च पौरोहित्यं स्पर्धमानस्य पश्वनुष्ठानं विधाय तत्फलत्वेन पुर एनं दधत इत्यामनन्ति । देवशब्दो दानदीपनद्योतनानामन्यतममर्थमाचष्टे। यज्ञस्य दाता दीपयिता द्योतयितायमग्निरित्युक्तं भवति । दीपनद्योतनयोरेकार्थत्वेऽप्यस्ति धातुभेदः । यद्यप्यग्निः पृथिवीस्थानस्तथापि देवान् प्रति हविर्वहनाद्द्युस्थानो भवति । देवशब्ददेवताशब्दयोः पर्यायत्वान्मन्त्रप्रतिपाद्या काचिदग्निव्यतिरिक्ता देवता नान्वेषणीया । होतृशब्दस्य ह्वयतिधातोरुत्पन्नत्वेन देवानामाह्वातारमिति ।

और्णवाभनामकस्तु मुनिर्जुहोतिधातोरुत्पन्नो होतृशब्द इति

मन्यते । अग्नेश्च होतृत्वं होमाधिकरणत्वेन द्रष्टव्यम् ।

रत्नशब्दो द्वितीयाध्याये मघमित्यादिष्वष्टाविंशतौ धननामसु पठितः । रमणीयत्वाद्रत्नत्वम् । दधातिधातुरत्र दानार्थवाचीति ।

तदिदं निरुक्तकारस्य यास्कस्य मन्त्रव्याख्यानम् ।

अथ व्याकरणप्रक्रियोच्यते ।

अगिधातोर्गत्यर्थात् (धा० ५ । ३८) 'अङ्गेर्नलोपश्च' (उ० ४।५०) इत्यौणादिकसूत्रेण निप्रत्ययः । इदित्त्वान्नुमागमेन प्राप्तस्य नकारस्य (पा० ७ । १ । ५८) लोपश्च भवति । अङ्गति स्वर्गं गच्छति हविर्नेतुमित्यग्निः । तत्र 'धातोः' (पा० ६ । १ । १६२) इत्यकार उदात्तः । 'आद्युदात्तश्च' ( पा० ३।१।३ ) इति प्रत्ययगत इकारोऽप्युदात्तः । 'अनुदात्तं पदमेकवर्जम्' ( पा० ६।१।१५८ ) इति द्वयोरन्यतरमुदात्तमवशिष्येतरस्यानुदात्तत्वं प्राप्तम् । तत्र धातुस्वरे प्रथमतोऽवस्थिते सति पश्चादुपदिश्यमानः प्रत्ययस्वरोऽवशिष्यते । 'सति शिष्टस्वरो बलीयान्' (वा० पा० ६ । १ । १५८ ) इति हि न्यायः । ततोऽन्तोदात्तमग्निप्रातिपदिकम् । 'अनुदात्तौ सुप्पितौ' (पा० ३।१।४) इत्यमित्येतद्द्वितीयैकवचनमनुदात्तम् । तस्य 'अमि पूर्वः' ( पा० ६ । १ । १०७ ) इति यत्पूर्वरूपं तदुदात्तम् 'एकादेश उदात्तेनोदात्तः' ( पा० ८ । २ । ५ ) इति सूत्रितत्वात् । अग्निशब्दो धातुजन्मेति मते सेयं प्रक्रिया सर्वापि द्रष्टव्या ।

मतद्वयं यास्केन प्रदर्शितम्—

नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च । न सर्वाणीति गार्ग्यो वैयाकरणानां चैके ( नि० १ । १२ ) इति ।

गार्ग्यस्य मतेऽग्निशब्दस्याखण्डप्रातिपदिकत्वात् 'फिषोऽन्त उदात्तः' ( फि० १ । १ ) इत्यन्तोदात्तत्वम् ।

पूर्वोक्तेष्वग्रणीरित्यादिनिर्वचनेषु प्रकृतिप्रत्ययाद्यशेषप्रक्रिया यथोचितं कल्पनीया ।

एतदेवाभिप्रेत्य यास्क आह—

'अथ निर्वचनम्—

तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां तथा तानि निर्ब्रूयात्। अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत 'केनचिद्वृत्तिसामान्येनाविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयान्नत्वेव न निर्ब्रूयात्' ( नि० २। १ ) इति।

अस्यायमर्थः। तत्तत्र निर्वचनीयपदसमूहमध्ये येष्वग्न्यादिपदेषु पूर्वोक्तरीत्या स्वरसंस्कारौ समर्थौ व्याकरणसिद्धौ स्याताम्। स्वर उदात्तादिः। संस्कारो निप्रत्ययादिः। किं च तौ स्वरसंस्कारौ प्रादेशिकेन गुणेनान्वितौ स्याताम्। शब्दस्यैकदेशः पूर्वोक्तोऽगिधातुः प्रदेशः। तत्र भवो गुणो गतिरूपोऽर्थः। तेनान्वितौ। तान्यग्न्यादिपदानि तथा व्याकरणानुसारेण निर्ब्रूयात्। तच्च निर्वचनमस्माभिः प्रदर्शितम्। अथ पूर्वोक्तवैलक्षण्येन कश्चित् स्वेन विवक्षितोऽर्थो नान्वितस्तस्मिञ्छब्देऽनुगतो न भवेत्। तस्यैव व्याख्यानम्—अप्रादेशिके विकार इति। अग्रनयनादिरूपः क्रियाविशेषो विकारः। स च प्रदेशेनाग्निशब्दैकदेशेनात्र नाभिधीयत इत्यप्रादेशिकः। एवं सति यः पुमानर्थनित्यः स्वविवक्षितेऽर्थे नियतो निर्बन्धवान् ब्राह्मणानुसारेण वा देवतान्तरविशेषणत्वेन योजयितुं वा सनिर्बन्धः। तदानीं स पुमान् केनचिद्वृत्तिसामान्येन स्वविवक्षितमर्थं परीक्षेत, तस्मिञ्छब्दे योजयेत्। वृत्तिः क्रिया। तद्रूपेण सामान्यं सादृश्यम्। अस्माभिश्चाग्रनयनादिरूपं क्रियात्वसामान्यमुपजीव्याग्रणीत्वाद्यर्थो योजितः। तदिदं यास्काभिमतं निर्वचनम्।

स्थौलाष्ठीविरक्षरसाम्यान्निर्वक्ति। अक्नोपनशब्दस्यादौ निषेधार्थमकाररूपमक्षरं विद्यते। अग्निशब्दस्यादावकारोऽस्ति। तदिदमक्षरसाम्यम्।

शाकपूणिस्तु वर्णसाम्यान्निर्ब्रूते। दग्धशब्दाग्निशब्दयोर्गकारवर्णेन साम्यम्। सर्वथापि निर्वचनं न त्याज्यमिति।

ईळ इत्येतत् पदं कृत्स्नमप्यनुदात्तम् 'तिङ्ङतिङः'। (पा० ८। १। २८ ) इत्यतिङन्तादग्निशब्दात् परस्येळ इत्यस्य तिङन्तस्य

निघातविधानात् । पदद्वयसंहिताकाले त्वीकारस्य धातुगतस्य 'उ
त्तादनुदात्तस्य स्वरितः' (पा० ८ । ४ । ६६) इति स्वरितत्वम् । तस्मा
ध्र्वभाविन एकारस्य तिङ्प्रत्ययरूपस्य 'स्वरितात्संहितायामनुदात्ताना
( पा० १ । २ । ३९ ) इत्यैकश्रुत्यं प्रचयनामकं भवति । पुरःशब्दोन्
दात्तः । 'अयं पुरो भुवः' ( तै० सं० ४ । ३ । २ । १ ) इत्यत्र तथैवाम्
तत्वात् । 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' ( पा० ५ । ३ । ३९
इति पूर्वशब्दादस्प्रत्ययः पुरादेशश्च । ततोऽत्र प्रत्ययस्वरः । ( पा० ३
१ । ३) । धाञो निष्ठायां 'दधातेर्हिः' (पा० ७ । ४ । ४२) इत्यादेशे स
प्रत्ययस्वरेणान्तोदात्तो हितशब्दः । तत्र समासान्तोदात्तत्वे प्राप्ते ( पा
६ । १ । २२३ ) तदपवादत्वेन 'तत्पुरुषे तुल्यार्थः' ( पा० ६ । २ । २
इत्यादिना अव्ययपूर्वपदप्रकृतिस्वरत्वम् । यद्वा 'पुरोऽव्ययम्' (पा०
४ । ६७ ) इति गतिसंज्ञायां 'गतिरनन्तरः' ( पा० ६ । २ । ४९ इ
पूर्वपदप्रकृतिस्वरत्वम् । तत ओकार उदात्तः । अवशिष्टानामनुदा
स्वरितप्रचयाः पूर्ववद्द्रष्टव्याः । आद्याक्षरस्य संहितायां प्रचयप्रा
( पा० १ । २ । ३९ ) 'उदात्तस्वरितपरस्य सन्नतरः' (पा० १ । २ । ४
इत्यतिनीचोऽनुदात्तः । 'यजयाच' ( पा० ३ । ३ । ९० ) इत्यादिना य
तेर्नङ्प्रत्यये सत्यन्तोदात्तो यज्ञशब्दः । विभक्तेः सुप्स्वरेणानुदात्त
सति ( पा० ३ । १ । ४ ) पश्चात् स्वरितत्वम् । देवशब्दः पचाद्यजन्
( पा० ३ । १ । १३४ ) । स च फिट्स्वरेण ( फि० १ । १ ) प्रत्ययस्वरे
( पा० ३ । १ । ३ ) चित्स्वरेण ( पा० ६ । १ । १६३ ) वान्तोदात्तः
ऋत्विक्शब्द ऋतौ यजतीति विग्रहे सति 'ऋत्विग्दधृक्' (पा० ३।२।५
इति निपातितः । 'गतिकारकोपपदात् कृत्' ( पा० ६ । २ । १३९ ) इ
कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । विभक्तिस्वरः पूर्ववत् । होतृशब्दस्त
प्रत्ययान्तः ( पा० ३ । २ । १३५ ) । नित्स्वरेणाद्युदात्तः । ( पा० ६ । १
१९७) स्वरितप्रचयौ पूर्ववत् । रत्नशब्दः 'नब्विषयस्यानिसन्तस्य' (फि
२ । ३ ) इत्याद्युदात्तः । तथा चाम्नायते—'रत्नं धाता' इति । रत्ना
दधातीति विग्राहः । समासत्वादन्तोदात्तो रत्नधाशब्दः । यद्वा कृदुत्

पदप्रकृतिस्वरः । तमप्प्रत्ययस्य ( पा० ५ । ३ । ५५ ) पित्स्वरेणानुदात्ते प्रति (पा० ३ । १ । ४) स्वरितप्रचितौ । संहितायामाद्याक्षरस्य प्रचयौ द्वितीयाक्षरस्य सन्नतरत्वम् ।

वेदावतार आद्याया ऋचोऽर्थश्च प्रपञ्चितः ।
विज्ञातं वेदगाम्भीर्यमथ संक्षिप्य वर्ण्यते ॥

आग्नेयसूक्तस्य द्वितीयामृचमाह—

मं—अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।
स देवाँ एह वक्षति ॥ २ ॥

प०—अग्निः । पूर्वेभिः । ऋषिभिः । ईड्यः । नूतनैः ।
उत । सः । देवान् । आ । इह । वक्षति ॥ २ ॥

अयमग्निः पूर्वेभिः पुरातनैः भृग्वङ्गिरःप्रभृतिभिः ऋषिभिरीड्यः स्तुत्यः नूतनैरुत इदानीन्तनैरस्माभिरपि स्तुत्यः । सोऽग्निः स्तुतः सन्निह यज्ञे देवान् हविर्भुज आ वक्षति । 'वह प्रापणे' इति धातुः । आवहत्वि- त्यर्थः ।

पूर्वेभिरित्यत्र 'बहुलं छन्दसि' ( पा० ७ । १ । १० ) इति भिस ऐसादेशाभावः । 'पूर्व पर्व अर्व पूरणे' इति धातुः । पूर्वतिधातोरन्प्रत्यय औणादिकः । इन्प्रत्ययान्त ऋषिशब्दः । 'ऋष्यन्धक' (पा० ४।१।११४) इति निपातनात् लघूपधगुणाभावः ( पा० ७ । ३ । ८६ ) । कित्प्रत्ययो यात्र ज्ञेयः (उ० ४ । ११९) । तौ शब्दौ नित्स्वरेणाद्युदात्तौ । ईड्यशब्द- स्य ण्यत्प्रत्ययान्तत्वात् ( पा० ३ । १ । १२४ ) 'तित्स्वरितम्' (पा० ६ । १ । १८५) इति स्वरिते शेषानुदात्तत्वे च प्राप्ते तदपवादत्वेन 'ईडवन्द' (पा० ६ । १ । २१४) इत्यादिना आद्युदात्तत्वम् । 'नवस्य नू त्नप्तनखाश्च' (वा० पा० ५।४।३०) इति वार्तिकेन नवशब्दस्य नू इत्यादेशस्तनन्प्रत्य- यश्च महावार्तिके विहितः । ततो नित्स्वरेणाद्युदात्तः । अवशिष्टस्वरा

अग्न्यादिषु नूतनान्तेषु पूर्ववदुन्नेयाः । उतशब्दो यद्यपि विकल्प
प्रसिद्धस्तथापि निपातत्वेनानेकार्थत्वादौचित्येनात्र समुच्चयार्थो द्रष्टव्यः
'उच्चावचेष्वर्थेषु निपतन्तीति निपातत्वम्' । तर्हि 'निपाता आद्युदात्ता'
(फि० ४ । १२ ) इत्युकारस्योदात्तः प्राप्त इति चेत्, न, प्रातःशब्दव
न्तोदात्तत्वात् । यथा प्रातःशब्दोऽन्तोदात्तत्वेनैव स्वरादिषु पठि
(पा० १ । १ । ३७) एवमुतशब्दस्यापि पाठो द्रष्टव्यः। स्वरादेराकृतिगा
त्वात् । यद्वा । 'एवादीनामन्तः ( फि० ४ । १४ ) इत्यन्तोदात्तः ।
इत्यत्र फिट्स्वरः । देवशब्दः पूर्ववत् । देवानित्यस्य नकारस्य संहिता
'दीर्घादटि' ( पा० ८ । ३ । ९ ) इति रुत्वम् । 'अत्रानुनासिकः' (पा०
३ । २) इत्यनुवृत्तौ 'आतोऽटि नित्यम् ' ( पा० ८ । ३ । ३ ) इत्याका
सानुनासिकः । 'भोभगो' (पा० ८ । ३ । १७ ) इति रोर्यकारः । स
'लोपः शाकल्यस्य' ( पा० ८ । ३ । १९ ) इति लुप्यते । तस्यासिद्धत्वा
( पा० ८ । २ । १ ) । न पुनः सन्धिकार्यम् । आङो निपातत्वादाद्युदा
त्वम् । इदमो हप्रत्यये सति निष्पन्नत्वात् ( पा० ५।३।११ ) । इह श
प्रत्ययस्वरः । वहतिधातोर्लोडर्थे छान्दसो लट् । तस्य स्यप्रत्ययगतस
यकारस्य लोपोऽपि छान्दसः । यद्वा लेटि 'सिब्बहुलम्' (पा० ३ । १
३४) इति सिप् प्रत्ययः । 'लेटोऽडाटौ' (पा० ३ । ४ । ९४) इत्यडागमश्च
ततो वक्षतीति संपद्यते । तस्य तिङन्तत्वान्निघातः । संहितास्व
पूर्ववत् ।

आधाने तृतीयेष्टौ प्रथमाज्यभागस्यानुवाक्या ( आ० २ । १
सूक्तगता तृतीया । तां तृतीयामृचमाह—

मं०—अग्निना रयिमश्नवत्पोषमेव दिवे दिवे ।

यशसं वीरवत्तमम् ॥३॥

प०—अग्निना । रयिम् । अश्नवत् । पोषम् । एव । दिवेऽदिवे ।

यशसम् । वीरवत्ऽतमम् ॥ ३ ॥

योऽयं होत्रा स्तुत्योऽग्निस्तेनाग्निना निमित्तभूतेन यजमानो रयिं धनमश्नवत् प्राप्नोति । कीदृशं रयिम् । दिवे दिवे पोषमेव प्रतिदिनं पुष्यमाणतया वर्धमानमेव । न तु कदाचिदपि क्षीयमाणम् । यशसं दानादिना यशोयुक्तम् । वीरवत्तममतिशयेन पुत्रभृत्यादिवीरपुरुषोपेतम् । सति हि धने पुरुषाः सम्पद्यन्ते ।

रयिशब्दो मघमित्यादिधननामसु पठितः । तत्र फिट्स्वरः । अश्नोतेर्धातोर्लेटि व्यत्ययेन तिप् । 'इतश्च लोपः' ( पा० ३।४।९७ ) इतीकारलोपः । 'लेटोऽडाटौ' (पा० ३।४।९४) इत्यडागमः । ततोऽश्नवदिति भवति । तस्य निघातः । घञन्तत्वात् ( पा० ६ । १ । १९७ ) पोषशब्द आद्युदात्तः । एवशब्दस्य निपातत्वेऽपि 'एवादीनामन्तः' ( फि० ४ । १४ ) इत्यन्तोदात्तत्वम् । वकारान्ताद्दिव्शब्दात् परस्याः सप्तम्याः 'सुपां सुलुक्' ( पा० ७ । १ ३९ ) इत्यादिना शेभावे सति 'सावेकाचः' (पा० ६ । १ । १६८) इत्यादिना 'ऊडिदंपदादि' (पा० ६ । १ । १७१) इत्यादिना वा तस्योदात्तत्वम् । 'नित्यवीप्सयोः' ( पा० ८ । १ । ४ ) इति 'द्विर्भावे सत्युत्तरभागस्यानुदात्तं च' ( पा० ८ । १ । ३ ) इत्यनुदात्तत्वम् । यशोऽस्यास्तीति विग्रहे सति 'अर्श आदिभ्योऽच्' ( पा० ५ । २ । १२७ ) इत्यच्प्रत्ययः । चित्स्वरं व्यत्ययेन बाधित्वा मध्योदात्तत्वम् । फिट्स्वरेणान्तोदात्ताद्वीरशब्दादुत्तरयोर्मतुप्तमपोः पित्त्वादनुदात्तत्वम् । 'ह्रस्वनुड्भ्याम्' ( पा० ६ । १ । १७६) इति तु न, सावर्णान्तत्वात् । 'न गोश्वन्' ( पा० ६।१।१८२ ) इति प्रतिषेधः ।

अभिप्लवषडहस्य मध्यवर्तिषूक्थ्येषु तृतीयसवने मैत्रावरुणस्याग्ने यं यज्ञमित्यादिको वैकल्पिकोऽनुरूपस्तृचः । एतच्च सप्तमाध्याय एह्यूष्वित्यादिखण्डे सूत्रितम् 'अग्निं वो वृधन्तमग्ने यं यज्ञमध्वरम्' ( आ० ७।८ ) इति । तस्मिंस्तृचे या प्रथमा सा सूक्ते चतुर्थी । तामेतां चतुर्थीमृचमाह—

**मं०—अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि ।**

स इद् देवेषु गच्छति ॥ ४ ॥

प०—अग्ने । यं । यज्ञम् । अध्वरम् । विश्वतः । परिऽभूः

असि । सः । इत् । देवेषु । गच्छति ॥ ४ ॥

हे अग्ने त्वं यं यज्ञं विश्वतः सर्वासु दिक्षु परिभूः परि प्राप्तवानसि स इत् स एव यज्ञो देवेषु तृप्तिं प्रणेतुं ( जनयितुं स्वर्गे गच्छति। प्राच्यादिचतुर्दिगन्तेष्वाहवनीयमार्जालीयगार्हपत्याग्नी ध्रीयस्थानेष्वग्निरस्ति। परिशब्देन होत्रीयादिधिष्ण्यव्याप्तिर्विवक्षिता कीदृशं यज्ञम् अध्वरं हिंसारहितम्। न ह्यग्निना सर्वतः पालितं य राक्षसादयो हिंसितुं प्रभवन्ति।

अग्निशब्दस्य षाष्ठिकम् ( पा० ६। १। १९८ ) आमन्त्रिताद्युदा त्तत्वम्। न विद्यते ध्वरोऽस्येति बहुव्रीहौ 'नञ्सुभ्याम्' ( पा० ६।२ १७२ ) इत्यन्तोदात्तत्वम्। विश्वत इत्यत्र तसिलः प्रत्ययस्वरं बाधित्वा पूर्ववर्णस्य 'लिति' ( पा० ६।१।१९३ ) इत्युदात्तत्वम्। परि भूरित्यत्राव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते ( पा० ६।२।२ ) तदपवादत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा० ६। २। १३९ )। असीति तिङन्तस्य 'यद्वृत्तान्नित्यम्' ( पा० ८। १। ६६ ) इति निघाताभावः।

अथ पञ्चमीमृचमाह—

मं—अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः।

देवो देवेभिरा गमत् ॥ ५ ॥

प०—अग्निः । होता । कविऽक्रतुः । सत्यः । चित्र-

श्रवःऽतमः । देवः । देवेभिः । आ । गमत् ॥ ५ ॥

अयमग्निर्देवोऽन्यैर्देवैर्हविर्भोजिभिः सहागमत् । अस्मिन् यज्ञे समागच्छतु । कीदृशोऽग्निः । होता होमनिष्पादकः । कविक्रतुः । कविशब्दोऽत्र क्रान्तवचनो न तु मेधाविनाम । क्रतुः प्रज्ञानस्य कर्मणो वा नाम । ततः क्रान्तप्रज्ञः क्रान्तकर्मा वा । सत्यः अनृतरहितः । फलमवश्यं प्रयच्छतीत्यर्थः । चित्रश्रवस्तमः श्रूयत इति श्रवः कीर्तिः । अतिशयेन विविधकीर्तियुक्तः ।

कविक्रतुश्चित्रश्रवस्तम इत्यत्रोभयत्र बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरत्वम्, सत्सु साधुः सत्यः 'सत्यादशपथे' (पा० ५ । ४ । ६६) इत्यत्रान्तोदात्तो हरदत्तेन निपातितः । लोडन्तस्य गच्छत्विति शब्दस्य छत्वाभावः । उकारलोपश्छान्दसः । ततो रूपं गमदिति भवति । स्पष्टमन्यत् ।

आग्नेये सूक्ते षष्ठीमृचमाह—

मं—यदंग दाशुषे त्वमग्ने भद्रं करिष्यसि ।

तवेत्तत् सत्यमङ्गिरः ॥ ६ ॥

प०—यत् । अङ्ग । दाशुषे । त्वम् । अग्ने । भद्रम् । करिष्यसि ।

तव । इत् । तत् । सत्यम् । अङ्गिरः ॥ ६ ॥

अङ्गेत्यभिमुखीकरणार्थो निपातः । अङ्गाग्ने हे अग्ने त्वं दाशुषे हविर्दत्तवते यजमानाय तत्प्रीत्यर्थं यद्भद्रं वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि तद्भद्रं तवेत् तवैव । सुखहेतुरिति शेषः । हे अङ्गिरोऽग्ने एतच्च सत्यं न त्वत्र विसंवादोऽस्ति । यजमानस्य वित्तादिसम्पत्तौ सत्यामुत्तरक्रत्वनुष्ठानेनाग्नेरेव सुखं भवति । भद्रशब्दार्थं शाट्यायनिनः समामनन्ति—'यद्वै पुरुषस्य वित्तं तद्भद्रं गृहा भद्रं प्रजा भद्रं पशवो भद्रम्' इति ।

अङ्गशब्दस्य निपातत्वेऽपि (फि० ४ । १२) अभ्यादित्वादन्तोदात्तत्वम् । दाशुषे 'दाश्वान् साह्वान्' (पा० ६ । १ । १२) इति सूत्रेण

'दाश्टृ दाने' इति धातो क्वसुप्रत्ययो निपातितः। तत्र प्रत्ययस्वरः आमन्त्रितस्याग्निशब्दस्य पदात् परत्वेनाष्टमिकानुदात्तत्वं (पा० ८ । १ । १९) न शङ्कनीयम्। 'अपादादौ' (पा० ८ । १ । १८) इति पर्युदस्तत्वात्। ततः षाष्ठिकम् । (पा० ६ । १ । १९८) आद्युदात्तत्वमेव भद्रशब्दस्य नब्विषयत्वेन (फि० २ । ३) आद्युदात्तत्वप्रसक्तावपि 'भदि कल्याणे' इति धातोरुपरि रक्प्रत्ययेन निपातनादन्तोदात्तत्वम्। अस्मिन् वाक्ये यच्छब्दप्रयोगात् 'निपातैर्यद्यदिहन्त' (पा० ८ । १ । ३० इति निघाते प्रतिषिद्धे स्यप्रत्ययस्वरेण (पा० ३।१।३३) सति शिष्टे करिष्यसिशब्द उपान्त्योदात्तः। तवेत्यत्र 'युष्मदस्मदोर्ङसि' (पा० ६ । १ । २११) इत्याद्युदात्तत्वम्। 'अङ्गिरा अङ्गारा' (नि० ३ । १७) इति यास्कः। ऐतरेयिणोऽपि प्रजापतिदुहितृध्यानोपाख्याने समामनन्ति- 'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्' (ऐ० ब्रा० ३ । ३४) इति। तस्मादङ्गिरोनामकमुनिकारणत्वादङ्गाररूपस्याग्नेरङ्गिरस्त्वम् । अत्र पदात् परत्वेनाष्टमिकानुदात्तत्वम् ।

अग्नीषोमप्रणयने 'उप त्वाग्ने' इत्यादिकोऽनुवचनीयस्तृचः। एतच्च ब्राह्मणे समाम्नातम्—'उप त्वाग्ने दिवेदिव उप प्रिय पनिप्नतमिति तिस्रश्चैकां चान्वाह' (ऐ० ब्रा० १ । ३०) इति। तस्मिंस्तृचे या प्रथमा सा सूक्ते सप्तमी। तामेतां सप्तमीमृचमाह—

मं—उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम्।
नमो भरन्त एमसि ॥ ७ ॥

पं—उप । त्वा । अग्ने । दिवेऽदिवे । दोषाऽवस्तः । धिया । वयम् । नमः । भरन्तः । आ । इमसि ॥ ७ ॥

हे अग्ने वयमनुष्ठातारो दिवेदिवे प्रति दिनं दोषावस्ता रात्रौ

वहनि च धिया बुद्ध्या नमो भरन्तो नमस्कारं सम्पादयन्त उप समीपे त्वा एमसि त्वामागच्छामः ।

उपशब्दस्य निपातस्वरः ( फि० ४ । १२ ) । 'त्वामौ द्वितीयायः' ( पा० ८ । १ । २३ ) इति युष्मच्छब्दस्यानुदात्तस्त्वादेशः । दोषाशब्दो रात्रिवाची । वस्त इत्यहर्वाची । द्वन्द्वसमासे कार्तकौजपादित्वात् ( पा० ६ । २ । ३७ ) आद्युदात्तः । 'सावेकाचः' ( पा० ६ । १ । १६८ ) इति धियो विभक्तिरुदात्ता । नम इति निपातः । भरन्त इत्यत्र शपः ( पा० ३ । १ । ६८ ) पित्त्वाच्छतुर्लसार्वधातुकत्वाच्चानुदात्तत्वे सति ( पा० ६ । १ । १८६ ) धातुस्वरः शिष्यते: इमसीत्यत्र 'इदन्तो मसि' ( पा० ७ । १ । ४६ ) इत्यादेशो निघातश्च ।

अष्टमीमृचमाह—

मं—राजन्तमध्वराणां गोपामृतस्य दीदिविम् ।

वर्धमानं स्वे दमे ॥ ८ ॥

प०—राजन्तम् । अध्वराणाम् । गोपाम् । ऋतस्य । दीदिविम् ।

वर्धमानम् । स्वे । दमे ॥ ८ ॥

पूर्वमन्त्रे त्वामुपैम इत्यग्निमुद्दिश्योक्तम् । कीदृशं त्वाम् । राजन्तं दीप्यमानम् । अध्वराणां राक्षसकृतहिंसारहितानां यज्ञानां गोपां रक्षकम् । ऋतस्य सत्यस्यावश्यंभाविनः कर्मफलस्य दीदिविं पौनःपुन्येन भृशं वा द्योतकम् । आहुत्याधारमग्निं दृष्ट्वा शास्त्रप्रसिद्धं कर्मफलं स्मर्यते । स्वे दमे स्वकीयगृहे यज्ञशालायां हविर्भिर्वर्धमानम् ।

राजन्तं वर्धमानमित्यत्रोभयत्र पूर्ववद्धातुस्वरः शिष्यते । दीदिविशब्दस्य 'अभ्यस्तानामादिः' ( पा० ६।१।१८९ ) इत्याद्युदात्तत्वम् । दमशब्दो वृषादित्वात् ( पा० ६।१।२०३ ) आद्युदात्तः ।

नवमीमृचमाह—

मं०—स नः पितेव सूनवेऽग्ने सूपायनो भव ।

सचस्वा नः स्वस्तये ॥ ९ ॥

प०—सः । नः । पिताऽइव । सूनवे । अग्ने । सुऽउपायनः । भव ।

सचस्व । नः । स्वस्तये ॥ ९ ॥

हे अग्ने स त्वं नोऽस्मदर्थं सूपायनः शोभनप्राप्तियुक्तो भव तथा नोऽस्माकं स्वस्तये विनाशराहित्यार्थं सचस्व समवेतो भव तत्रोभयत्र दृष्टान्तः । यथा सूनवे पुत्रार्थं पिता सुप्रापः प्राप्ये समवेतो भवति तद्वत् ।

अस्मच्छब्दादेशस्य न इत्येतस्य 'अनुदात्तं सर्वम्' (पा० ८। १८ ) इत्यनुदात्तत्वम् । 'चादयोऽनुदात्ताः' ( फि० ४।१६ ) इतीव शब्दोऽनुदात्ता । 'इवेन नित्यसमासः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्य (वा० पा० २ । १ । ४ ) इति समस्तः पितेवेति शब्दो मध्योदात्त शोभनमुपायनं यस्तेति बहुव्रीहौ नञ्सुभ्याम् ( पा० ६ । २ । १७२ इत्यन्तोदात्तत्वम् । सचस्वेत्यत्र पदात्परत्वं नास्तीति न निघा ( पा० ८।१।१९ ) 'लसार्वधातुकानुदात्तत्वे' ( पा० ६।१।१८६ ) स धातुस्वरावशेषः ।





# ऋ० वे० म० १ सू० १३

## संग्रहे द्वितीयं सूक्तम्

'सुसमिद्ध' इत्यादिकं द्वादशर्चं द्वितीयमाप्रीसूक्तम् । तस्य
काण्वो मेधातिथिर्ऋषिः । गायत्रं छन्दः । प्रत्यृचं प्रतीयमानाः
सुसमिद्धतनूनपादादिका द्वादश देवताः ।

तथा चानुक्रमणिकायामृक्संख्यामृषिं छन्दश्चावृत्तिबलात्
सिद्धवत्कृत्य देवता उदाहृताः ।

'सुसमिद्ध इतीध्मः समिद्धो वाग्निस्तनूनपान्नराशंस इळो
बर्हिर्देवीर्द्वार उषासानक्ता दैव्यौ होतारौ प्रचेतसौ तिस्रो देव्यः सर-
स्वतीळाभारत्यस्त्वष्टा वनस्पतिः स्वाहाकृतय इति प्रत्यृचं देवता
एतदाप्रीसूक्तम्' इति ।

विनियोगस्तु पशौ सुसमिद्धो न आ वहेति काण्डमाप्रीक्तम् ।
एकादश प्रयाजा इति खण्डे सूत्रितम्-'समिद्धो अद्येति सर्वेषां यथर्षि
वा' ( आ० ३।२ ) इति ।

मं—सुसमिद्धो न आ वह देवाँ अग्ने हविष्मते ।

होतः पावक यक्षि च ॥१॥

प०—सुऽसमिद्धः । नः । आ । वह । देवान् । अग्ने । हविष्मते ।

होतरिति । पावक । यक्षि । च ॥ १ ॥

हे अग्ने सुसमिद्धनामकस्त्वं नोऽस्मदीयाय हविष्मते य मानाय तदनुग्रहार्थं देवानावह। हे पावक शोधक होतः होमनिष्पा काग्ने यक्षि च यज च।

'सुसमिद्धः' समः क्रियाविशेषणत्वेन गतिसंज्ञकत्वात् प्रा समासः। शोभनवाचितः सुशब्दस्य तु 'विशेषणं विशेष्येण बहुल (पा० २।१।५७) इति समिद्धपदेन कर्मधारयसमासः। सुश प्रातिपदिकस्वरेणोदात्तः 'कर्मधारये निष्ठा' (पा० ६।२।४६) इ पूर्वपदप्रकृतिस्वरत्वम्। क्रियाविशेषणत्वे हि सुशब्दस्य गतित्व प्रादिसमासे 'गतिरनन्तरः' (पा० ६।२।४९) इति समो यदु त्तत्वं तदेव कृदुत्तरपदप्रकृतिस्वरत्वेन स्यास्यतीति सुशब्दोऽनुदा स्यात्। देवान् अग्ने पूर्ववद्रुत्वानुनासिके। हविष्मते हविरस्यास्ति मतुप् 'तसौ मत्वर्थे' (पा० १।४।१९) इति भत्वेन पदत्व बाधितत्वान्न रुत्वम्। होतः पावकशब्दयोरामन्त्रितयोः पृथक् पृथ क्रियान्वये परस्परमसामर्थ्यात् पराङ्गवद्भावान्न तन्निबन्धनमै स्वर्यम्। न च द्वितीयस्यामन्त्रितस्याष्टमिकनिघातेनैकस्वर्यं 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा० ८।१।७२) इति पूर्वस्यावि मानवत्वेन पदात् परत्वाभावात् पादादित्वाच्च परस्परसामानाधिकर ऽपि होतरित्यस्य विशेषणत्वे समानमेवाविद्यमानत्वम्। अत एवावि मानवत्त्वात् सामर्थ्येऽपि न पराङ्गवद्भाव इति नैकस्वर्य्यसिद्धिः। अ होतरिति विशेष्यम्। अतः पुनातीति पावक इत्यवप्रसिद्धिस्वीका विशेषणत्वाद्धोतरिति विशेष्यम्। तच्च सामान्यवचनमिति 'नामन्त्रिते समानाधिकरणे' (पा० ८।१।७३) इत्यविद्यमानवत्प्रतिषेधात् पद परत्वादपादादित्वाच्च द्वितीयामन्त्रितस्याष्टमिकनिघातेन वा परा वद्भावे सति शेषनिघातेन वा सर्वानुदात्तत्वसिद्धिः। 'यक्षि' यजेर्लं सिपि 'बहुलं छन्दसि' (पा० २।४।७३) इति शपो लुक्। 'व्रश्च दिना' (पा० ८।२।३६) षत्वम्, 'षढोः कः सि' (पा० ८।२।४ इति कत्वम्। सेर्हिरादेशश्छान्दसत्वान्न भवति। सिपः पित्वेना

दात्तत्वाद्धातुस्वर एव शिष्यते । न च 'तिङ्ङतिङः' (पा० ८।१।२८) इति निघातः । पूर्वस्य पावकेत्यामन्त्रितस्याविद्यमानत्वेन पदादपरत्वात् । अत एव तस्याव्यवधायकत्वेन होतरित्यपेक्ष्य निघातः स्यादिति चेत्, न, यक्षिपदापेक्षया होतरित्यस्यापि पूर्वत्वेनाविद्यमानवत्त्वात् । ननु 'नामन्त्रिते समानाधिकरणे' (पा० ८ । १ । ७३) इति तस्य निषिद्धमविद्यमानवत्त्वम् । न च पावकपदस्याविद्यमानत्वेन समानाधिकरणपरत्वाभावः । यक्षिपदस्यैव हि कार्यं प्रति पावकपदं पूर्वत्वादविद्यमानवत् स्यात् । होतःपदकार्य्यमविद्यमानवत्वप्रतिषेधं प्रति तु परत्वाद्विद्यमानवदेवेति भवत्येव होतरित्यस्याविद्यमानवत्त्वप्रतिषेधः । अतस्तस्य विद्यमानवत्त्वात्तदपेक्षया यक्षीत्यस्य निघातः प्राप्नोत्येव । सत्यम् । अत्र यक्षीत्यस्य चशब्दपरत्वात् । 'चादिषु च' (पा० ८।१।५८) इति निघातप्रतिषेधो भविष्यतीति न दोषः ।

द्वितीयामृचमाह—

म०—मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे ।

अद्या कृणुहि वीतये ॥ २ ॥

पं०—मधुऽमन्तम् । तनूऽनपात् । यज्ञम् । देवेषु । नः । कवे ।

अद्य । कृणुहि । वीतये ॥ २ ॥

हे कवे मेधाविन् अग्ने तनूनपादेतन्नामकस्त्वमद्यास्मिन् दिने नोऽस्मदीयं मधुमन्तं रसवन्तं यज्ञं हविः वीतये भक्षणार्थं देवेषु कृणुहि कुरु प्रापयेत्यर्थः ।

मधुमन्तं 'फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च' (उ० १ । १९) इति मन्यते रुप्रत्ययो धकारश्चान्तादेशः । निदित्यनुवृत्तेः प्रत्ययस्य नित्त्वादाद्युदात्तो मधुशब्दः । तनूनपात् आमन्त्रितनिघातः । 'अद्य सद्यः परुत्' (पा० ५ । ३ । २२) इत्यादिना अस्मिन् काले इत्यर्थे

द्यप्रत्ययान्तो निपातितः प्रत्ययस्वरेणान्तोदात्तः । 'तद्धितश्चासर्वविभक्तिः' (पा० १ । १ । ३८) इत्यव्ययत्वात् 'अव्ययादाप् सुपः' (पा० २।४।८२) इत्युपरि सप्तम्या लुक् । संहितायां 'अन्येषामपि दृश्यते' ( पा० ६।३।१३७ ) इति दीर्घत्वम् । कृणुहि ' कृवि हिंसाकरणयोश्च ' ' इदितो नुम् धातोः ' ( पा० ७ । १ । ५८ ) इति नुम् । लोटः सेर्हिरादेशः 'धिन्विकृण्व्योरच्च' (पा० ३।१।८०) इति शपोऽपवादो विकरण उप्रत्ययः तत्सन्नियोगेन च वकारस्याकारः । तस्य 'अतो लोपः' ( पा० ६।४।४८ ) इति लोपः । तस्य स्थानिवद्भावाल्लघूपधगुणो न भवति । ' उतश्च प्रत्ययादसंयोगपूर्वात्' (पा० ६ । ४ । १०६) इति हेर्लुग् न भवति । ' उतश्च प्रत्ययाच्छन्दो वा वचनम्'(वा०पा० ६।४।१०६) इति वचनात् 'तिङ्ङतिङः' ( पा० ८।१।२८ ) इति निघातः । वीतये 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' (पा० ३ । ३ । ९६ ) इति क्तिन्नुदात्तः ।

तृतीयामृचमाह—

म०—नराशंसमिह प्रियमस्मिन्यज्ञ उप ह्वये ।

मधुजिह्वं हविष्कृतम् ॥ ३ ॥

प०—नराशंसम् । इह । प्रियम् । अस्मिन् । यज्ञे । उप । ह्वये ।

मधुऽजिह्वम् । हविःऽकृतम् ॥ ३ ॥

इह देवयजनदेशे, अस्मिन् प्रवर्तमाने यज्ञे नराशंसमेतन्नामकमग्निम् उप ह्वये आह्वयामि । कीदृशं प्रियं देवानां प्रीतिकरं मधुजिह्वं मधुरभाषिजिह्वोपेतं माधुर्य्यरसास्वादकजिह्वोपेतं हविष्कृतं हविषो निष्पादकम् ।

नरशब्दो 'नॄ नये' इत्यस्मादबन्तः । प्रत्ययस्य पित्त्वाद्धातुस्वर एव शिष्यते । शंसन्त्यस्मिन्निति शंसः ' हलश्च ' ( पा० ३।३।१२१

इत्यधिकरणे घञ्। नराणां शंस इति समासे कृदुत्तरपादप्रकृतिस्वरत्वे प्राप्ते 'उभे वनस्पत्यादिषु युगपत्' (पा० ६ । २ । १४०) इति पूर्वोत्तरपदे प्रकृतिस्वरे भवतः । अत एव वनस्पत्यादिषु पाठान्नरशब्दस्य दीर्घत्वम्। इह 'इदमो हः' (पा० ५ । ३ । ११) इति हप्रत्ययः। 'इदम इश्' (पा० ५ । ३ । ३) इतीशादेशः । प्रत्ययस्वरः । प्रियम् प्रीणाति इति प्रियः । 'इगुपधज्ञाप्रीकिरः कः' (पा० ३ । १ । १३५) इति कः । प्रत्ययस्वरः । अस्मिन् 'ऊडिदम्' (पा० ६ । १ । १७१) इत्यादिना विभक्तेरुदात्तत्वम्। ह्वये निघातः। मधुजिह्वम् मधुशब्दस्य आद्युदात्तत्वमुक्तम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण स एव शिष्यते । हविष्कृतं हविः करोतीति हविष्कृत् । क्विपि ह्रस्वस्य तुक् 'नित्यं समासेऽनुत्तरपदस्थस्य' (पा० ८। ३ । ४५) इति षत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम्।

चतुर्थीमृचमाह—

म०—अग्ने सुखतमे रथे देवाँ ईळित आ वह ।

असि होता मनुर्हितः ॥४॥

पं०—अग्ने । सुखऽतमे । रथे । देवान् । ईळितः । आ । वह ।

असि । होता । मनुःऽहितः ॥ ४ ॥

भा०—इट्शब्दाभिधेय हे अग्ने ईळितोऽस्माभिः स्तुतः सन् सुखतमेऽतिशयेन सुखहेतौ कस्मिंश्चिद्रथे देवान् स्थापयित्वा कर्मभूमावावह। इट्शब्दाभिधेयत्वमत्र सूचयितुमीळित इति विशेषणम्। मनुर्हितोः ममुना मन्त्रेण मनुष्येण वा यजमानादिरूपेण हितोऽत्र स्थापितः। त्वं होता देवानामाह्वातासि।

सुखतमे, सुखमस्मिन्नस्तीति मतुप् । तस्य 'गुणवचनेभ्यो मतुपो लुग्वक्तव्यः' ( वा० पा० ५ । २ । ९४ ) इति लुक् । अतिशयेन सुखः सुखतमः । तमपोऽनुदात्तत्वात् प्रातिपदिकस्वरः । रथे 'रमु क्रीडायाम्' रमन्तेऽस्मिन्निति रथः । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' ( उ० २ । २ ) इति क्थन् । 'एकाच उपदेशेऽनुदात्तात्' ( पा० ७ । २ । १० ) इतीट्प्रतिषेधः । 'अनुदात्तोपदेश' ( पा० ६ । ४ । ३७ ) इत्यादिना मकारलोपः । नित्त्वादाद्युदात्तत्वम् । ईळितः 'ईड स्तुतौ', 'निष्ठा' ( पा० ३ । २ । १०२ ) इति क्तः । इडागमः तस्य 'आगमा अनुदात्ता' इत्यनुदात्तः । प्रत्ययस्वरः । देवानिति नकारस्य संहितायां 'दीर्घादटि समानपादे' ( पा० ८ । ३ । ९ ) इति रुत्वम् । 'आतोऽटि नित्यम्' ( पा० ८ । ३ । ३ ) इत्याकारस्यानुनासिकभावः । 'भोभगो' ( पा० ८ । ३ । १७ ) इत्यादिना रोर्यत्वम् । तस्य 'लोपः शाकल्यस्य' ( पा० ८ । ३ । १९ ) इति यलोपः । तस्यासिद्धत्वाद्गुणो न भवति । आ, निपातत्वादाद्युदात्तः । असि 'अस् भुवि' लटः सिप् 'अदिप्रभृतिभ्यः शपः' ( पा० २ । ४ । ७२ ) इति शपो लुक् । 'तासस्त्योर्लोपः' ( पा० ७ । ४ । ५० ) इति सकारस्य लोपः । होता, ताच्छील्ये तृन् । 'सख्युरसम्बुद्धौ' ... ऋदुशनः' ( पा० ७ । १ । ९४ ) इत्यादिना अनङ् । ङित्त्वादन्तादेशः 'अप्तृन्' ( पा० ६ । ४ । ११ ) इत्यादिना उपधादीर्घः । हल्ङ्यादिलोपनलोपौ । नित्त्वादाद्युदात्तः । मनुर्हिताः, मन्यत इति मनुः । 'मन ज्ञाने' 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' ( उ० १ । १० ) इत्यु प्रत्ययः । तत्र निदित्यनुवृत्तेर्नित्त्वादाद्युदात्तः हितः दधातेर्निष्ठा कर्मणि क्तः ( पा० ३।२।१०२ ) 'दधातेर्हिः' ( पा० ७।४।४२ ) इति हिरादेशः मनुना हित इति समासे तृतीयायाः स्थाने 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इत्यादिना स्वित्यादेशः । तस्य रुत्वम्, लुगभावश्छान्दसः 'तृतीया कर्मणि' ( पा० ६ । २ । ४८ ) इति पूर्वपदप्रकृतिस्वरत्वम्

पञ्चमीमृचमाह—

म०—स्तृणीत बर्हिरानुषग्घृतपृष्ठं मनीषिणः ।

यत्रामृतस्य चक्षणम् ॥ ५ ॥

प०—स्तृणीत । बर्हिः । आनुषक् । घृतऽपृष्ठम् । मनीषिणः ।

यत्र । अमृतस्य । चक्षणम् ॥ ५ ॥

हे मनीषिणो बुद्धिमन्त ऋत्विजो बर्हिर्दर्भं स्तृणीत वेदेरुपर्य्याच्छादयत । अत्रापि बर्हिर्नामकोऽग्निः सूच्यते । कीदृशं बर्हिरास्तरणीयम् । आनुषक् अनुक्रमेण सक्तं परस्परं सम्बद्धम् । घृतपृष्ठम्, घृतपूर्णानां स्रुचां बर्हिष्यासादितत्वात् घृतं पृष्ठे उपरिभागे यस्य बर्हिषः तत् घृतपृष्ठम् । यत्र यस्मिन् बर्हिषि अमृतस्यामृतसमानस्य घृतस्य चक्षणं दर्शनं भवति। यद्वा मरणरहितस्य देवस्य बर्हिर्नामकस्याग्नेर्दर्शनं भवति तद् बर्हिः स्तृणीतेति पूर्वत्रान्वयः ।

स्तृणीत 'स्तृञ् आच्छाने' लोण्मध्यमपुरुषस्य बहुवचनम् 'लोटो लङ्वत्' (पा० ३। ४ । ८५) 'तस्थस्थमिपाम्' (पा० ३।४।१०१) इति थस्य तादेशः । 'क्र्यादिभ्यः श्ना' (पा० ३।१।८१) 'ई हल्यघोः' (पा०६।४।११३) इतीत्वम् ।'ऋवर्णाच्चेति वक्तव्यम्'(वा० पा०८।४।१) इति णत्वम् । 'प्वादीनां ह्रस्वः'(पा०७।३।८०)इति धातोर्ह्रस्वत्वम् । 'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' अतस्तिङ एव प्रत्ययस्वरेणोदात्तत्वम् । बर्हिः 'बृंहेर्नलोपश्च' ( उ० २ । ११० ) इतीस्प्रत्ययनलोपौ । प्रत्ययस्वरः । आनुषक् आ समन्तादनुषजतीत्यानुषक् । 'षञ्ज संगे' 'धात्वादेः षः सः' (पा० ७। १ । ६४) 'क्विप् च' ( पा० ३ । २ । ७६ ) इति क्विप् । 'अनिदिताम्' (पा० ६ । ४ । २४ ) इति लोपः । आङन्वोरुपसर्गयोः प्राक्प्रयोगः । गतिसमासः । 'उपसर्गात् सुनोति' (पा० ८।३।६५) इत्यादिना षः ।

घृतपृष्ठम् 'घृ क्षरणदीप्त्योः' 'निष्ठा' ( पा० ३ । २ । १०२ ) इति प्रत्ययस्वरेणोदात्तः । घृतयुक्तं पृष्ठमस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । मनीषिणः आमन्त्रितनिघातः । अमृतस्य न विद्यते मरणमस्मिन्नित्यमृतम् । बहुव्रीहौ पूर्वपदप्रकृति स्वरत्वं बाधित्वा 'नञ्सुभ्याम्' ( पा० ६ । २ । ७२ ) इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'नञो जरमरमित्रमृताः' ( पा० ६ । २ । ११६ ) इत्युत्तरपदाद्युदात्तत्वम्। चक्षणम् 'चक्षिङ् व्यक्तायां वाचि' । वागभिव्यक्तिवाची धातुरिह व्यक्तिमात्रं लक्षयति । 'ल्युट् च' (पा० ३ । ३ । ११५) इति भावे ल्युट्। योरनादेशः । तस्यार्द्धधातुकत्वात् 'चक्षिङः ख्याञ्' (पा० २।४। इति ख्याञादेशे प्राप्ते 'असनयोश्च' (वा० पा० २।४।५४) इति प्रतिषेधः।

षष्ठीमृचमाह—

म०—विश्रयन्तामृतावृधो द्वारो देवीरसश्चतः ।

अद्या नूनं च यष्टवे ॥ ६ ॥

प०—वि । श्रयन्ताम् । ऋतऽवृधः । द्वारः । देवीः । असश्चतः ।

अद्य । नूनम् । च । यष्टवे ॥ ६ ॥

द्वारो यज्ञशालाद्वाराणि वि श्रयन्तां कपाटोद्घाटनेन विश्रियन्ताम् । कीदृश्यः ऋतावृधः ऋतस्य सत्यस्य यज्ञस्य वा वर्धयित्र्यः। देवीर्द्योतमानाः । असश्चतः असश्चन्त्य उद्घाटनेन प्रवेष्टृपुरुषसङ्गरहिताः। यद्वा । असश्चतः प्रवेष्टृपुरुषरहितान् यज्ञगृहान् तत्पुरुषप्रवेशाय द्वाराभिमानिन्य एतत्संज्ञिका अग्निविशेषमूर्तयो विश्रयन्ताम् विशेषेण सेवन्ताम् । द्वारसेवया तत्र पुरुषप्रवेशेन वा किं प्रयोजनमिति तदुच्यते । अद्यास्मिन् दिने नूनमवश्यं यष्टवे यष्टुम् । चकाराद्दिनान्तरेष्वपीति द्रष्टव्यम् ।

ऋतावृधः—ऋतं वर्धयन्तीत्यर्थः। वृधेरन्तर्भावितण्यर्थात् 'क्विप्
' ( पा० ३ । २ । ७६ ) इति क्विप् । उपपदसमासः। 'अन्येषामपि
दृश्यते' ( पा० ६ । ३ । १३७ ) इति पूर्वपदस्य दीर्घत्वम् । वृधिर्धातु-
स्वरेणोदात्तः । समासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते।
वीः 'वा छन्दसि' (पा० ६ । १ । १०६) इति पूर्वसवर्णदीर्घत्वम्। देव-
शब्दात् पचाद्यजन्तात् 'पुंयोगादाख्यायाम्' ( पा० ४ । १ । ४८ ) इति
ङीष् । प्रत्ययस्वरेणोदात्तः । विभक्त्या सह 'एकादेश उदात्तेनोदात्तः'
पा० ८।२।५) इत्युदात्तः।असश्चतः 'ग्लुञ्चु षस्ज गतौ' जकारस्य व्यत्ययेन
कारः । लटः शत्रादेशः। द्वाराभावे न विद्यन्ते सश्चन्तो गच्छन्तो
षु प्राग्वंशादिषु तान् असश्चतः। अद्य 'सद्यः परुत्' (पा० ५ । ३। २२)
त्यादिना द्यप्रत्ययान्तो निपातितः। 'तद्धितश्चासर्वविभक्तिः' (पा० १ ।
। ३८) इत्यव्ययसंज्ञकत्वात् परस्या विभक्तेर्लुक्। प्रत्ययस्वरेणान्तो-
दात्तः। संहितायां 'अन्येषामपि दृश्यते' ( पा० ६ । ३ । १३७ ) इति
दीर्घत्वम्। नूनम् 'एवमादीनामन्तः' (पा० ६ । २ । १७९) इत्यन्तोदात्त-
त्वम्। यष्टवे यजेः 'तुमर्थे सेसेन' (पा० ३।४।९) इत्यादिना तवेन्प्रत्ययः।
व्रश्च' ( पा० ८ । २ । ३६) इत्यादिना षत्वम्। नित्त्वादाद्युदात्तः।

सप्तमीमृचमाह—

मं०—नक्तोषासा सुपेशसास्मिन् यज्ञ उपह्वये ।

इदं नो बर्हिरासदे ॥ ७ ॥

प०—नक्तोषसा । सुपेशसा । अस्मिन् । यज्ञे । उप । ह्वये ।

इदम् । नः । बर्हिः । आऽसदे ॥७॥

नक्तशब्द उषःशब्दश्च लोके कालविशेषवाचिनौ ।
इह तु तत्कालाभिमा निवह्निमूर्तिद्वये प्रयुज्येते। नक्तोषासा नक्तोषो-

नामिके वह्निमूर्ती अस्मिन् प्रवर्तमाने यज्ञकर्मणि उप ह्वये आह्वयामि दे
किमर्थं नोऽस्मदीयमिदं वेद्यामास्तीर्णं बर्हिर्दर्भमासदे आसत्तुं प्राप्तुमे
कीदृश्यौ सुपेशसा शोभनरूपयुक्ते ।

नक्तश्चोषाश्च नक्तोषसा द्वितीयाद्विवचनस्य 'सुपां सुलु
(पा० ७ । १ । ३९ ) इत्यादिना आकारः । मलोप उपधादीर्घ
छान्दसौ । 'देवताद्वन्द्वे च' (पा० ६ । २ । १४१ ) इति पूर्वोत्तरपदयो
र्युगपत् प्रकृतिस्वरत्वम् । सुपेशसा शोभनं पेशो रूपं ययोस्ते पूर्वसव
कारः । पेशःशब्दो नब्विषयत्वादाद्युदात्तः । बहुव्रीहौ 'नञ् सुभ्या
इत्युत्तरपदान्तोदात्तत्वस्यापवादत्वेन अद्युदात्तं 'द्व्यच् छन्द
(पा० ६ । २ । ११९ ) इत्युत्तरपादाद्युत्तत्वम् । अस्मिन् 'ऊडिदं
(पा० ६ । १ । १७१) इत्यादिना विभक्तिरुदात्ता । आसदे 'षदॢ विश
णगत्यवसादनेषु' 'धात्वादेः षः सः' (पा० ६ । १ । ६४) आङ्पूर्व
दस्मात् 'सम्पदादिभ्यो भावे क्विप्' ( वा० पा० ३।३।१०८ ) प्रादिसमासे
कृदुत्तरपदप्रकृतिस्वरत्वम् ।

अष्टमीमृचमाह—

**म—ता सुजिह्वा उप ह्वये होतारा दैव्या कवी । म**

**यज्ञं नो यक्षतामिमम् ॥८॥**

प०—ता । सुऽजिह्वौ । उप । ह्वये । होतारा । दैव्या । कवी इति

यज्ञम् । नः । यक्षताम् । इमम् ॥८॥

तच्छब्दोऽत्र सर्वनामत्वात् प्रसिद्धार्थवाची । ता तौ
ज्ञिकानां प्रसिद्धौ द्वावग्नी उप ह्वये आह्वयामि नोऽस्मदीयमिमं य
यक्षतां तावुभौ यजतामनुतिष्ठताम् । कीदृशौ सुजिह्वौ शोभनजिह्वो
पेतौ, प्रियवचनौ शोभनज्वालौ वेत्यर्थः । होतारा होमनिष्पाद

व्या दैव्यौ देवसम्बन्धिनौ अत एवेमावग्नी दैव्यहोतृनामकौ । कवी धाविनौ ।

ता तौ द्वितीयाद्विवचनस्य 'सुपां सुलुक्' (पा० ७।१।३९) त्यादिना आकारः, 'एकादेश उदात्तेनोदात्तः' (पा० ८।२।५) त्युदात्तः। सुजिह्वौ शोभना जिह्वा ययोस्तौ। 'नञ्सुभ्याम्' (पा० ।२।१७२) इत्युत्तरपदान्तोदात्तत्वम् । पूर्ववदेकादेशस्वरः । हितायामावादेशः । वस्य 'लोपः शाकल्यस्य' (पा० ८।३।१९) ति लोपः। होतारा जुहोतेस्तृन् द्विवचने 'ऋतो ङि' (पा० ७।३। १०) इति गुणः। 'अप्तृन्' (पा० ६।४।११) इति उपधादीर्घः। र्ववदाकारः। नित्त्वादाद्युदात्तः। दैव्या देवानामिमौ 'देवाद्यञञौ' वा० पा० ४।१।८५) इति यञ्। 'यस्येति च' (पा० ६।४।१४८) यकारलोपः 'ञ्नित्यादिर्नित्यम्' (पा० ६।१।९७) इत्याद्युदात्तः । र्ववदाकारः। यक्षतां यजताम्। लोटि शपि परतः 'सिब्बहुलं लेटि' पा० ३।१।३४) इति बहुलग्रहणात् सिप् कुत्वचर्त्वषत्वानि।

नवमीमृचमाह—

०—इळा सरस्वती मही तिस्रो देवीर्मयोभुवः ।

बर्हिः सीदन्त्वस्रिधः ॥ ९ ॥

०—इळा । सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः ।

बर्हिः । सीदन्तु । अस्रिधः ॥ ९ ॥

अत्र महीशब्दो महत्वगुणयुक्तां भारतीमाचष्टे न्येष्वाप्रीसूक्तेषु सदृशेष्विळा सरस्वती भारतीत्याम्नातत्वात् ळाशब्दाभिधेया वह्निमूर्तयस्तिस्रो देवीर्दीप्यमाना बर्हिर्वेद्यामास्तीर्णं

सीदन्तु प्राप्नुवन्तु । कीदृश्यः मयोभुवः सुखोत्पादिकाः । अस्त्रि
शोषेण क्षयेण वा रहिताः ।

इळा 'ईड् स्तुतौ' छान्दसं ह्रस्वत्वम् । क्विप् । धातुस्वरः । 'टापं
हलन्तानां यथा वाचा दिशा निशा' इति टाप् । सरस्वती स
असुनन्तो ञित्वादाद्युदात्तः । 'तदस्यास्ति' ( पा० ५ । २ । ९४ ) इ
मतुप् । अदुपधत्वाद्वत्वम् 'तसौ मत्वर्थे' ( पा० १ । ४ । १९ ) इ
भत्वेन पदत्वस्य बाधितत्वात् रुत्वाद्यभावः । 'उगितश्च' ( पा०
१ । ६ ) इति ङीप् । मतुब्ङीपौ पित्त्वादनुदात्तौ । मही महता
तकारलोपश्छान्दसः 'यस्येति च' ( पा० ६ । ४ । १४ ) इत्यकारलोप
उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । तिस्रः त्रिशब्दाज्जसि 'त्रि
तुरोः स्त्रियां तिसृचतसृ' ( पा० ७ । २ । ९९ ) इति तिस्रादेशः
'अचि र ऋतः' (पा० ७ । २ । १००) इति रेफादेशः । 'तिसृभ्यो ज
(पा० ६ । १ । १६६) इति जस उदात्तत्वम् । देवीः 'देवानां पत्न्यो दे
'पुंयोगादाख्यायाम्' ( पा० ४ । १ । ४८ ) इति ङीप् । 'यस्येति
(पा० ६ । ४ । १४८ ) इत्यकारलोपः । प्रत्ययस्वरेण ङीप उदात्तत्वम्
जसि 'दीर्घाज्जसि च' ( पा० ६ । १ । १०५ ) इति निषिद्धं दीर्घत
'वा छन्दसि' ( पा० ६ । १ । १०६ ) इति पक्षेऽभ्यनुज्ञायते । मयो
'मीञ् हिंसायाम्' हिनस्ति दुःखमिति सुखं मयः । तद्भावयन्त्
मयोभुवः । अन्तर्भावितण्यर्थात् भुवः क्विप् । कृदुत्तरपदप्रकृ
स्वरत्वम् । बर्हिः 'बृंहेर्नलोपश्च' इति इसिप्रत्ययः । प्रत्ययस्वर
सीदन्तु 'षद्लृ विशरणादौ । 'पाघ्रा' ( पा० ७ । ३ । ७८ ) इत्यादि
सीदादेशः । अस्रिधः स्रिधेर्हिंसार्थस्य शोषणार्थस्य वा संपदादि
भावे क्विपि नञा बहुव्रीहिः । पूर्वपदप्रकृतिस्वरं बाधित्वा 'नञ्सुभ्य
( पा० ६ । २ । १७२ ) इत्युत्तरपदान्तोदात्तत्वम् ।

पत्नीसयाजे त्वष्टुः पुरोऽनुवाक्या । इह त्वष्टारमग्रियमि
शं युवाकाय संप्रेषित इति खण्डे सूत्रिम्—'सन्ते पयांसि समु
वाजा इह त्वष्टारमग्रियम्' ( आ० १ । १० ) इति ।

तामेतां पुरोनुवाक्यां सूक्ते दशमीमृचमाह—

मं०—इह त्वष्टारमग्रियं विश्वरूपमुप ह्वये ।

अस्माकमस्तु केवलः ॥ १० ॥

प०—इह । त्वष्टारम् । अग्रियम् । विश्वऽरूपम् । उप । ह्वये ।

अस्माकम् । अस्तु । केवलः ॥ १० ॥

त्वष्टारं त्वष्टृनामकमग्निं इह कर्मण्युपह्वये । कीदृशम् अग्रियं श्रेष्ठं । विश्वरूपं बहुविधरूपोपेतं । सोऽस्माकं केवलोऽसाधारणोऽस्तु । इतरयजमानेभ्योऽप्यधिकमनुग्रहं करोत्वित्यर्थः ।

त्वष्टारं 'तक्षू त्वक्षू तनूकरणे' । तृन् । 'स्वरतिसूतिसूयतिधूञू-दितो वा' ( पा० ७ । २ । ४४) इतीडभावपक्षे 'स्कोः संयोगाद्योरन्ते च' (पा० ८ । २ । २९) इति वकारलोपः । ष्टुत्वं । द्वितीयैकवचने 'ऋतो ङि सर्वनामस्थानयोः' ( पा० ७ । ३ । ११० ) इति गुणे 'अप्तृन्' ( पा० ६ । ४ । ११ ) इत्यादिना उपधाया दीर्घः । तृनो नित्त्वादाद्युदात्तत्वम् । अग्रियं अग्रादित्यनुवृत्तौ 'घच्छौ च' ( पा० ४ । ४ । ११७ ) इति घच् । 'आयन' (पा० ७ । १ । २) इत्यादिना घकारस्य इयादेशः । 'यस्येति च' ( पा० ६ । ४ । ४८ ) इति लोपः । 'आयनादिषूपदेशिवद्वचनं स्वरसि-द्ध्यर्थम्' (वा० पा० ७ । १ । २) इति उपदेशिवद्भावात् प्रत्ययाद्युदात्त-त्वात् घचश्चित्त्वादन्तोदात्तत्वम् । विश्वरूपं विश्वानि रूपाणि त्वष्टृकृ-तपन्नत्वेन यस्य । 'त्वष्टा वै पशूनां मिथुनानां रूपकृत्' ( तै० सं० ६ । १ । ८ । ५ ) इति श्रुतेः । विश्वशब्दस्याद्युदात्तत्वात् पूर्वपदप्रकृतिस्व-रत्वे प्राप्ते 'बहुव्रीहौ विश्वं संज्ञायाम्' ( पा० ६ । २ । १०६ ) इति पूर्व-पदान्तोदात्तत्वम् । अस्माकं 'असु क्षेपणे' 'युष्यसिभ्यां मदिक्' ( उ० १ । १३८ ) प्रत्ययस्वरेणान्तोदात्तः । षष्ठीबहुवचनम् । अत्र

परमपि 'योऽचि' ( पा० ७।२।८९) इति यत्वं बाधित्वा नित्यत्वात् प्रति पदविधित्वाच्चाम आकमादेशे कृते ( पा० ७ । १ । ३३ ) 'अनादेः' (पा० ७ । २ । ८६) इति निषेधेन यत्वाभावात् 'शेषे लोपः' ( पा० ७ २।९०) इति दकारलोपे अकारान्तत्वेन पश्चात्प्राप्तस्यापि 'सुटः' (पा० १।५२) साम् इति निर्देशे स्थानिन्यन्तर्भावेन निवृत्तिः । एवमर्थं प हि साम इति ससुट्कनिर्देशः । केवलः वृषादेराकृतिगणत्वादाद्युदात्त

एकादशीमृचमाह—

म०—अव सृजा वनस्पते देव देवेभ्यो हविः ।

प्र दातुरस्तु चेतनम् ॥ ११ ॥

प०—अव । सृज । वनस्पते । देव । देवेभ्यः । हविः ।

प्र । दातुः । अस्तु । चेतनम् ॥ ११ ॥

हे वनस्पते एतन्नामकाग्ने देव हविर्भुग्भ्यो देवेभ्योऽस्म दीयं हविरव सृज समर्पयेत्यर्थः । प्र दातुर्यजमानस्य चेतनं परलोक विषयं विज्ञानं त्वत्प्रसादादस्तु ।

वनस्पते आमन्त्रितनिघातः । देवपादादित्वान्न निघातः षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । हविः इसः प्रत्ययस्वरः । दातुः ददातेस्तृच् । 'चितः' (पा० ६ । २ । १६३) इत्यन्तोदात्तः । ङसि 'ऋत उत्' (पा० ६ । १ । १११) इत्युत्त्वम् । एकादेशो रपरत्वं च । 'रात्सस्य' ( पा० ८ । २ । २४ ) इति सलोपः । एकादेशस्वरेणोकार उदात्तः चेतनं 'चिती संज्ञाने' करणे ल्युट् योरनादेशः । लघूपधगुणः । 'लिति' (पा० ६ । १ । १९३) इति प्रत्ययात् पूर्वस्योदात्तत्वम् ।

द्वादशीमृचमाह—

म०—स्वाहा॑ य॒ज्ञं कृ॑णोत॒नेन्द्रा॑य॒ यज्व॑नो गृ॒हे ।
तत्र॑ दे॒वाँ उप॑ ह्वये ॥ १२ ॥

प० —स्वाहा॑ । य॒ज्ञम् । कृ॒णो॒त॒न॒ । इन्द्रा॑य । यज्व॑नः । गृ॒हे ।
तत्र॑ । दे॒वान् । उप॑ । ह्व॒ये॒ ॥ १२ ॥

स्वाहाशब्दो हविःप्रदानवाची सन् एतन्नामकमग्निविशेषं लक्षयति । तदग्निसंपादितं यज्ञम् इन्द्राय इन्द्रतुष्ट्यर्थं यज्वनो यजमानस्य गृहे ऋत्विजः कृणोतन कुरुत । तत्र यज्ञे देवानुप ह्वये ।

कृणोतन 'कृवि हिंसाकरणयोश्च' । इदित्त्वान्नुम् । लोण्मध्यमबहुवचनस्य 'तस्थस्थमिपाम्' ( पा० ३ । ४ । ११० ) इति तादेशः । 'तप्तनप्तनथनाश्च' (पा० ७।१।४५) इति तनबादेशः । शपि प्राप्ते 'धिन्विकृण्वोर च' (पा० ३ । १ । ८०) इति उप्रत्ययः। तत्सन्नियोगेन वकारस्य अकारः । तस्य 'अतो लोपः' ( पा० ६ । ४ । ४८ ) इति लोपः । तस्य 'अचः परस्मिन्' ( पा० १ । १ । ५७ ) इति स्थानिवद्भावादकारस्य लघूपधगुणो न भवति । तनपः पित्त्वेनाङित्त्वादुकारस्य गुणः । इन्द्राय 'ऋज्रेन्द्र' इत्यादिना रन् । नित्त्वादाद्युदात्तः । यज्वनः 'यज देवपूजासंगतिकरणदानेषु' 'सुयजोर्ङ्वनिप्' ( पा० ३ । २ । १०३ ) ङसि भसंज्ञायामल्लोपे ( पा० ६ । ४ । १३६ ) प्राप्ते 'न संयोगाद्वमन्तात्' (पा० ६ । ४ । १३७ ) इति निषेधः । वनिपः पित्त्वेन धातुस्वर एव शिष्यते । गृहे 'ग्रह उपादाने' 'गेहे कः' ( पा० ३ । १ । १४४ ) इति कप्रत्ययः । 'ग्रहिज्या' ( पा० ६ । १ । १६ ) इत्यादिना सम्प्रसारणम् । परपूर्वत्वं ( पा० ६ । १ । ५३ ) प्रत्ययस्वरः ( पा० ३ । १ । ३ ) तत्र । त्रल्

(पा० ५ । ३ । १०)'लिति' (पा० ६ । ११ । १९३)इति प्रत्ययात् पूर्वस्यो-दात्तत्त्वम् । देवाँ उपेत्यत्र संहितायां 'दीर्घादटि' (पा० ८ । ३ । इति नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' (पा० ८ । ३ । ३) इत्याकारस्यानुनासिकादेशः । 'भोभगो' । ( पा० ८ । ३ । १७ ) इति यत्वम् तस्य 'लोपः शाकल्यस्य' ( पा० ८ । ३ । १९ ) इति लोपः ।

# अथ द्वाविंशं सूक्तम्



## संग्रहे तृतीयं सूक्तम्

प्रातर्युजेत्यादिकमेकविंशत्यृचं पञ्चमं सूक्तम् । तस्य ऋषि-
च्छन्दसी पूर्ववत् । देवताविशेषस्त्वनुक्रम्यते–'प्रातर्युजा सैका-चतस्र
आश्विन्यस्तथा सावित्र्य आग्नेय्यौ द्वे देवीनामेकैकेन्द्राणीवरुणान्यग्ना-
यीनां द्यावापृथिव्ये, पार्थिवी षड्वैष्णव्योऽतो देवादैवी वेति । सूक्त-
संख्यानुवर्तत इत्यस्मिन् खण्डे 'अनिरुक्ता संख्याविंशतिः' (अनु०
१२ । ४) इति परिभाषितत्वात् । 'प्रातर्युजेति सूक्ते संख्याविशेषस्या-
निरुक्ता संख्या विंशतिसंख्या द्रष्टव्या । सा च विंशतिरेकया धिकया सह
वर्तत इति सैका । तत्रादौ चतस्र ऋचोऽश्विदेवताकाः । पञ्चमीमार-
भ्याष्टम्यन्ताश्चतस्रः सवितृदेवताकाः । नवमी दशमी चोभे अग्नि
देवताके । एकादश्या ऋचो देवसम्बन्धिन्यो देव्यो देवताः । द्वादश्या
इन्द्रवरुणाग्निपत्न्य इन्द्राणीवरुणान्यग्नाय्यो देवताः । त्रयोदशीचतुर्दश्यौ
द्यावापृथिवीदेवताके । पञ्चदशी पार्थिवी । षोडशाद्याः षड्विष्णुदेवत्याः
षोडशी कृत्स्नदेवत्या वा ।

अत्र सूक्तविनियोगो लैङ्गिकः । प्रातरनुवाक आश्विने क्रतौ
प्रातर्युजा वि बोधयेति चतस्र ऋचः । सूत्रितं च—'अथाश्विनी एषो
उषाः प्रातर्युजेति चतस्रः' (आ० ४ । १५) इति ।

आश्विनग्रहस्य प्रातर्युजेत्येका पुरोनुवाक्या 'द्विदेवत्यैश्चर-
न्तीति खण्डे सूत्रितम् 'आश्विनस्य प्रातर्युजा विबोधय' (आ० ५ । ५)
इति ।

तत्र प्रथमामृचमाह—

म०—प्रातर्युजा वि बोधयाश्विनावेह गच्छताम् ।

अस्य सोमस्य पीतये ॥ १ ॥

प०—प्रातर्युजा । वि । बोधय । अश्विनौ । आ । इह । गच्छताम् ।

अस्य । सोमस्य । पीतये ॥ १ ॥

अत्र होताध्वर्युमुद्दिश्य ब्रूते हे अध्वर्यो प्रातर्युजा प्रातः सवनग्रहेण संयुक्तावश्विनौ देवौ वि बोधय विशेषेण प्रबुद्धौ कुरु । अश्विनौ प्रबुद्धौ चाश्विनौ देवौ अस्याभिषवसंस्कारयुक्तस्य सोमस्य पीतये पानाय इह कर्मण्यागच्छताम् ।

प्रातर्युङ्क्ते गृह्यमाणेन ग्रहेण सहेति प्रातर्युजा 'सत्सूद्विष' (पा० ३ । २ । ६१) इत्यादिना क्विप् । 'सुपां सुलुक्' (पा० ७ । १ । ३९) इत्यादिना आकारः । कृदुत्तरपदप्रकृतिस्वरत्वम् । अस्य 'ऊडिदम्' (पा० ६ । १ । १७१) इत्यादिना विभक्तेरुदात्तत्वम् । पीतये व्यत्ययेन क्तिन उदात्तत्वम् ।

द्वितीयामृचमाह—

म०—या सुरथा रथीतमोभा देवा दिविस्पृशा ।

अश्विना ता हवामहे ॥ २ ॥

प०—या । सुऽरथा । रथिऽतमा । उभा । देवा । दिविऽस्पृशा ।

अश्विना । ता । हवामहे ॥ २ ॥

योभाश्विना देवा यावुभावश्विनौ देवौ सुरथा शोभन-
युक्तौ रथीतमा रथिनां मध्येऽतिशयेन रथिनौ दिविस्पृशा
लोकनिवासिनौ ता हवामहे तादृशावश्विनावाह्वयामहे ।

येत्यादिष्वष्टसु पदेषु 'सुपां सुलुक्' (पा० ७ । १ । ३९) इत्यादिना
वचनस्याकारः । शोभनो रथो ययोस्तौ सुरथौ, समासान्तोदात्त-
ापवादं बहुव्रीहौ पूर्वपदप्रकृतिस्वरं ( पा० ६ । २ । १ ) बाधित्वा
ज्ञसुभ्याम्' ( पा० ६ । २ । १७२ ) इत्युत्तरपदान्तोदात्तत्वे प्राप्ते
ाद्युदात्तं द्व्यच्छन्दसि' ( पा० ६ । २ । ११९ ) इत्युत्तरपदाद्युदा-
त्वम् । रथीतमा 'अन्येषामपि दृश्यते' (पा० ६।३।१३७) इति संहिताया-
मकारस्य दीर्घत्वम् । दिविस्पृशौ दिवि स्पृशत इति दिविस्पृशौ
क्विप् च' (पा० ३ । २ । ७६) इति क्विप्। 'तत्पुरुषे कृति बहुलम्' (पा०६
। १४) इत्यलुक् । 'गतिकारकोपपदात्कृत्' ( पा० ६ । २ । १३९) इति
कृदुत्तरपदप्रकृतिस्वरत्वम् ।

तृतीयामृचमाह—

म०—या वां कशा मधुमत्यश्विना सूनृतावती ।

तया यज्ञं मिमिक्षतम् ॥ ३ ॥

प०—या । वाम् । कशा । मधुऽमती । अश्विना । सूनृताऽवती ।

तया । यज्ञम् । मिमिक्षतम् ॥३॥

अश्विना हे अश्विनौ देवौ वां युवयोः सम्बन्धिनी या
कशा अश्वताडनी विद्यते तया सह आगत्य यज्ञमस्मदीयं मिमिक्षतं
सोमरसेन सेक्तुमिच्छतम् । (कशयाश्वान् दृढं ताडयित्वा सहसा
समागत्य भवद्विषयां सोमरसाहुतिं निष्पादयितुमुद्युक्तौ भवतमित्यर्थः ।)
कीदृशी कशा मधुमती । 'अर्णः क्षोदः' इत्यादिषु एकशतसंख्याकेषु

* 'ईद्रथिनः' इत्युचितम् ।

उदकनामसु मधु पुरीषमिति पठितम् । तस्मादुदकवतीत्युक्तं भ
अश्वस्य शीघ्रगत्या यत्स्वेदोदकं स्रवति तेनेयं कशा क्लि
सूनृतावती प्रियसत्यवाग्युक्ता । तीव्रेण कशाताडनेन यो ध्वनिर्नि
ताडनवेलायाम् अश्वारूढेन च य आक्रोशः क्रियते तदुभयं शीघ्र
हेतुत्वेन यजमानस्य प्रियम् । यद्वा 'श्लोको धारा' इत्यादिषु सप्त
द्वाङ्नामसु 'कशा धिषणा' इति पठितम् । अश्विनोर्या वाक् म
माधुर्य्योपेता पारुष्यरहिता सूनृतावती प्रियत्वसत्यत्वोपेता फल
विषयेत्यर्थः । तया वाचा युक्तौ यज्ञं मिमिक्षतमिति योजनीम् ।

कशा 'कश गतिशासनयोः' 'पचाद्यच्' ( पा० ३ । १ ।
वृषादित्वादाद्युदात्तः (पा० ६ । १ । २०३)। सूनृतावती 'ऊन परि
सुष्ठूनयत्यप्रियमिति सूनृ । तथाविधमृतं सत्यं यस्यां वाचि
सूनृता । 'नञ्सुभ्याम्' ( पा० ६ । २ । १७२ ) इत्युत्तरपदान्तोदा
बाधित्वा 'परादिश्छन्दसि बहुलम्' ( पा० ६ । २ । ९९ ) इति
उदात्तः । सा यस्या अस्ति सा कशा सूनृतावतीति कशायाः
एवं नामा या कशेत्यर्थः । 'संज्ञायाम्' ( पा० ८ । २ । ११ ) इति
वत्त्वम् । मिमिक्षतम् । मिहेः सन् 'हलन्ताच्च' ( पा० १ । २ । १० )
तित्त्वाद्गुणाभावः । ढत्वकत्वषत्वानि ।

चतुर्थीमृचमाह—

मं—नहि वामस्ति दूरके यत्रा रथेन गच्छथः

अश्विना सोमिनो गृहम् ॥४॥

पं०—नहि । वाम् । अस्ति । दूरके । यत्र । रथेन । गच्छथः

अश्विना । सोमिनः । गृहम् ॥ ४ ॥

अश्विना हे अश्विनौ देवौ युवां सोमिनः सोमवतो
मानस्य गृहं प्रति रथेन गच्छथः। स मार्गो वां युवयोर्दूरके दूर-
न ह्यस्ति न वर्तते खलु। यद्वा यत्र गृहे गच्छथः तच्च गृहं दूरे
भवति।

नहि। 'एवादीनामन्तः' (फि० ३। १५) इत्यन्तोदात्तः। अस्ति
दिलोपे विभाषा' (पा० ८। १। ६३) इति निघाताभावः। अत्र
गृहं दूरे च नास्ति युवां च रथेन गच्छथः इति समुच्चयश्चार्थो
ते। चशब्दो न प्रयुज्यत इति चलोपे प्रथमा तिङ्विभक्तिरस्तीति।
'निपातस्य च' (पा० ६। ३। १३६) इति संहितायां दीर्घत्वम्।
छथः इयं यद्यपि न प्रथमा तथापि यत्रेति यद्वृत्तयोगान्न निघातः।

व्यूढस्य द्वितीये छन्दोमे वैश्वदेवशस्त्रे हिरण्यपाणिमूतय
सावित्र्यश्चतस्रः। 'द्वितीयस्येति खण्डे सूत्रितम्—'हिरण्यपाणि-
य इति चतस्रो मही द्यौः पृथवी च नः' (आ० ८। १०) इति।

पञ्चमीमृचमाह—

०—हिरण्यपाणिमूतये सवितारमुप ह्वये।
चेत्ता देवता पदम् ॥ ५ ॥

—हिरण्यऽपाणिम्। ऊतये। सवितारम्। उप। ह्वये।
सः। चेत्ता। देवता। पदम् ॥ ५ ॥

ऊतये अस्मद्रक्षणार्थं सवितारं देवमुपह्वये आह्वयामि।
व सविता देव एतन्मन्त्रप्रतिपाद्यदेवता भूत्वा पदं यजमानेन प्राप्यं
नं चेत्ता ज्ञापयिता भवति। कीदृशं सवितारम्। हिरण्यपाणिं
मानाय दातुं हस्ते सुवर्णधारिणं। यद्वा देवकर्तृके यागे सविता

स्वयमृत्विग्भूत्वा ब्रह्मत्वेनावस्थितः। तदानीं कस्यांचिदिष्टावः
तस्मै सवित्रे ब्रह्मणे प्राशित्रनामकं पुरोडाशभागं दत्तवन्तः।
प्राशित्रं हस्ते सवित्रा गृहीतं सत्तदीयपाणिं चिच्छेद। ततः
अस्य दातारोऽध्वर्यवः स्वर्णमयं पाणिं निर्माय प्रत्तिसवः
सोऽयमर्थः कौषीतकिब्राह्मणे समाम्नातः—' सवित्रे प्रा
प्रतिजह्रुस्तस्य पाणी प्रचिच्छेद तस्मै हिरण्मयौ प्रतिदधुस्तस्
रण्यपाणिरिति स्तुतः (श्रुतः)' इति।

हिरण्यशब्दं पाणिशब्दं च यास्क एवं निर्वक्ति—हि
कस्माद्ध्रियत आयम्यमानमिति वा, ह्रियते जनाज्जनमिति वा, हि
भवतीति वा, हृदयरमणं भवतीति वा 'हर्यतेर्वा स्यात् प्रेप्साक
( नि० २। १० ) इति। तथा 'पाणिः पणायतेः पूजाकर्मणः
२। २६ ) इति।

हिरण्यशब्दो नब्विषयत्वादाद्युदात्तः। बहुव्रीहौ पूर्वपदप्र
स्वरः (पा० ६। २। १)। ऊतये 'उदात्तः' इत्यनुवृत्तौ 'ऊतियूति
साति' (पा० ३। १। १६३) इत्यादिना क्तिन्नन्तोऽन्तोदात्तो निपा
सवितारं 'तृचश्चित्त्वादन्तोदात्तत्वम्' (पा० ६। १। १६३)।
'चिती संज्ञाने' अस्मादन्तर्भावितण्यर्थात्ताच्छील्ये तृन्। 'अनि
गमशासनम्' इतीडभावः। नित्त्वादाद्युदात्तः। देवता 'देवात्तल्
५। ४। २७) इति स्वार्थे तल्। 'लिति' ( पा० ६। १। १९३)
प्रत्ययात् पूर्वमुदात्तत्वम्। पदशब्दः पचाद्यजन्तः। 'चितः' (पा
१। १६३) इति अन्तोदात्तः।

सूक्ते षष्ठीमृचमाह—

म०—अपां नपातमवसे सवितारमुप स्तुहि।
तस्य व्रतान्युश्मसि ॥ ६ ॥

प०—अपाम् । नपातम् । अवसे । सवितारम् । उप । स्तुहि ।

तस्य । व्रतानि । उश्मसि ॥ ६ ॥

अत्र होता सामगमृत्विजमन्यं वा शस्त्रिण ब्रूते—अवसे अस्मान् रक्षितुं सवितारम् उप स्तुहि तस्य सवितुः सम्बन्धीनि व्रतानि कर्माणि सोमयागादिरूपाणि उश्मसि कामयामहे । कीदृशं सवितारम्, अपां नपातं जलस्य न पालकं सन्तापेन शोषकमित्यर्थः ।

अपाम् 'ऊडिदम्' (पा० ६।१।१७१) इत्यादिना विभक्तेरुदात्तत्वम् । नपातं 'पा रक्षणे' अस्य शत्रन्तः पाच्छब्दः । तस्य नञा समासे 'नभ्राण्नपात्' (पा० ६ । ३ । ७५) इत्यादिना नलोपप्रतिषेध इति वृत्तिकारः । अग्निर्हि अपो न पाति तच्छोषकत्वात् । तर्हि कथमपामिति षष्ठी 'न लोकाव्ययनिष्ठाखलर्थ' (पा० २ । ३ । ६९) इति कर्मणि षष्ठ्याः प्रतिषेधात् इति चेत्-तर्हि एषा शेषलक्षणास्तु । अग्न्यादित्यौ अपां कारणतया सम्बन्धिनौ 'अग्नेरापः' इति श्रुतेः । 'आदित्याज्जायते वृष्टिः' (मनु० ३ । ७६) इति स्मृतेश्च । अस्मिन् पक्षे 'उगिदचाम्' (पा० ७ । १ । ७०) इति नुमभावोऽपि निपातदेवेति मन्तव्यम् । पातेः क्विबन्तस्य तुग्वा निपातनाद्द्रष्टव्यः । अथवा न पातयति इति नपात्-'पत्लृ गतौ' इति धातोर्ण्यन्तात् क्विप् । अग्न्यादित्यौ ह्यपां न प्रापकौ प्रत्युत तच्छोषकौ । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अवसे-'तुमर्थे सेसेन्' (पा० ३ । ४ । ९) इत्यादिना असेन् । नित्त्वादाद्युदात्तः । उश्मसि 'वश कान्तौ' 'अदिप्रभृतिभ्यः' (पा० २ । ४ । ७२) इति शपो लुक्, 'इदन्तो मसिः' (पा० ७ । १ । ४६) इतीकारोपजनः ।

सप्तमीमृचमाह—

मं०—विभक्तारं हवामहे वसोश्चित्रस्य राधसः ।

सवितारं नृचक्षसम् ॥ ७ ॥

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥

प०—विऽभक्तारम् । हवामहे । वसोः । चित्रस्य । राधसः ।

सवितारम् । नृऽचक्षसम् ॥ ७ ॥

वसोः निवासहेतोश्चित्रस्य सुवर्णरजतादिरूपेण बहुविधस्य राधसो धनस्य विभक्तारम् अस्य यजमानस्यैतावद्धनदानमुचितमिति विभागकारिणं नृचक्षसं मनुष्याणां प्रकाशकारिणं सवितारं हवामहे । कौषीतकिन एतस्या ऋचो व्याख्यानरूपे ब्राह्मणे सवितुर्विभागहेतुत्वमेवं समामनन्ति—'यदेतद्वसोश्चित्रं राधस्तदेष सविता विभक्ताभ्यः प्रजाभ्यो विभजति' इति ।

विभक्तारं—तृतश्चित्त्वादन्तोदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वेन (पा० ६ । २ । १३९) तदेव शिष्यते । हवामहे ह्वयतेः 'बहुलं छन्दसि' ( पा० ६ । १ । ३४ ) इति सम्प्रसारणम् । वसोः 'वस निवासे' 'शॄस्वृस्निहि' इत्यादिना उः । निदित्यनुवृत्तेर्नित्त्वादाद्युदात्तः । राधसः—असुन्नन्तो नित्त्वादाद्युदात्तः । नृचक्षसं नॄंश्चष्टे इति नृचक्षाः तं नृचक्षसं 'चक्षेर्बहुलं शिच्च' (उ० ४ । २३२) इत्यसुन् । शित्त्वादनार्धधातुकत्वेन ख्याञादेशाभावः । कृदुत्तरपदप्रकृतिस्वरत्वम् ।

अष्टमीमृचमाह—

म०—सखाय आ नि षीदत सविता स्तोम्यो नु नः ।

दाता राधांसि शुंभति ॥ ८ ॥

प०—सखायः । आ । नि । सीदत । सविता । स्तोम्यः । नु । नः ।

दाता । राधांसि । शुंभति ॥ ८ ॥

सखिभूता हे ऋत्विजः आ नि षीदत सर्वत्रोपाविशत। नोऽस्माकमयं सविता नु क्षिप्रं स्तोम्यः स्तुतियोग्यः राधांसि धनानि दाता प्रदातुमुद्युक्तः। एष सविता शुंभति शोभते।

समानाः सन्तः ख्यान्ति प्रकाशन्त इति सखायः। 'ख्या प्रकथने' 'समाने ख्यश्चोदात्तः' (उ० ४। १३६) इतीण्प्रत्ययः। तत्सन्नियोगेन डित्त्वं यलोपश्च। डित्त्वादकारलोपः। 'समानस्य छन्दसि' (पा० ६। ३। ८४) इत्यादिना समानशब्दस्य सादेशः। इण्सन्नियोगेनोदात्तत्वम्। जसि 'सख्युरसम्बुद्धौ' (पा० ७। १। ९२) इति णित्वाद्वृद्धिरायादेशश्च। नि षीदत 'सदेरप्रतेः' (पा० ८। ३। ६६) इति षत्वम्। स्तोमेषु प्रतिपाद्यत्वेन भवः स्तोम्यः। 'भवे छन्दसि' (पा० ४। ४। ११०) इति यत्। 'यतोऽनावः' (पा० ६। १। २१३) इत्याद्युदात्तत्वम्। दाता दानशीलः ताच्छील्ये तृन्। नित्त्वादाद्युदात्तः। राधांसि गतम्। 'कर्तृ कर्मणोः कृति' (पा० २। ३। ६५) इति प्राप्तायाः षष्ठ्याः 'न लोकाव्यय' (पा० २। ३। ६९) इति प्रतिषेधः।

अग्निष्टोमे प्रातःसवने अग्ने पत्नीरिहा वहेति नेष्टुः प्रस्थितयाज्या प्रशास्ता ब्राह्मणाच्छंसीते खण्डे सूत्रितम्—'अग्ने पत्नीरिहा वहोत्तानाय वशान्नाय' (आ० ५। ५) इति।

तामेतां सूक्ते नवमीमृचमाह—

मं०—अग्ने॒ पत्नी॑रि॒हा व॑ह दे॒वाना॑मुश॒तीरुप॑।
त्वष्टा॑रं॒ सोम॑पीतये ॥ ९ ॥

पं०—अग्ने॑। पत्नीः॑। इ॒ह। आ। व॒ह॒। दे॒वाना॑म्। उ॒श॒तीः। उप॑।
त्वष्टा॑रम्। सोम॑ऽपीतये ॥ ९ ॥

हे अग्ने उशतीः कामयमाना देवानां पत्नीरिन्द्राण्याद्या इह देवयजनदेशे आ वह। तथा त्वष्टारं देवं सोमपीतये सोमपानार्थम् उप समीपे आ वह।

पत्नी इत्यन्तः पतिशब्द आद्युदात्तः। 'पत्युर्नो यज्ञसंयोगे' (पा० ४।१।३३) इति ङीप्। तत्सन्नियोगेन नकारश्च ङीपः पित्त्वादुदात्तस्वर एव। उशतीः 'वश कान्तौ' लटः शतृ। 'अदिप्रभृतिभ्यः शपः' (पा० २।४।७२) इति शपो लुक्। शतुर्ङित्वात् 'ग्रहिज्या' (पा० ६।१।१७) इत्यादिना सम्प्रसारणम्। 'उगितश्च' (पा० ४।१।६) इति ङीप्। 'शतुरनुमः' (पा० ६।१।१०३) इत्यादिना ङीबुदात्तः।

दशमीमृचमाह—

मं०—आ ग्ना अग्न इहावसे होत्रां यविष्ठ भारतीम्। वरूत्रीं धिषणां वह ॥ १० ॥

पं०—आ। ग्नाः। अग्ने। इह। अवसे। होत्राम्। यविष्ठ। भारतीम्। वरूत्रीम्। धिषणाम्। वह ॥ १० ॥

हे अग्ने अवसे अस्मानवितुं ग्ना देवपत्नीरिहा वह। हे यविष्ठ युवतमाग्ने होत्रां होमनिष्पादकाग्निपत्नीं भारतीं भरतमकस्यादित्यस्य पत्नीं वरूत्रीं वरणीयां धिषणां वाग्देवीं चावह। 'वाग्वै धिषणा' इति वाजसनेयकम्। 'भरत आदित्यः (नि० ८।१३)' इति यास्केनोक्तत्वात् तस्य पत्नी भारतीत्युच्यते।

गम्यन्त इति ग्नाः 'गम्लृ सृप्लृ गतौ' औणादिको डनप्रत्ययः। डित्वाट्टिलोपः। प्रत्ययस्वरः। होत्राम् 'हुयामाश्रुभसिभ्यस्त्रन्' (

४ । १६७ ) इति त्रनन्तो नित्वादाद्युदात्तः । अतिशयेन युवा यविष्ठः 'अतिशायने तमबिष्ठनौ' ( पा० ५ । ३ । ५५ ) 'स्थूलदूर' (पा० ६।४।१५६) इत्यादिना यणादिपरस्य लोपः पूर्वस्य च गुणः । भारतीं शार्ङ्गरवादेराकृतत्वात् ङीनन्तो नित्वादाद्युदात्तः । वरूत्रीं 'ग्रसितस्कभित' (पा० ७ । २ । ३४) इत्यादौ । यद्यपि वरूतृशब्दस्तृजन्त इत्युक्तं तथाप्यन्ते इतिकरणस्य प्रदर्शनार्थत्वाद्वरूतृशब्दस्तृनन्तोऽपि द्रष्टव्यः । तेन नित्वादाद्युदात्तत्वम् । शेषनिघातेन ऋकारस्यानुदात्तत्वात् 'उदात्तयणो हल्पूर्वात्' ( पा० ६ । १ । १७४ ) इत्यपि न ङीप उदात्तत्वम् । धिषणां क्युप्रत्ययानुवृत्तौ 'धृषेर्धिष च संज्ञायाम्' ( उ० २ । ८२ ) इति क्युः ।

सूक्ते एकादशीमृचमाह—

मं०—अभि नो देवीरवसा महः शर्मणा नृपत्नीः ।
अच्छिन्नपत्राः सचन्ताम् ॥११॥

प०—अभि । नः । देवीः । अवसा । महः । शर्मणा । नृऽपत्नीः ।
अच्छिन्नऽपत्राः । सचन्ताम् ॥११॥

देवीर्देव्यो देवपत्न्यः अवसा रक्षणेन, महो महता, शर्मणा च सुखेन च सह, नोऽस्मान् अभि सचन्ताम् आभिमुख्येन सेवन्ताम् । कीदृश्यो देव्यः नृपत्नीः मनुष्याणां पालयित्र्यः अच्छिन्नपत्राः अच्छिन्नपत्त्राः । न हि पत्त्रिरूपाणां देवपत्नीनां पत्त्राः केनचिच्छिद्यन्ते ।

देवीः 'पुंयोगादाख्यायाम्' ( पा० ४ । १ । ४८ ) इति ङीषन्तः प्रत्ययस्वरेणान्तोदात्तः । 'दीर्घाज्जसि च' ( पा० ६ । १ । १०५ ) इति प्रतिषेधस्य 'वा छन्दसि' ( पा० ६ । १ । १०६ ) इति पाक्षिकस्योक्तेः पूर्वसवर्णदीर्घत्वम् । अवसा 'अव रक्षणे' असुन् । नित्वादाद्युदात्तः । महः 'मह पूजायां' क्विप् 'सुपां सुपो भवन्ति' ( महाभा० ७ । १ । ३९ )

इति तृतीयैकवचनस्य ङसादेशः। 'सावेकाचः' (पा० ६।२।१
इति विभक्तेरुदात्तत्वम्। नृपत्नीः समासान्तोदात्तत्वे प्राप्ते 'पत्यौ
श्छन्दसि बहुलम्' (पा० ६।२।१९९) इत्युत्तरपदाद्युदात्तत्वम्। अच्छि-
न्नपत्राः न छिन्नान्यच्छिन्नानि अव्ययपूर्वपदप्रकृतिस्वरत्वम्। अच्छि-
पत्राणि यासां ताः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्।

द्वादशीमृचमाह—

मं०—इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये

अग्नायीं सोमपीतये ॥१२॥

पा०—इह। इन्द्राणीम्। उप। ह्वये। वरुणानीम्। स्वस्तये।

अग्नायीम्। सोमऽपीतये ॥१२॥

इहास्मिन् कर्मणि स्वस्तये अस्माकमविनाशाय सं-
पतीये सोमपानाय च इन्द्रवरुणाग्नीनां पत्नीराह्वयामि।

इन्द्राणीं वरुणानीं। 'इन्द्रवरुण' (पा० ४।१।४९) इ-
दिना पुंयोगे ङीष्प्रत्ययः आनुगागमश्च। प्रत्ययस्वरः। अग्ना-
'वृषाकप्यग्निकुसितकुसीदानामुदात्तः' (पा० ४।१।३७) इति ङी-
तत्सन्नियोगेन इकारस्यैकार उदात्तः। सोमपीतये असकृत्पूर्वोक्तम्।

द्वितीये छन्दोमे वैश्वदेवशस्त्रे मही द्यौः पृथिवी च न
द्यावापृथिव्यनिविद्धानीयस्तृचः। 'द्वितीयस्याग्निं व' इति खण्डे सू-
तम्। 'मही द्यौः पृथिवी च नो युवाना पितरा पुनः' (आ० ८।१०)

आग्रयणेष्टौ मही द्यौरित्येषा द्यावापृथिव्यैककपालस्यानुवा-
आग्रयणं व्रीहिश्यामाकेति खण्डे सूत्रितम् 'ये के च ज्मा म-
अहिमाया मही द्यौः पृथिवी च नः' (आ० २।९) इति।

अग्निमन्थनेप्येषा विनियुक्ता। 'प्रातर्वैश्वदेव्याविति खण्डे

तम्–'अभि त्वा देव सवितुर्मही द्यौः पृथिवी च नः' (आ० २।१६) इति।
विष्यन्दमानं सान्नाय्यम् अनयैवाहवनीयदेशे निनयेत्। विष्य-पराध इति खण्डे तथैव सूत्रितम्—'विष्यन्दमानं मही द्यौः पृथिवी च न इति अन्तः परिधिदेशे निनयेयुः' ( आ० ३।१० ) इति।

आश्विनशस्त्रेऽप्येषा संस्थितेष्वाश्विनायेति खण्डे सूत्रितम्—'मही द्यौः पृथिवी च नस्ते हि द्यावापृथिवी विश्वशंभुवा' ( आ० ६।५ ) इति।

तामेतां सूक्ते त्रयोदशीमृचमाह—

मं०—मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्।

पिपृतां नो भरीमभिः ॥ १३ ॥

पा०—मही। द्यौः। पृथिवी। च। नः। इमम्। यज्ञम्। मिमिक्षताम्।

पिपृताम्। नः। भरीमऽभिः ॥ १३ ॥

मही महती द्यौः द्युलोकदेवता, पृथिवी भूमिदेवता च नोऽस्मदीयमिमं यज्ञं मिमिक्षतां स्वकीयेन सारभूतेन रसेन मिमिक्षितां सेक्तुमिच्छताम्। तथा भरीमभिः भरणैः पोषणैर्नोऽस्मान् पिपृताम् उभे देव्यौ पूरयताम्।

मही महच्छब्दात् 'उगितश्च' ( पा० ४।१।६ ) इति ङीप्। अच्छब्दलोपः छान्दसः। 'बृहन्महतोरुपसंख्यानम्' इति ङीप उदात्तत्वम्। द्यौः दिव्* (द्यो) शब्दः प्रातिपदिकस्वरेणान्तोदात्तः 'गोतोणित्' (पा० ७।१।९०) इति ततः परस्यः सोर्णिद्धद्भावाद्भवन्ती वृद्धिरपि स्थानिवद्भावेनोदात्ता। पृथिवी 'प्रथ प्रख्याने' 'प्रथेः षिवन् संप्रसारणं च'

---

* दिव्शब्दस्योल्लेखस्तु–अतीवभ्रान्तिबोधकः तथा सति 'गोतोणित्' इत्यादि लेखस्य सर्वथा असङ्गतेः।

(उ० १ । १५० ) इति षिवन्प्रत्ययः । 'षिद्गौरादिभ्यश्च (पा० १ । ४१ ) इति ङीष् । प्रत्ययस्वरः । मिमिक्षितां 'मिह सेचने' द्विर्भावहलादिशेषौ, ढत्वकत्वषत्वानि । पिपृतां 'पृ पालनपूरणयो' ह्रस्व इत्येके । (लोट् तसस्ताम्) शपः श्लुः 'अर्तिपिपर्त्योश्च'(पा०७।४। इत्यभ्यासस्याकारस्य इकारः । तिङः प्रत्ययस्वरः । भरीमभिः 'डुभृ धारणपोषणयोः' । 'हुस्तृभृधृतृस्वृसृभ्य ईमन्' (उ० ४ । १४ इतीमन् । नित्वादाद्युदात्तः ।

चतुर्दशीमृचमाह—

मं—तयोरिद्घृतवत्पयो विप्रा रिहन्ति धीतिभिः गन्धर्वस्य ध्रुवे पदे ॥१४॥

पा०—तयोः । इत् । घृतऽवत् । पयः । विप्राः । रिहन्ति । धीतिऽभिः गन्धर्वस्य । ध्रुवे । पदे ॥१४॥

गन्धर्वस्य ध्रुवं पदमन्तरिक्षम् । तथा च तापनीयशाखा समाम्नायते—'यक्षगन्धर्वाप्सरोगणसेवितमन्तरिक्षम्' (नृ० ता० १ इति । तेनान्तरिक्षेणोपलक्षिते आकाशे वर्तमानयोस्तयोरिद्द्यावापृथि व्योरेव सम्बन्धि पयो जलं घृतवत् घृतसदृशं विप्राः मेधावि प्राणिनो धीतिभिः कर्मभिः रिहन्ति लिहन्ति । यद्वा । घृतवद्घृ सारं तेनोपेतं रिहन्ति लिहेर्व्यत्ययेन रेफः ।

गन्धर्वस्य । 'धृञ् धारणे' । 'गविगन् धृञो व' ( गविधृञो च ) इति वप्रत्ययः । तत्सन्नियोगेन गोशब्दस्य च गन्नादेशः ।

स्योना पृथिवीत्येषा महानाम्नीव्रते भूमिस्पर्शने विनियुक्ता एतद्विदं ब्रह्मचारिणमिति खण्डे सूत्रितम्—'स्योना पृथिवी भवा

समाप्य' ( आ० ८ । १४ ) इति । स्मार्ते हेमन्तप्रत्यवरोहणेऽप्येषा ऋग् जप्या । मार्गशीर्ष्यां प्रत्यवरोहणमिति खण्डे सूत्रितम्—'तस्मिन्नुपविश्य स्योना पृथिवि भवेति जपित्वा' (आ० गृ० २।३।६)इति।

तामेतां सूक्ते पञ्चदशामृचमाह—

मं०—स्योना पृथिवि भवानृक्षरा निवेशनी ।

यच्छा नः शर्म सप्रथः ॥१५॥

पं०—स्योना । पृथिवि । भव । अनृक्षरा । निऽवेशनी ।

यच्छ । नः । शर्म । सऽप्रथः ॥१५॥

हे पृथिवि स्योनत्वादिगुणयुक्ता भव । स्योनशब्दो विस्तीर्णवाची । तथा च वाजसनेयब्राह्मणे स्योनशब्दोपेतं कञ्चिन्मन्त्रमुदाहृत्य व्याख्यातम्—'इन्द्रस्योरुमाविश स्योनः स्योनमिति विस्तीर्णो विस्तर्णमित्येव तदाह' इति । यद्वा । स्योनशब्दः सुखवाची । तथा च यास्कवाक्यमुदाहरिष्यते-अनृक्षरा कण्टकरहिता निवेशनी निवासस्थानभूता सप्रथो विस्तारयुक्तं शर्म शरणं नोऽस्मभ्यं यच्छ हे पृथिवि देहि ।

तामेतामृचमुदाहृत्य यास्क एवं व्याचष्टे—

'सुखा नः पृथिवि भवानृक्षरा निवेशन्यृक्षरः कण्टकः ऋच्छतेः । कण्टकः कन्तपो वा। कृन्ततेर्वा।कण्टतेर्वा स्याद्गतिकर्मण उद्गततमो भवति । यच्छ नः शर्म शरणं सर्वतः पृथु:' ( नि० ९ । ३२ ) इति ।

स्योना 'षिवु तन्तुसन्ताने' । 'सिवेष्टेर्यो च' ( उ० ३ । ९ ) इति नप्रत्ययष्टेश्चयो इत्यादेशः प्रत्ययस्वरः । स्योना पृथिवीत्यनयोर्भवेत्याख्यातेनैवान्वयो न परस्परम् । अतोऽसामर्थ्येनैव पराङ्गवद्भावादोकारस्य नामन्त्रिताद्युदात्तत्वम् । अनृक्षरा 'ऋषी गतौ' । गच्छत्यन्तरित्यृक्षरः कण्टकः । 'तन्यृषिभ्यां क्सरन्' ( उ० ३ । ७५ ) 'षढोः कः सि'

( पा० ८ । २ । ४१ ) इति कत्वं 'आदेशप्रत्यययोः' ( पा० ८ । ३ । इति षत्वम् । नञा बहुव्रीहिः 'तस्मान्नुडचि' ( पा० ६ । ३ । ७४ ) नुडागमः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । निविशन्त्यस्मिन्निति निवेशनी 'करणाधिकरणयोश्च' ( पा० ३ । ३ । ११ ) ल्युट् । 'सिति' ( पा० ३ । ६ । १९३ ) इति प्रत्ययात् पूर्वस्योदात्तत्वं यच्छ 'दाण् दाने' 'पाघ्रा०' (पा० ७ । ३ । ७८ ) इत्यादिना यच्छादेशः 'द्व्यचोऽतस्तिङः' ( पा० ६ । ३ । ५३ ) इति दीर्घः । सप्रथः प्रख्याने' असुन् । प्रथसा सह वर्तत इति 'तेन सहेति तुल्ययोगे' ( पा० २ । २ । २८ ) इति समासः । 'वोपसर्जनस्य' ( पा० ६ । ३ । ८२ ) सभावः । कृत् स्वरः ।

प्रातःसवने सोमातिरेके एकं शस्त्रं शंसनीयम् । अत्रातो दे इत्याद्याः षड्ऋचः । सोमातिरेक इति खण्डे सूत्रितम्—'महाँ इ य ओजसा अतो देवा अवन्तु न इत्यैन्द्रीभिर्वैष्णवीभिश्च' ( आ ६ । ७ ) इति ।

आप्तोर्यामेऽच्छावाकातिरिक्तोक्थेऽपि एता षड्ऋचः । स्तोत्रियानुरूपार्थाः तथा च 'यस्य पशव' इति खण्डे सूत्रितम्—'अतो दे अवन्तु न इति स्तोत्रियानुरूपौ' ( आ० ९ । ११ ) इति ।

दर्शपूर्णमासयोः प्रायश्चित्तहोमेऽप्याद्ये विनियुक्ते । तथैव पत्न्या' इति खण्डे सूत्रितम्—'अतो देवा अवन्तु न इति द्वाभ्यां, व्याहृतिभिश्च' ( आ० १ । ११ ) इति ।

याज्यानुवाक्ययोर्मध्ये लौकिकभाषणे अतो देवा इत्येषा जप्या सूत्रितं हि—'आपद्यतो देवा अवन्तु न इति जपेत्' (आ० १।५ ) इति

तामेतां सूक्ते षोडशीमृचमाह—

मं०—अतो॑ दे॒वा अ॑वन्तु नो॒ यतो॒ विष्णु॑र्वि च॒क्रमे॑ पृ॒थि॒व्याः स॒प्त धाम॑भिः ॥१६॥

प०—अतः । देवाः । अवन्तु । नः । यतः । विष्णुः । विऽचक्रमे ।

पृथिव्याः । सप्त । धामऽभिः ॥ १६ ॥

विष्णुः परमेश्वरः सप्तधामभिः सप्तभिर्गायत्र्यादिभिश्छन्दोभिः साधनभूतैः यतः पृथिव्या यस्माद् भूप्रदेशाद्विचक्रमे विविधं पादक्रमणं कृतवान् । अतोऽस्मात् पृथिवीप्रदेशान्नोऽस्मान् देवा अवन्तु । विष्णोः पृथिव्यादिलोकेषु छन्दोभिः साधनैर्जयं तैत्तिरीया आमनन्ति 'विष्णुमुखा वै देवाः छन्दोभिरिमांल्लोकाननपजय्यमभ्यजयन्' ( तै० सं० ५ । २ । १ । १ ) इति ।

विष्णोस्त्रिविक्रमावतारे पादत्रयक्रमणस्य पृथिव्यपादानं पृथिवीप्रदेशाद्रक्षणं नाम भूलोके वर्तमानानां पापनिवारणम् ।

अतः एतच्छब्दात् 'पञ्चम्यास्तसिल्' ( पा० ५ । ३ । ७ ) इति तसिल् । 'एतदोऽश् ( न् )' ( पा० ५ । ३ । ५ ) इत्यशा ( न्ना ) देशः । लित्स्वरेणाकार उदात्तः । यतः तसिलः 'प्राग्दिशो विभक्तिः' (पा० ५ । ३ । १) इति विभक्तिसंज्ञायां त्यदाद्यत्वं लित्स्वरः । विष्णुः 'विषेः किच्च' (उ० ३ । ३९) इति नुप्रत्ययः । कित्वान्न गुणः । निदित्यनुवृत्तेराद्युदात्तत्वम् । विचक्रमे सुबिति योगविभागाद्विशब्दस्य समासः । समासान्तोदात्तत्वम् । यद्वृत्तयोगान्न निघातः । सप्त 'सुपां सुलुक्'इति भिसो लुक् । धामभिः दधातेः 'आतो मनिन्' इति मनिन् । नित्स्वरः ।

वैष्णवोपांशुयाजस्य इदं विष्णुरित्येषानुवाक्या । 'उक्ता देवता' इति खण्डे सूत्रितम्—'इदं विष्णुर्वि चक्रमे त्रिदेवः पृथिवीमेष एताम्' (आ० १ । ६) इति ।

गार्हपत्याहवनीययोर्मध्ये श्वातिक्रमणेऽनयैव श्वपदेषु भस्म प्रक्षिपेत् । विध्यपराय इति खण्डे सूत्रितम्–'भस्मना शुनः पदं प्रतिवपेदिदं विष्णुर्वि चक्रमे' (आ० ३ । १०) इति ।

आतिथ्यायां प्रधानस्य हविष एषैवानुवाक्या । अथातिथ्येलान्तेति खण्डे सूत्रितम्—'इदं विष्णुर्वि चक्रमे तदस्य प्रियमभिपाथो

अश्याम्' (आ० ४ । ५) इति ।

उपसत्सु वैष्णवस्यैषैवानुवाक्या । अथोपसदिति खण्डे सूत्रितम्—'गयस्फानो अमीवहेदं विष्णुर्वि चक्रमे' (आ० ४ । ८) इति ।

मं०—इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् ।

समूळ्हमस्य पांसुरे ॥ १७ ॥

प०—इदम् । विष्णुः । वि । चक्रमे । त्रेधा । नि । दधे । पदम् ।

संऽऊळ्हम् । अस्य । पांसुरे ॥ १७ ॥

विष्णुस्त्रिविक्रमावतारधारी इदं प्रतीयमानं सर्वं जगदुद्दिश्य वि चक्रमे विशेषेण क्रमणं कृतवान् । तदा त्रेधा त्रिप्रकारैः पदं नि दधे स्वकीयं पादं प्रक्षिप्तवान् । अस्य विष्णोः पांसुरे धूलियुक्ते पादस्थाने समूळ्हमिदं सर्वं जगत्सम्यगन्तर्भूतम् ।

सेयमृक् यास्केनैवं व्याख्याता—

'विष्णुर्विशतेर्वा व्यश्नोतेर्वा' । ( नि०१२ । १८ )

यदिदं किञ्च तद्विक्रमते विष्णुस्त्रेधा निधत्ते पदं त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः । समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः । समूळहमस्य पांसुरेऽप्यायनेऽन्तरिक्षे पदं न दृश्यते अपि वोपमार्थं स्यात् । पांसुर इव पदं न दृश्यत इति । पांसवः पादैः सूयन्त इति वा, पन्नाः शेरत इति वा, पंसनीया भवन्तीति वा (नि० १२ । १९) इति ।

त्रेधा 'एधाच्च' (पा० ५।३।४६) इत्येधाच्प्रत्ययः । चितोऽन्तोदात्तः । समूळ्हं 'वह प्रापणे' 'निष्ठा' (पा० ३ । २ । १०२) इति क्तः । 'वचिस्वपि' (पा० ६ । १ । १५) इत्यादिना सम्प्रसारणम् । ढत्वधत्वष्टुत्वढलोपदीर्घत्वानि । 'गतिरनन्तरः' (पा० ६ । २ । ४९) इति गतेः प्रकृतिस्वरत्वम् । अस्य 'इदमोऽन्वादेशे' (पा० २ । ४ । ३२) इत्यशनुदात्तः । प्रत्ययः

पांसुपाण्डुभ्यश्चेति वक्तव्यम्' (वा० पा० ५।२।१०७) इति
र्थीयो रः। प्रत्ययस्वरः।

उपसदि वैष्णवयागस्य प्रातःकाले याज्या सायंकालेऽनुवाक्या
णि पदेत्येषा। सूत्रितं च—'त्रीणि पदा वि चक्रमे। इति स्विष्ट-
ादि लुप्यते' (आ० ४।८) इति।

तामेतामष्टादशीमृचमाह—

०—त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः।
अतो धर्माणि धारयन् ॥ १८ ॥

—त्रीणि। पदा। वि। चक्रमे। विष्णुः। गोपाः। अदाभ्यः।
अतः। धर्माणि। धारयन् ॥ १८ ॥

अदाभ्यः केनापि हिंसितुमशक्यः, गोपाः सर्वस्य जगतो
को विष्णुः पृथिव्यादिस्थानेष्वत एतेषु त्रीणि पदानि वि चक्रमे।
कुर्वन्। धर्माण्यग्निहोत्रादीनि धारयन् पोषयन्।

पदा 'सुपां सुलुक्' (पा० ७।१।३९) इत्यादिना विभक्तेर्डा-
। तस्य स्थानिवद्भावेनानुदात्तत्वे प्राप्त उदात्तनिवृत्तिस्वरेणोदा-
म्। गोपाः 'गोपामृतस्य' (ऋ० वे० १।१।८) इत्यत्रोक्तम्।
भ्यः दम्भेः 'ऋहलोर्ण्यत्' (पा० ३।१।१२४) इति ण्यत्। नञ्समासः।
यपूर्वपदप्रकृतिस्वरत्वम्। धारयन् शपः पित्त्वादनुदात्तत्वम्।
श्च लसार्वधातुकस्वरेण णिच एव स्वरः शिष्यते।

एकोनविंशीमृचमाह—

०—विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे।
इन्द्रस्य युज्यः सखा ॥१९॥

प०—विष्णोः । कर्माणि । पश्यत । यतः । व्रतानि । पस्पशे ।
इन्द्रस्य । युज्यः । सखा ॥ १९ ॥

हे ऋत्विगादयो विष्णोः कर्माणि पालनादीनि पश्यत । यतो यैः कर्मभिः व्रतान्यग्निहोत्रादीनि पस्पशे सर्वो यजमानः स्पृष्टवान्, विष्णोरनुग्रहादनुतिष्ठतीत्यर्थः । तादृशो विष्णुरिन्द्रस्य युज्यो योज्यो ( योग्यो )ऽनुकूलः सखा भवति । विष्णोरिन्द्रानु... 'त्वष्टा हतपुत्रः' इत्यनुवाके 'अथ वैतर्हि विष्णुः' (तै० सं० २।४।... २ ) इत्यादिना प्रपञ्चेन तैत्तिरीया आमनन्ति ।

पस्पशे, 'स्पश बाधनस्पर्शनयोः ।' लिट् । द्विर्भावे 'शर्पूर्वाः...' (पा० ७।४।६१ ) इति पकारः शिष्यते । सकारो लुप्यते । यद्वृत्त... न्निघातः । युज्यः युजेर्बाहुलकात् क्यप् कित्त्वाद्गुणाभावः ।... पित्त्वादनुदात्तत्वम् । धातुस्वरः ।

विंशीमृचमाह—

मं०—तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥२०॥

प०—तत् । विष्णोः । परमम् । पदम् । सदा । पश्यन्ति । सूरयः ।
दिविऽइव । चक्षुः । आऽततम् ॥ २० ॥

सूरयो विद्वांस ऋत्विगादयो विष्णोः सम्बन्धि... मुत्कृष्टं तच्छास्त्रप्रसिद्धं पदं स्वर्गस्थानं शास्त्रदृष्ट्या सर्वदा पश्यन्ति । तत्र दृष्टान्तः । दिवीव । आकाशे यथा आततं सर्वतः प्रसृतं चक्षुः ... धाभावेन विशदं पश्यति तद्वत् ।

सदा 'सर्वैकान्य' (पा० ५ । ३ । १५) इति दाप्रत्ययः । 'सर्वस्य ऽन्यतरस्यां दि' ( पा० ५ । ३ । ६ ) इति सर्वशब्दस्य सभावः । त्ययेनाद्युदात्तत्वम् । दिवि 'ऊडिदम्' (पा० ६ । ३ । १७) इत्यादिना भक्तेरुदात्तत्वम् । इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च इति इव शिष्यते । चक्षुः 'नब्विषयस्य' इत्याद्युदात्तत्वम् । आततं तनोतेः र्माणि क्तः 'यस्य विभाषा' इतीट्प्रतिषेधः, 'अनुदात्तोपदेश' ( पा० । ४ । ३७ ) इत्यादिना नलोपः कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तिरनन्तरः' इति गतेरुदात्तत्वम् ।

एकविंशीमृचमाह—

म०—तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।

विष्णोर्यत्परमं पदम् ॥ २१ ॥

० – तत् । विप्रासः । विपन्यवः । जागृऽवांसः । सम् । इन्धते ।

विष्णोः । यत् । परमम् । पदम् ॥ २१ ॥

पूर्वोक्तं विष्णोर्यत्परमं पदमस्ति तत्पदं विप्रासो धाविनः समिन्धते सम्यक् दीपयन्ति । कीदृशाः विपन्यवः विशे- ण स्तोतारः जागृवांसः शब्दार्थयोः प्रमादराहित्येन जागरूकाः ।

विप्रासः 'आज्जसेरसुक्' (पा० ७ । १ । ५०) । विपन्यवः स्तुत्य- स्य पनेर्बाहुलक औणादिको युप्रत्ययः । तत्र प्रत्ययस्वरः । जागृ ांसः 'जागृ निद्राक्षये' लिटः क्वसुः । क्रादिनियमात् प्राप्तस्येटो 'वस्वे- ाजदूधसाम्' ( पा० ७ २ । ६७ ) इति नियमात् निवृत्तिः ।

———

# अथ पंचविंशं सूक्तम्

## संग्रहे चतुर्थं सूक्तम्।

यच्चिदित्येकविंशत्यृचं द्वितीयं सूक्तम्। तथा चानुक्रान्त 'यच्चित्सैका' (सर्वानु० २। २। २५) इति। 'ऋषिश्चान्यस्मात्' (स नु० परि० १२। २) इति परिभाषया शुनःशेप एव ऋषिः। गायत्रमिति परिभाषितत्वाद्गायत्री छन्दः। वारुणं त्विति पूर्वोक्त तुह्यादि परिभाषया (अनु० १२। ३) वरुणो देवता। विनियोग शौनःशेपाख्याने। विशेषविनियोगस्तु आभिप्लवषडहे इदं होत्रकशस्त्रे स्तोमनिमित्तमावापार्थम्। 'अभिप्लवपृष्ठ्याहानीति तथैव सूत्रितम्—'यच्चिद्धि ते विश इति वारुणमेतस्य तृचमा मैत्रावरुणः' (आ० ७। ५) इति।

तस्मिन् सूक्ते प्रथमामाह—

मं०—यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम्। मिनीमसि द्यविद्यवि ॥ १ ॥

प०—यत्। चित्। हि। ते। विशः। यथा। प्र। देव वरुण। व्र मिनीमसि। द्यविऽद्यवि ॥ १ ॥

हे वरुण यथा लोके विशः प्रजाः कदाचित् प्र कुर्वन्ति तथा वयमपि ते तव सम्बन्धि यच्चिद्धि यदेव किंचिद कर्म द्यवि द्यवि प्रतिदिनं प्र सिनीमसि प्रमादेन हिंसितवन्तः त व्रतं प्रमादपरिहारेण साङ्गं कुर्विति शेषः।

यथा, लित् स्वरेणाद्युदात्तत्वे प्राप्ते 'यथेति पादान्ते' (फि० १७) इति सर्वानुदात्तत्वम्। मिनीमसि, 'मीञ् हिंसायाम्'। 'इद

मसिः' ( पा० ७ । १ । ४६ ) 'क्र्यादिभ्यः श्ना' ( पा० ३ । १ । ८१ ) 'मीनातेर्निगमे' ( पा० ७ । ३ । ८१ ) इति ह्रस्वत्वम् । 'ईहल्यघोः' (पा० ६। ४ । ११३ ) इतीकारः । सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः ( वा० पा० ६ । १ । १५८ ) इति वचनात् तिङ एव स्वरः शिष्यते। यद्वृत्तयोगान्निघाताभावः ।

द्वितीयामृचमाह—

म०—मा नो वधाय हत्नवे जिहीळानस्य रीरधः ।
मा हृणानस्य मन्यवे ॥२॥

प०—मा । नः । वधाय । हत्नवे । जिहीळानस्य । रीरधः ।
मा । हृणानस्य । मन्यवे ॥२॥

हे वरुण जिहीळानस्य अनादरं कृतवतः हत्नवे हन्तुः पापिहननशीलस्य तव सम्बन्धिने त्वत्कर्तृकाय वधाय नोऽस्मान् मा रीरधः संसिद्धान् विषयभूतान् मा कुरु । हृणानस्य हृणीयमानस्य क्रुद्धस्य तव मन्यवे क्रोधाय मा अस्मान् रीरधः ।

वधाय, 'हनश्च वधः' (पा० ३ । ३ । ७६) इति अबन्तो वधशब्द उञ्छादिषु पाठादन्तोदात्तः । हत्नवे, 'हन हिंसागत्योः' 'कृहनिभ्यां क्नुः' ( उ० ३ । ३० ) इति क्नुप्रत्ययः । धातोर्नकारस्य तकारः। जिहीळानस्य, 'हेडृ अनादरे' अस्माल्लिटः कानच् । द्विर्भावहलादिशेषह्रस्वचुत्वजश्त्वानि । एकारस्य इकारादेशश्छान्दसः । 'चितः' ( पा० ६ । २ १६३) इत्यन्तोदात्तत्वम् । रीरधः 'राध साध संसिद्धौ' चङि णिलोपे उपधाह्रस्वत्वं द्विर्वचनहलादिशेषः ह्रस्वत्वसन्वद्भावेत्वाभ्यासदीर्घाः । 'न माङ्योगे' ( पा० ६ । ४ । ७४ ) इत्यडभावः । हृणानस्य, 'हृणीङ् लज्जायाम्' अस्मात् शानचि पृषोदरादित्वादभिमतरूपसिद्धः ।

तृतीयामृचमाह—

म०—वि मृळीकाय ते मनो रथीरश्वं न सन्दितम्

गीर्भिर्वरुण सीमहि ॥३॥

प०—वि । मृळीकाय । ते । मनः । रथीः । अश्वम् । न । सम्ऽदितम्

गीःऽभिः । वरुण । सीमहि ॥३॥

हे वरुण मृळीकाय अस्मत्सुखाय ते तव मनो गीर्भिः स्तुतिभिः वि सीमहि विशेषेण बध्नीमः प्रसादयाम इत्यर्थः । तत्र दृष्टान्तः—रथीः रथस्वामी सन्दितं सम्यक् खण्डितं दूरगमनेन श्रान्तम् अश्वं न अश्वमिव । यथा स्वामी श्रान्तमश्वं घासप्रदानादिना प्रसादयति तद्वत् ।

रथीः, मत्वर्थीय ईकारः । सन्दितं, 'दो अवखण्डने' 'निष्ठा' (पा० ३ । २ । १०२) इति क्तः । 'द्यतिस्यतिमास्थामिति' ( पा० ७ । ४ । ४०) इतीकारान्तादेशः । 'गतिरनन्तरः' ( पा० ६ । २ । ४९ ) इति गतेः प्रकृतिस्वरत्वम् । गीर्भिः, 'सावेकाचः' (पा० ६ । १ । १६८) इति भिस उदात्तत्वम् । सीमहि, 'षिवु तन्तुसन्ताने' व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' ( पा० २ । ४ । ७२ ) इति विकरणस्य लुक् । 'वलि लोपः' (पा० ६ । १ । ६६ ) । यद्वा । 'षिञ् बन्धने' इत्यस्माद्विकरणस्य लुक् । दीर्घश्छान्दसः ।

चतुर्थीमृचमाह—

म०—परा हि मे विमन्यवः पतन्ति वस्य इष्टये ।

वयो न वसतीरुप ॥४॥

प०—परा । हि । मे । विऽमन्यवः । पतन्ति । वस्यःऽइष्टये ।

वयः । न । वसतीः । उप ॥ ४ ॥

हे वरुण मे मम शुनःशेपस्य विमन्यवः क्रोधरहिता बुद्धयो वस्यइष्टये वसीयसोऽतिशयेन वसुमतो जीवनस्य प्राप्तये परा पतन्ति पराङ्मुखाः पुनरावृत्तिरहिताः प्रसरन्ति । हि शब्दोऽस्मिन्नर्थे सर्वजनप्रसिद्धिमाह । परापतने दृष्टान्तः—वयो न पक्षिणो यथा वसतीर्निवासस्थानानि उप सामीप्येन प्राप्नुवन्ति तद्वत् ।

पतन्ति पादादित्वान्निघाताभावः । वस्यइष्टये, वसुमच्छब्दात् 'विन्मतोर्लुक्' ( पा० ५ । ३ । ६५ ) इति मतुपो लुकि टिलोपे ईयसुनो यकारलोपश्छान्दसः । वसतीः 'शतुरनुमः' (पा० ६ । १ । १७३) इति ङीप उदात्तत्वम् ।

पञ्चमीमृचमाह—

मं०—कदा क्षत्रश्रियं नरमा वरुणं करामहे ।

मृळीकायोरुचक्षसम् ॥ ५ ॥

प०—कदा । क्षत्रऽश्रियम् । नरम् । आ । वरुणम् । करामहे ।

मृळीकाय । उरुऽचक्षसम् ॥ ५ ॥

मृळीकाय अस्मत्सुखाय वरुणं कदा कस्मिन् काले आ करामहे अस्मिन् कर्मण्यागतं करवाम । कीदृशं क्षत्रश्रियं बलसेविनम् । नरं नेतारम् । उरुचक्षसं बहूनां द्रष्टारम् ।

क्षत्रश्रियं, क्षत्राणि श्रयतीति क्षत्रश्रीः । क्विप् । 'वचि' (पा० ३।२। १७८) इत्यादिना क्विप् दीर्घश्च । कृदुत्तरपदप्रकृतिस्वरत्वम् । नरम् 'ऋदोरप्' (पा० ३ । ३ । ५७) इति अबन्त आद्युदात्तः । करामहे, करोतेर्व्यत्ययेन शप् । उरुचक्षसम्, 'चक्षेर्बहुलं शिच्च' (उ० ४ । २३२) इत्यसुन् । शिद्भावाद् ख्याञादेशाभावः ।

षष्ठीमृचमाह—

मं०—तदित्समानमाशाते वेनन्ता न प्र युच्छतः।
धृतव्रताय दाशुषे ॥ ६ ॥

प०—तत् । इत् । समानम् । आशाते इति । वेनन्ता । न । प्र । युच्छतः।
धृतऽव्रताय । दाशुषे ॥ ६ ॥

धृतव्रताय अनुष्ठितकर्मणे दाशुषे हविर्दत्तवते यजमानाय वेनन्तौ कामयमानौ मित्रावरुणाविति शेषः । तावुभौ समानं साधारणं तदित् अस्माभिर्दत्तं तदेव हविः आशाते अश्नुवाते । न प्र युच्छतः कदाचिदपि प्रमादं न कुरुतः ।

आशाते, अश्नोतेर्लिटि द्विर्भावहलादिशेषौ—'अत आदेः' (पा० ७ । ४ । ७०) इत्यात्वम् । 'अनित्यमागमशासनम्' इति वचनात् 'अश्नोतेश्च' (पा० ७ । ४ । ७२) इति नुडभावः । वेनन्ता, वेनतिः कान्तिकर्मा । 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इत्याकारः । प्र युच्छतः, 'युच्छ प्रमादे' । दाशुषे, 'दाशृ दाने' इत्यस्मात् 'दाश्वान् साह्वान्' (पा० ६ । १ । १२) इति क्वसुप्रत्ययो निपातितः । 'वसोः सम्प्रसारणम्' (पा० ६ । ४ । १३) इति सम्प्रसारणम् । 'शासिवसिघसीनां च' (पा० ८ । ३ । ६) इति षत्वम् ।

सप्तमीमृचमाह—

मं०—वेदा यो वीनां पदमन्तरिक्षेण पतताम् ।
वेद नावः समुद्रियः ॥ ७ ॥

प०—वेद । यः । वीनाम् । पदम् । अन्तरिक्षेण । पतताम् ।

वेद । नावः । समुद्रियः ॥७॥

अन्तरिक्षेण पततामाकाशमार्गेण गच्छतां वीनां पक्षिणां पदं यो वरुणो वेद । तथा समुद्रियः समुद्रेऽवस्थितो वरुणो नावो जले गच्छन्त्याः पदं वेद जानाति सोऽस्मान् बन्धनान्मोचयत्विति शेषः ।

वेद, 'विद ज्ञाने'। 'विदो लटो वा' (पा० ३ । ४ । ८३) इति तिपो णल् । लित्स्वरेणाद्युदात्तत्वम् । 'द्व्यचोऽतस्तिङः' (पा० ६।३।१३५) इति संहितायां दीर्घः । वीनां, 'नामन्यतरस्याम्' ( पा० ६ । १ । १७७ ) इति नाम उदात्तत्वम् । पततां, शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण धातुस्वरः । नावः, 'सावेकाचः' (पा० ६ । १ । १६८) इति षष्ठ्या उदात्तत्वम् । समुद्रियः, भवार्थे 'समुद्राभ्राद्घः'( पा० ४।४।११८ ) इति घप्रत्ययः ।

अष्टमीमृचमाह—

म०—वेद मासो धृतव्रतो द्वादश प्रजावतः ।

वेदा य उपजायते ॥८॥

प०—वेद । मासः । धृतऽव्रतः । द्वादश । प्रजाऽवतः ।

वेद । यः । उपऽजायते ॥८॥

धृतव्रतः स्वीकृतकर्मविशेषो यथोक्तमहिमोपेतो वरुणः प्रजावतः तदा तदोत्पद्यमानप्रजायुक्तान् द्वादश मासः चैत्रादीन् फाल्गुनान्तान् वेद जानाति यस्त्रयोदशोऽधिकमास उपजायते संवत्सरसमीपे स्वयमेव उत्पद्यते तमपि वेद । वाक्यशेषः पूर्ववत् ।

मासः, 'पद्दन्' ( पा० ६ । १ । ६३ ) इत्यादिना मासशब्दस्य मासित्यादेशः । 'ऊडिदम्' ( पा० ६ । १ । १७१ ) इत्यादिना शस

उदात्तत्वम् । द्वादश, द्वौ च दश चेति द्वन्द्वः—'द्व्यष्टनः संख्याया' (पा० ६ । ३ । ४७) इत्यात्वम् । 'संख्या' (पा० ६ । २ । ३५) इति सूत्रे पूर्वपदप्रकृतिस्वरत्वम् । प्रजावतः, 'जनी प्रादुर्भावे' प्रपूर्वात् 'जनसनखनक्रमगमो विट्' ( पा० ३ । २ । ६७ ) इति विट्प्रत्ययः । 'विड्वनो' (पा० ६ । ४ । ४१ ) इत्यात्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । प्रजाः सन्तीति 'तदस्यास्त्यस्मिन्निति मतुप्'। (पा० ५ । २ । ९४) 'मादुपधाया' ( पा० ८ । २ । ९ ) इति मतुपो वत्वम् । उपजायते, जनेः कर्मकर्तरि लट् । 'कर्मवद्भावादात्मनेपदं यक्' ( पा० ३।१।८७ ) 'जनादीनामुपदेश एवात्वं वक्तव्यम्' ( वा० पा० ६।१।१९५ ) इति वचनात् 'अचः कर्तृयकि' (पा० ६ । १ । १९५) इत्याद्युदात्तत्वम् । 'तिङि चोदात्तवति' ( पा० ८ । १ । ७१ ) इति उपसर्गस्य निघातः । न च 'तिङ्ङतिङः' (पा० ८ । १ । ६७) इति निघातः । 'यद्वृत्तान्नित्यम्' ( पा० ८ । १ । ६६ ) इति प्रतिषेधात् ।

नवमीमृचमाह—

**म०—वेद वातस्य वर्तनिमुरोर्ऋष्वस्य बृहतः ।**
**वेदा ये अध्यासते ॥९॥**

**प०—वेद । वातस्य । वर्तनिम् । उरोः । ऋष्वस्य । बृहतः ।**
**वेद । ये । अधिऽआसते ।**

उरोर्विस्तीर्णस्य ऋष्वस्य दर्शनीयस्य बृहतो गुणैर्अधिकस्य वातस्य वायोर्वर्तनिं मार्गं वेद वरुणो जानाति । ये देवा अध्यासते उपरि तिष्ठन्ति तानपि वेद जानाति ।

वतस्य, 'असिहसि' ( उ० ३ । ८६ ) इत्यादिना तन्प्रत्ययान्तो वातशब्दो नित्त्वादाद्युदात्तः । वर्तनिम्, वर्तते अनेनेति वर्तनिः स्तोत्र इति स्तोत्रवाचकस्य वर्तनिशब्दस्य अन्तोदात्तत्वसिद्ध्यर्थमुञ्छादि

पाठादस्य प्रत्ययस्वरेण मध्योदात्तत्वे प्राप्त व्यत्ययेनान्तोदात्तत्वम्। बृहतः, 'बृहन्महतोरुपसंख्यानम्' (वा० पा० ६।१।१७३) इति ङस उदात्तत्वम्। अध्यासते, लसार्वधातुकानुदात्तत्वे सति धातुस्वरः।

दशमीमृचमाह—

म०—नि षसाद धृतव्रतो वरुणः पस्त्या३ स्वा।
साम्राज्याय सुक्रतुः ॥ १० ॥

प०—नि। ससाद। धृतऽव्रतः। वरुणः। पस्त्यासु। आ।
साम्ऽराज्याय। सुऽक्रतुः ॥ १० ॥

धृतव्रतः पूर्वोक्तो वरुणः पस्त्यासु दैवीषु प्रजासु आ नि षसाद आगत्य निषण्णवान्। किमर्थं प्रजानां साम्राज्यसिद्ध्यर्थम्। सुक्रतुः शोभनकर्मा।

नि षसाद, 'सदेरप्रतेः' (पा० ८। ३। ६६) इति षत्वम्। साम्राज्याय, सम्राजो भावः साम्राज्यम्। 'गुणवचनब्राह्मणादिभ्यः' (पा० ५। १। १२४) इति ष्यञ्। 'ञ्नित्यादिर्नित्यम्'। (पा० ६। १। १९७) इत्याद्युदात्तत्वम्। सुक्रतुः, 'क्रत्वादयश्च' (पा० ६। २। ११८) इत्युत्तरपदाद्युदात्तत्वम्।

एकादशीमृचमाह—

म०—अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति।
कृतानि या च कर्त्वा ॥ ११ ॥

प०—अतः। विश्वानि। अद्भुता। चिकित्वान्। अभि। पश्यति।
कृतानि। या। च। कर्त्वा ॥ ११ ॥

अतोऽस्माद्वरुणाद्विश्वान्यद्भुता सर्वाण्याश्चर्याणि चि
त्वान् प्रज्ञावानभि पश्यति सर्वतोऽवलोकयति। या कृतानि या
श्चर्याणि पूर्वं वरुणेन सम्पादितानि चकारादन्यानि यान्याश्च
कर्त्वा, इतः परं कर्तव्यानि, तानि सर्वाण्यभिपश्यतीति पूर्वेणान्व

अद्भुता 'शेश्छन्दसि बहुलम्' (पा० ६। १। ७०) इति शेर्लो
प्रत्ययलक्षणेन 'नपुंसकस्य झलचः' (पा० ७। १। ७२) इति नु
नलोपः। चिकित्वान्, 'कित ज्ञाने' 'लिटः क्वसुः' (पा० ३। २। १
अभ्यासहलादिशेषचुत्वानि। 'वस्वेकाजाद्घसाम्' (पा० ७। २।
इति नियमादिडभावः। रुत्वानुनासिकावुक्तौ संहितायाम्। पश्
'पाघ्रा' (पा० ७। ३। ७८) इत्यादिना दृशेः पश्यादेशः। कर्त्वा, 'कृत
तवैकेन्केन्यत्वनः' (पा० ३। ४। १४) इति करोतेस्त्वन्। नित्
द्युदात्तत्वम्। पूर्ववत् शेर्लोपः।

द्वादशीमृचमाह—

**म०—स नो विश्वाहा सुक्रतुरादित्यः सुपथा कर**

**प्र ण आयूंषि तारिषत् ॥ १२ ॥**

प०—सः। नः। विश्वाहा। सुऽक्रतुः। आदित्यः। सुऽपथा। क

प्र। नः। आयूंषि। तारिषत् ॥१२॥

सुक्रतुः शोभनप्रज्ञः स आदित्यो वरुणः वि
सर्वेष्वहःसु नोऽस्मान् सुपथा शोभनमार्गेण सहितान् करत् क
किं च नोऽस्माकमायूंषि प्रतारिषत् प्रवर्धयतु।

सुपथा, 'स्वती पूजायाम्' (पा० २। २। १८) इति समा
पूजनात्' (पा० ५। ४। ६९) इति समासान्तप्रतिषेधः। अव्ययपू
प्रकृतिस्वरे प्राप्ते 'परादिश्छन्दसि बहुलम्' (पा० ६। २।

इति उत्तरपदाद्युदात्तत्वम् । (यद्वा तृतीयाया आलादेशः अव्ययपूर्वपदप्रकृतिस्वरत्वं लित्स्वरेण बाध्यते ।) 'क्त्वादयश्च' (पा० ६ । २ । ११८) इत्येतन्न भवति, अबहुव्रीहित्वात् । बहुव्रीहौ हि तद्विधीयते । 'आद्युदात्तं द्व्यच्छन्दसि' (पा० ६।२।११९) इत्येतदपि न भवति । पथिन्शब्दस्यान्तोदात्तत्वात् । करत्, करोतेर्लेटि व्यत्ययेन शप् । शपो लुकि 'लेटोऽडाटौ' (पा० ३ । ४ । ९४) इत्यडागमः । 'इतश्च लोपः' (पा० ३ । ४ । ९७) इतीकारलोपः । यद्वा । छान्दसे लुङि 'कृमृदृरुहिभ्यः' (पा० ३ । १ । ५९) इति च्लेरङ् । 'ऋदृशोऽङि गुणः' (पा० ७ । ४ । १६) इति गुणः । 'बहुलं छन्दस्यमाङ्योगेऽपि' । (पा० ६ । ४ । ७५) इत्यडभावः । प्र णः, 'उपसर्गाद्बहुलम्' (पा० ८ । ४ । २८) इति नसो णत्वम् । तारिषत्, तारयतेर्लेट्यडागमः । 'सिब्बहुलं लेटि' (पा० ३ । १ । ३४) इति सिप् । 'आदेशप्रत्यययोः' (पा० ८ । ३ । ५९) इति षत्वम् ।

त्रयोदशीमृचमाह—

म०—बिभ्रद्द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम् ।
परिस्पशो नि षेदिरे ॥ १३ ॥

प०—बिभ्रत् । द्रापिम् । हिरण्ययम् । वरुणः । वस्त । निःऽनिजम् ।
परि । स्पशः । नि । सेदिरे ॥ १३ ॥

हिरण्ययं सुवर्णमयं द्रापिं कवचं बिभ्रद् धारयन् वरुणो निर्णिजं पुष्टं स्वशरीरं वस्त आच्छादयति । स्पशो हिरण्यस्पर्शिनो रश्मयः परि नि षेदिरे सर्वतो निषण्णाः । ज्ञापकाः स्पशः इति माधवः ॥

बिभ्रत्, बिभर्तेः शतरि 'नाभ्यस्ताच्छतुः' (पा० ७ । १ । ७८) इति नुमभावः । 'अभ्यस्तानामादिः' (पा० ६ । १ । १८९) इति आद्यु-

दात्तत्वम् । द्रापिं, 'द्रा कुत्सायां गतौ' । द्रपयति इषून् कुत्सितां प्रापयति इति द्रापिः कवचम् । 'अर्तिह्री' (पा० ७ । ३ । ३६) इत्यादि पुगागमः । औणादिके इप्रत्यये णिलोपः । हिरण्ययम्, 'ऋत्व्यवास्त्व्य स्त्वमाध्वीहिरण्ययानि छन्दसि' ( पा० ६ । ४ । १७५ ) इति हिरण्य शब्दाद्विकारार्थे विहितस्य मयटो मशब्दलोपो निपातितः । वस्त, 'वस आच्छादने' । लङि अदादित्वात् शपो लुक् पूर्ववदडभावः । निर्णिजः 'णिजिर् शौचपोषणयोः' । स्पशः, 'स्पश बाधनस्पर्शनयोः' । 'क्विप् (पा० ३ । २ । ७६) इति क्विप् । निषेदिरे, 'षद्लृ विशरणगत्यवसादने' अस्माद् गत्यर्थात् कर्मणि लिटि एत्वाभ्यासलोपौ । 'सदिरप्रतेः' (पा० ८ । ३ । ६६) इति षत्वम् ।

चतुर्दशीमृचमाह—

म०—न यं दिप्सन्ति दिप्सवो न द्रुह्वाणो जनानाम्

न देवमभिमातयः ॥ १४ ॥

प०—न । यम् । दिप्सन्ति । दिप्सवः । न । द्रुह्वाणः । जनानाम् ।

न । देवम् । अभिऽमातयः ॥ १४ ॥

दिप्सवो हिंसितुमिच्छन्तो वैरिणः यं वरुणं न दिप्सन्ति भीताः सन्तो हिंसितुमिच्छां परित्यजन्ति । जनानां प्राणिनां द्रुह्वाणः द्रोग्धारोऽपि यं वरुणं प्रति न द्रुह्यन्ति । अभिमातयः पाप्मानः 'पाप्मा वा अभिमातिः' (तै० सं० २ । १ । ३ । ५) इति श्रुत्यन्तरात् । देवं वरुणं न स्पृशन्ति ।

दिप्सन्ति, 'दम्भु दम्भे' अस्मात् सनि 'सनीवन्तर्ध' (पा० ७ । २ । ४९) इत्यादिना इडभावः । 'हलन्ताच्च' (पा० १ । २ । १०) इत्यत्र हल्ग्रहणस्य जातिवाचित्वात् सनः कित्वात् 'दम्भ इच्च' (पा० ७ । ४ । ५६) इति दकारात् परस्याकारस्येकारः । 'अनिदिताम्' (पा० ६ । ४ । २४) इति नलोपः । 'भषभावाभावश्छान्दसः' (पा० ८।२।३

'अत्र लोपोऽभ्यासस्य' (पा० ७ । ४ । ५८) इत्यभ्यासलोपः । शपः पित्त्वादनुदात्तम् । तिङश्च लसार्वधातुकस्वरेण सनो नित्त्वान्नित्स्वरेणाद्युदात्तत्वम् । यदृवृत्तयोगादनिघातः । दिप्सवः, सन्नन्ताद्दंभेः 'सनाशंसभिक्ष उः' (पा० ३ । २ । १६८) इत्युप्रत्ययः । प्रत्ययस्वरः । द्रुह्वाणः, 'द्रुह जिघांसायाम्' । 'अन्येभ्योऽपि दृश्यन्ते' (पा० ३ । २ । ७५) इति क्वनिप् । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम् ।

पञ्चदशीमृचमाह—

म०—उत यो मानुषेष्वा यशश्चक्रे असाम्या ।

अस्माकमुदरेष्वा ॥ १५ ॥

प०—उत । यः । मानुषेषु । आ । यशः । चक्रे । असामि । आ ।

अस्माकम् । उदरेषु । आ ॥ १५ ॥

उत अपि च यो वरुणो मानुषेषु यशोऽन्नम् आ चक्रे सर्वतः कृतवान् । स वरुणः कुर्वन्नपि आ सर्वतः असामि सम्पूर्णं चक्रे न तु न्यूनं कृतवान् । विशेषतोऽस्माकमुदरेषु आ सर्वतश्चक्रे ।

मानुषेषु, 'मनोर्जातावञ्यतौ षुक् च' (पा० ४।१।१६१) इत्यञ् । 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तम् । चक्रे, प्रत्ययस्वरः । असामि, 'अव्यये नञ्कुनिपातानामिति वक्तव्यम्' (वा० पा० ६।२।२) इत्यव्ययपूर्वपदप्रकृतिस्वरत्वम् । यशः, 'अशेर्युट् च' (उ० ४।१६७) इत्यसुन् । उदरेषु, 'उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च' (उ० ५।१९) इति अल् । लित्स्वरः । 'गतिकारक पपदात्' (पा० ६ । २ । १३९) इत्युत्तरपदप्रकृतिस्वरत्वम् ।

षोडशीमृचमाह—

म०—परा मे यन्ति धीतयो गावो न गव्यूतीरनु।
इच्छन्तीरुरुचक्षसम् ॥१६॥

प०—परा । मे । यन्ति । धीतयः । गावः । न । गव्यूतीः । अनु ।
इच्छन्तीः । उरुऽचक्षसम् ॥१६॥

उरुचक्षसं बहुभिर्द्रष्टव्यं वरुणं इच्छन्तीर्मे धीतयः शुनःशेपस्य बुद्धयः, परा यन्ति पराङ्मुखा निवृत्तिरहिता गच्छन्ति। तत्र दृष्टान्तः—गवो न यथा गावः गव्यूतीरनु गोष्ठानि अनुलक्ष्य गच्छन्ति तद्वत्।

गव्यूतीः, गावोऽत्र यूयन्ते इत्यधिकरणे क्तिन्। 'गोर्यूतौ छन्दसि' (वा० पा० ६।१।७९) इति अवादेशः। दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम्। यद्वा। यूतिर्यवनम्-गवां यवनमत्रेति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् (पा० ६ । २ । ४२)। इच्छन्तीः, 'इषु इच्छायाम्'। लटः शतृ। 'तुदादिभ्यः शः' (पा० ३ । १ । ७७)। 'इषुगमियमां छः' (पा० ७ । ३ । ७७) इति छत्वम्। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वरः शिष्यते।

सप्तदशीमृचमाह—

म०—सं नु वोचावहै पुनर्यतो मे मध्वाभृतम्।
होतेव क्षदसे प्रियम् ॥१७॥

प०—सम् । नु । वोचावहै । पुनः । यतः । मे । मधु । आऽभृतम्।
होताऽइव । क्षदसे । प्रियम् ॥१७॥

यतो यस्मात् कारणात् मे मज्जीवनार्थं मधुरं हविः आभृतं अञ्ञःसवाख्ये कर्मणि सम्पादितम् अतः कारणात् होतेव होमकर्तेव त्वमपि प्रियं हविः त्वदसे अश्नासि। पुनर्हविःस्वीकारादूर्ध्वं तृप्तस्त्वं जीवन्नहं च नु अवश्यं संवोचावहै सम्भूय प्रियवार्तां करवावहै।

वोचावहै, लोडर्थे छान्दसे लुङि 'ब्रुवो वचिः' ( पा० २। ४।५३)। 'अस्यतिवक्तिख्यातिभ्योऽङ्' (पा० ३।१।५२) इति च्लेरङादेशः। 'वच उम्' (पा० ७।४।२०) इत्युमागमे गुणः। व्यत्ययेन टेरैत्वम्। यद्वा। लोट एव लुङादेशः। स्थानिवद्भावादैत्वम्। आभृतं 'हृग्रहोर्भः' ( वा० प० ८।२।३२ )। 'गतिरनन्तरः' ( पा० ६। २।४९ ) इति गते प्रकृतिस्वरत्वम्।

अष्टादशीमृचमाह—

मं०—दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि।

एता जुषत मे गिरः ॥१८॥

प०—दर्शम्। नु। विश्वऽदर्शतम्। दर्शम्। रथम्। अधि। क्षमि।

एता। जुषत। मे। गिरः ॥१८॥

विश्वदर्शतं सर्वैर्दर्शनीयमस्मदनुग्रहार्थमत्राविर्भूतं वरुणं दर्शं नु अहं दृष्टवान् खलु। क्षमि क्षमायां भूमौ रथं वरुणसम्बन्धिनं अधि दर्शम् आधिक्येन दृष्टवानस्मि। एता उच्यमाना मे गिरो मदीयाः स्तुतीः जुषत वरुणः सेवितवान्।

दर्शम्, दृशेः 'इरितो वा' (पा० ३।१।५७) इति च्लेरङादेशः। 'ऋदृशोऽङि गुणः' ( पा० ७।४।१६ ) इति गुणः। विश्वदर्शतम्, दृशेः 'भृमृदृशि' ( उ० ३।१०९ ) इत्यादिना अतच्प्रत्ययान्तो दर्शत-शब्दः। मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् ( वा० पा० ६।२।१०६)

यद्वा । विश्वं दर्शनायमस्येति बहुव्रीहिः । बहुव्रीहौ । 'विश्वं संज्ञायाम्' (पा० ३ । २ । १०६) इति पूर्वपदान्तोदात्तत्वम् । क्षमि, 'आतो धातोः' (पा० ६ । ४ । १४० ) इत्यत्र आत इति योगविभागादाकारलोपः ।

'वरुणप्रघासेषु इमं मे वरुणेति वारुणस्य हविषोऽनुवाक्या । पञ्चम्यां पौर्णमास्यामिति खण्डे सूत्रितम्—इमं मे वरुण श्रुधि, तत्त्वा यामि ब्रह्मणा वन्दमानः' ( आश्व० २ । १७ ) इति ।

तामेतां सूक्ते एकोनविंशीमृचमाह—

**म०—इमं मे वरुण श्रुधी हवमद्या च मृळय ।**

**त्वामवस्युरा चके ॥१९॥**

प०—इमम् । मे । वरुण । श्रुधि । हवम् । अद्य । च । मृळय ।

त्वाम् । अवस्युः । आ । चके ॥१९॥

हे वरुण मे मदीयमिमं हवमाह्वानं श्रुधि शृणु । किञ्च अद्यास्मिन् दिने मृळय अस्मान् सुखय । अवस्युः रक्षणेच्छुरहं त्वां वरुणम् आभिमुख्येन चके शब्दयामि स्तौमीत्यर्थः ।

श्रुधि, 'श्रु श्रवणे' लोटो हिः । 'श्रुशृणुपृकृवृभ्यश्छन्दसि' ( पा० ६ । ४ । १०२ ) इति हेर्धिरादेशः । 'बहुलं छन्दसि' ( पा० २ । ४ । ७३) इति विकरणस्य लुक् । 'अन्येषामपि दृश्यते' ( पा० ६ । ३ । १३७) इति संहितायां दीर्घः । अवस्युः, अवस्शब्दात् 'सुप आत्मनः क्यच्' ( पा० ३ । १ । ८ ) । 'क्याच्छन्दसि' (पा० ३ । २ । १७० ) इत्युप्रत्ययः । आचके, 'कै गै शब्दे' । अस्माल्लिटि 'आदेचः' (पा० ६ । १ । ४५) इत्यात्वम् । द्विर्भावचुत्वे 'आतो लोप इटि च' ( पा० ६ । ४ । ६४ ) इत्याकारलोपः । 'तिङ्ङतिङः' ( पा० ८ । १ । २८ ) इति निघातः ।

म०—त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि ।
स यामनि प्रति श्रुधि ॥२०॥

प०—त्वम् । विश्वस्य । मेधिर । दिवः । च । ग्मः । च । राजसि ।
सः । यामनि । प्रति । श्रुधि ॥२०॥

हे मेधिर मेधाविन् वरुण त्वं दिवश्च द्युलोकस्यापि ग्मश्च भूलोकस्यापि एवमात्मकस्य विश्वस्य सर्वस्य जगतो मध्ये राजसि दीप्यसे। स तादृशस्त्वं यामनि क्षेमप्रापणे अस्मदीये प्रति श्रुधि प्रतिश्रवणमाज्ञापनं कुरु रक्षिष्यामीति प्रत्युत्तरं देहीत्यर्थः ।

दिवः, 'ऊडिदम्' (पा० ६ । १ । १७१) इत्यादिना षष्ठ्या उदात्तत्वम् । ग्मः, ग्मेत्येतद्भूनामसु पठितम् 'आतो धातोः' ( पा० ६ । ४ । १४० ) इत्यत्र आत इति योगविभागात् 'आतोऽनापः' ( वा० पा० ६।४। ६४ ) इति प्रतिषेधेऽपि व्यत्ययेनाकारलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । यामनि, 'या प्रापणे' 'आतो मनिन्क्वनिब्वनिपश्च' (पा० ३ । २ । ७४) इति मनिन् । नित्त्वादाद्युदात्तत्वम् । श्रुधि, उक्तम्[1]।

एकविंशीमृचमाह

म०—उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत ।
अवाधमानि जीवसे ॥२१॥

---

१ 'आतो लोपः' इति पाठो गुर्वनधीतभाष्यैरिव राजारामशास्त्रिभिः मैक्समूलरपुस्तकशोधकैश्च प्रमादत एव स्थापितः ।

प०—उत् । उत्ऽतमम् । मुमुग्धि । नः । विः । पाशम् । मध्यमम् । चृत ।
अव । अधमानि । जीवसे ॥२१॥

नोऽस्माकम् उत्तमं शिरोगतं पाशम् उन्मुमुग्धि उत्कृष्य मोचय। मध्यमम् उदरगतं पाशं वि चृत वियुज्य नाशय। जीवसे जीवितुम् अधमानि मदीयान् पादगतान् पाशान् अव चृत अवकृष्य नाशय।

उत्तमम्, उञ्छादिषु पाठादन्तोदात्तत्वम्। मुमुग्धि, 'मुच्लृ मोक्षणे'। 'बहुलं छन्दसि' (पा० २।४।७६) इति विकरणस्य श्लुः। द्विर्भावः। हलादिशेषः 'हुझल्भ्यो हेर्धिः' (पा० ६।४।१०१) इति हेर्धिरादेशः। 'तिङ्ङतिङः' (पा० ८।१।२८) इति निघातः। चृत, 'चृती हिंसाग्रन्थनयोः'। लोटो हिः 'तुदादिभ्यः शः' (पा० ३।१।७७)। 'अतो हेः' (पा० ६।४।१०५) इति हेर्लुक्। जीवसे, 'जीव प्राणधारणे'। 'तुमर्थे सेसेन्' (पा० ३।४।९) इति असेन्प्रत्ययः। प्रत्ययस्वरः।

# अथ द्वात्रिंशं सूक्तम्।

## संग्रहे पञ्चमं सूक्तम्।



'इन्द्रस्य नु वीर्य्याणीति पञ्चदशर्चं द्वितीयं सूक्तम्। आङ्गिरसो हिरण्यस्तूप ऋषिः। त्रिष्टुप्छन्दः। इन्द्रो देवता। 'इन्द्रस्य पञ्चोना' (सर्वानु० २।१।३२) इत्यनुक्रमणिका। अग्निष्टोमे माध्यन्दिने सवने निष्केवल्यशस्त्रे इन्द्रस्य नु वीर्य्याणीति निविद्धानीयं सूक्तम्। निष्केवल्यस्येति खण्डे सूत्रितम्—'इन्द्रस्य नु वीर्य्याणीत्येतस्मिन्नैन्द्रीं निविदं दध्याद्' (आश्व० ५।१५) इति। विषुवत्यपि तस्मिन् शस्त्रे एतद्विनियुक्तम्। 'विषुवान् (दिवाकीर्त्य) इति खण्डे सूत्रितम्—'इन्द्रस्य नु वीर्य्याणीत्येतस्मिन्नैन्द्रीं निविदं शस्त्वा' (आश्व० ८।६) इति। महाव्रते निष्केवल्येऽपि एतदेव विनियुक्तम्। राथन्तरो दक्षिणः पक्ष इति खण्डे 'चतस्रः सतीः षड् बृहतीः करोतीन्द्रस्य नु वीर्याणि प्र वोचम्' (ऐ० आ० ५।२।२) इति।

तत्र प्रथमामृचमाह—

मं०—इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार
प्रथमानि वज्री। अहन्नहिमन्वपस्ततर्द
प्र वक्षणा अभिनत् पर्वतानाम् ॥ १ ॥

पा०—इन्द्रस्य। नु। वीर्याणि। प्र। वोचम्। यानि। चकार।
प्रथमानि। वज्री। अहन्। अहिम्। अनु। अपः। ततर्द।
प्र। वक्षणाः। अभिनत्। पर्वतानाम् ॥ १ ॥

वज्री वज्रयुक्तः इन्द्रः प्रथमानि पूर्वसिद्धानि मुख्यानि वा यानि वीर्य्याणि पराक्रमयुक्तानि कर्माणि चकार तस्येन्द्रस्य तानि वीर्याणि नु क्षिप्रं प्रब्रवीमि । कानि वीर्याणि इति तदुच्यते अहिं मेघम् अहन् हतवान् तदेतदेकं वीर्यम् । अनु पश्चादपो जलानि ततर्द हिंसतवान् भूमौ पातितवानित्यर्थः । इदं द्वितीयं वीर्य्यम् । पर्वतानां सम्बन्धिनीर्वक्षणाः प्रवहणशीला नदीः प्राभिनत् भिन्नवान् कूलद्वयकर्षणेन प्रवाहितवानित्यर्थः । इदं तृतीयं वीर्य्यम् । एवमुत्तरत्रापि द्रष्टव्यम् ।

वीर्याणि, 'शूर वीर विक्रान्तौ' । ण्यन्तात् 'अचो यत्' (पा० ३।१।९७) इति यत् 'णेरनिटि' (पा० ६ । ४ । ५१) इति णिलोपः । 'तित्स्वरितम्' (पा० ६ १ । १८५ ) इति स्वरितत्वम् । 'यतोऽनावः' ( पा० ६ । १ । २१३ ) इत्याद्युदात्तत्वं न भवति । आद्युदात्तत्वे हि सुशब्देन बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' (पा० ६ । २ । ११९ ) इत्यनेनैवोत्तरपदाद्युदात्तत्वस्य सिद्धत्वात् 'वीरवीर्यौ च' ( पा० ६ । २ । १२० ) इति पुनस्तद्विधानमनर्थकं स्यात् । अतोऽवगम्यते 'यतोऽनावः' इत्याद्युदात्तत्वं वीरशब्दे न प्रवर्तते इति । अतः परिशेषात् 'तित्स्वरितम्' इति प्रत्ययस्य स्वरितत्वमेव । वोचम्, 'अस्यतिवक्तिख्यातिभ्योऽङ्' (पा० ३ । १ । ५२ ) इति च्लेरङादेशः । 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा० ६ । ४ । ७५ ) इत्यडभावः । चकार, णलि लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम् । यद्वृत्तयोगादनिघातः । अहन्, लङि, 'इतश्च' ( पा० ३ । ४ । १०० ) इतीकारलोपे 'हल्ङ्याब्भ्य०' ( पा० ६ । १ । ६८ ) इति तकारलोपः अहिम्, आङ्पूर्वाद्धन्तेः 'आङि श्रिहनिभ्यां ह्रस्वश्च' (उ० ४ । १३७ इति ( ण ) प्रत्ययः । आङो ह्रस्वत्वं च । चशब्देन 'वेञो डित्' । समाने ख्यश्चोदात्तः' ( उ० ४ । १३६ ) इति डित्वं पूर्वपदोदात्तत्वं चानुकृष्यते । ततष्टिलोपे पूर्वपदस्योदात्तत्वम् । ततर्द, 'उतदिर् हिंसानादरयोः' । 'तिङ्ङतिङः' ( पा० ८ । १ । २८ ) इति निघातः । वक्षणाः, 'वक्ष रोषे' । 'क्रुधमण्डार्थेभ्यश्च' (पा० ३ । २ । १५१) इति युच् । चित्स्वरं बाधित्वा व्यत्ययेन प्रत्ययस्वरः ।

द्वितीयामृचमाह—

म—अह॒न्नहिं॒ पर्व॑ते शिश्रिया॒णं त्वष्टा॑स्मै॒ वज्रं॑

स्व॒र्यं॑ ततक्ष। वा॒श्रा इ॑व धे॒नवः॒ स्यन्द॑माना॒

अञ्जः॑ समु॒द्रमव॑ जग्मु॒राप॑ः ॥२॥

प०—अह॑न्। अहि॑म्। पर्व॑ते। शि॒श्रि॒या॒णम्। त्वष्टा॑ अ॒स्मै॒। वज्र॑म्।

स्व॒र्य॑म्। त॒त॒क्ष॒। वा॒श्राः॑ऽइव। धे॒नवः॑। स्यन्द॑मानाः।

अञ्जः॑। स॒मु॒द्रम्। अव॑। ज॒ग्मुः॒। आपः॑ ॥२॥

पर्वते शिश्रियाणं आश्रितम् अहिं मेघम् अहन् हतवान्, अस्मा इन्द्राय, स्वर्यं सुष्ठु प्रेरणीयं यद्वा शब्दनीयं स्तुत्यं, त्वष्टा विश्वकर्मा वज्रं ततक्ष तनूकृतवान्, तेन वज्रेण मेघे भिन्ने सति स्यन्दमानाः प्रस्रवणयुक्ता आपः समुद्रमञ्जः सम्यगवजग्मुः प्राप्ताः। तत्र दृष्टान्तः— वाश्रा वत्सान् प्रति हम्भारवोपेता धेनव इव। यथा धेनवः सहसा वत्सगृहे गच्छन्ति तद्वत्।

शिश्रियाणम्, 'श्रिञ् सेवायाम्' लिटः कानच्। द्विर्भावहलादिशेषेयङादेशाः। 'चितः' (पा० ६।१।१६३) इत्यन्तोदात्तत्वम्। स्वर्यम्, 'ऋ गतौ'। अस्मात् सुपूर्वात् 'ऋहलोर्ण्यत्' (पा० ३।१।१२४) इति ण्यत्। 'संज्ञापूर्वको विधिरनित्यः' इति वृद्ध्यभावः। यद्वा। 'स्वृ शब्दोपतापयोः' इत्यस्मात् ण्यति पूर्ववद्वृद्ध्यभावः। 'तित्स्वरितम्' (पा० ६।१।१८५) इति स्वरितत्वम्। वाश्यन्त इति वाश्राः। 'वाश्ट शब्दे'। 'स्फायितञ्चि' इत्यादिना (उ० २।१७०) रक्। जग्मुः, उसि 'गमहन' (पा० ६।४।९८) इत्यादिना उपधालोपः।

तृतीयामृचमाह—

मं०—वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिब-त्सुतस्य। आ सायकं मघवादत्त वज्रम-हन्नेनं प्रथमजामहीनाम् ॥३॥

प०—वृषऽयमाणः। अवृणीत। सोमम्। त्रिऽकद्रुकेषु। अपिबत्। सुतस्य। आ। सायकम्। मघऽवा। अदत्त। वज्रम्। अहन्। एनम्। प्रथमऽजाम्। अहीनाम् ॥३॥

वृषायमाणः वृष इवाचरन्निन्द्रः सोममवृणीत वृतवान्। त्रिकद्रुकेषु ज्योतिर्गौरायुरित्येतन्नामकास्त्रयो यागास्त्रिकद्रुका उच्यन्ते। तेषु सुतस्याभिषुतस्य सोमस्यांशमपिबत् पीतवान्। मघवा धनवानिन्द्रः सायकं बन्धकं वज्रम् आदत्त स्वीकृतवान्। तेन च वज्रेणाहीनां मेघानां मध्ये प्रथमजां प्रथमोत्पन्नं मेघम् अहन् हतवान्।

वृषायमाणः, वृष इवाचरन् 'कर्तुः क्यङ् सलोपश्च' (पा० ३। १। ११) इति क्यङ्। 'अकृत्सार्वधातुकयोः' (पा० ७। ४। २५) इति दीर्घः। अदुपदेशाद्धातोरन्तोदात्तत्वे क्यङन्ताद्धातोरन्तोदात्तत्वम्। सायकम्, 'षिञ् बन्धने'। सिनोतीति सायकः। ण्वुल्। लित्स्वरेणाद्युदात्तत्वम्। प्रथमजाम् प्रथमं जायत इति प्रथमजाः। 'जनसनखनक्रमगमो विट्' ( पा० ३। २। ६७)। 'विड्वनोः' (पा० ६। ४। ४१) इत्यात्वम्।

चतुर्थीमृचमाह—

मं०—यदिन्द्राहन्प्रथमजामहीनामान्मायिनाममिनाः प्रोत मायाः। आत्सूर्यं जनयन् द्यामुषासं तादीत्ना शत्रुं न किला विवित्से ॥४॥

प०—यत् । इन्द्र । अहन् । प्रथमऽजाम् । अहीनाम् । आत् । मायिनाम् । अमिनाः । प्र । उत । मायाः । आत् । सूर्यम् । जनयन् । द्याम् । उषसम् । तादीत्ना । शत्रुम् । न । किल । विवित्से ॥४॥

उत अपि च हे इन्द्र यत् यदा अहीनां मेघानां मध्ये प्रथमजां प्रथमोत्पन्नं मेघम् अहन् हतवानसि । आत् तदनन्तरं मायिनां मायोपेतानामसुराणां संबन्धिनीर्मायाः प्रामिनाः । प्रकर्षेण नाशितवानसि। अनन्तरं सूर्यमुषसम् उषःकालं द्यामाकाशं च जनयन् उत्पादयन् आवरकमेघनिवारणेन प्रकाशयन् वर्तसे । तादीत्ना तदानीं आवरकान्धकाराभावाच्छत्रुं घातकं वैरिणं न विवित्से किल त्वं न लब्धवान् खलु ।

अहन्, हन्तेर्लङि 'हल्ङ्याब्भ्यः' (पा० ६ । १ । ६७) इति सिलोपः । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । मायिनाम्, मायाशब्दस्य व्रीह्यादिषु पाठात् 'व्रीह्यादिभ्यश्च' (पा० ५ । २ । ११६) इति मत्वर्थीय इनिः । अमिनाः, 'मीञ् हिंसायां' क्रैयादिकः । 'मीनातेर्निगमे' (पा० ७ । ३ । ८१) इति ह्रस्वत्वम् । तादीत्ना, तदानीमित्यस्य पृषोदरादित्वाद्वर्णविपर्ययः । किल, 'निपातस्य च' (पा० ६ । ३ । १३६) इति दीर्घत्वम् । विवित्से, 'विद्लृ लाभे' क्रादिनियमात् प्राप्त इट् व्यत्ययेन न भवति ।

पञ्चमीमृचमाह—

म०—अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन । स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक् पृथिव्याः ॥ ५ ॥

प०—अहन् । वृत्रम् । वृत्रऽतरम् । विऽअंसम् । इन्द्रः । वज्रेण।

महता । वधेन । स्कन्धांसिऽइव । कुलिशेन । विऽवृक्णा।

अहिः । शयते । उपऽपृक् । पृथिव्याः ॥५॥

अयमिन्द्रो वज्रेण सम्पादितो यो महान् वधः तेन वज्रेण वृत्रतरम् अतिशयेन लोकानामावरकमन्धकाररूपम् । यद्वा वृत्रैरावरणैः सर्वान् शत्रून् तरति तम् । वृत्रमित्येतन्नामकमसुरं व्यंसं विगतांसं छिन्नबाहुर्यथा भवति तथा अहन् हतवान् । अंसच्छेदे दृष्टान्तः, कुलिशेन कुठारेण विवृक्णा विशेषतः छिन्नानि स्कन्धांसीव, यथा वृक्षस्कन्धाश्छिन्ना भवन्ति तद्वत् । तथा सति अहिर्वृत्रः पृथिव्या उपरि उपपृक् सामीप्येन सम्पृक्तः शयते शयनं करोति, छिन्नकाष्ठवद्भूमौ पततीत्यर्थः ।

वृत्रतरम, 'वृतु वर्तने' 'स्फायितञ्चि' इत्यादिना ( उ० १ । १३ ) भावेरक्प्रत्ययान्तो वृत्रशब्दः । वृत्रेणावरणेन सर्वं तरतीति वृत्रतरः । तरतेः पचाद्यच् । 'परादिश्छन्दसि बहुलम्' ( पा० ६ । २ । १९९ ) इत्युत्तरपदाद्युदात्तत्वम् । तरपि तु व्यत्ययेन । व्यंसम, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे 'उदात्तस्वरितयोर्यणः' (पा० ८ । २ । ४) इति स्वरितत्वम् । वधेन, 'हनश्च वधः' (पा० ३ । ३ । ७६) इति भावे अप् । तत्सन्नियोगेन धातोर्वधादेशः । स चान्तोदात्तः । अन्त्यस्याकारस्य 'अतो लोपः' (पा० ६ । ४ । ४७) इति लोपे उदात्तनिवृत्तिस्वरेण प्रत्ययस्योदात्तत्वम् । विवृक्णा, 'ओव्रश्चू छेदने' कर्मणि निष्ठा । 'यस्य विभाषा' (पा० ७ । २ । १५) इतीट्प्रतिषेधः । 'ओदितश्च' ( पा० ८ । २ । ४५ ) इति परत्वान्निष्ठानत्वम् । ततो 'व्रश्चभ्रस्जेति' ( पा० ८ । २ । ३६ ) षत्वे प्राप्ते 'निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्यः' ( वा० पा० ८ । २ । ६ ) इति नत्वस्य सिद्धत्वेन झलपरत्वाभावात् षत्वं न भवति । कुत्वे तु कर्तव्ये तदसिद्धमेव ( पा० ८ । २ । १ ) इति । 'चो

कुः' (पा० ८ । २ । ३०) इति कुत्वम् । 'शेश्छन्दसि बहुलम्' (पा० ६ । १ । ७०) इति शेर्लोपः । 'गतिरनन्तरः' ( पा० ६ । २ । ४९ ) इति गतेः प्रकृतिस्वरत्वम् । शयते, 'बहुलं छन्दसि' (पा० २ । ४ । ७३) इति शपो लुगभावः । पृथिव्याः, 'उदात्तयणो हल्पूर्वात्' (पा० ६ । १ । १७४) इति विभक्तेरुदात्तत्वम् ।

षष्ठीमृचमाह—

म०—अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम् । नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः ॥ ६ ॥

प०—अयोद्धाऽइव । दुःऽमदः । आ । हि । जुह्वे । महाऽवीरम् । तुविऽबाधम् । ऋजीषम् । न । अतारीत् । अस्य । सम्ऽऋतिम् । वधानाम् । सम् । रुजानाः । पिपिषे । इन्द्रऽशत्रुः ॥ ६ ॥

दुर्मदो दुष्टमदोपेतो दर्पयुक्तो वृत्रः, अयोद्धेव योद्धृरहित इव इन्द्रम् आजुह्वे हि आहूतवान् खलु । कीदृशम् इन्द्रम् । महावीरं गुणैर्महान् भूत्वा शौर्योपेतं तुविबाधं बहूनां बाधकम् ऋजीषं शत्रूणामपार्जकम् । अस्येदृशस्येन्द्रस्य सम्बन्धिनो ये शत्रुवधाः सन्ति, तेषां वधानां समृतिं सङ्गमं नातारीत् । पूर्वोक्तो दुर्मदः तरीतुं नाशक्नोत् । इन्द्रशत्रुः इन्द्रः शत्रुर्घातको यस्य वृत्रस्य तादृशो वृत्रः इन्द्रेण हतो नदीषु पतितः सन् रुजाना नदीः सं पिपिषे सम्यक् पिष्टवान् । सर्वान् लोकानावृण्वतो

वृत्रदेहस्य पातेन नदीनां कूलानि तत्रत्यं पाषाणादिकं च चूर्णीभूतमित्यर्थः ।

अयोद्धा इव, न विद्यते योद्धास्येति बहुव्रीहौ 'नञ्सुभ्याम्' ( पा० ६ । २ । १७२ ) इत्युत्तरपदान्तोदात्तत्वम् । समासान्तविधेरनित्यत्वात् (परि० ८४) 'नद्यृतश्च' (पा० ५ । ४ । १५३) इति कबभावः। जुह्वे, 'ह्वेञ् स्पर्द्धायां शब्दे च'। 'अभ्यस्तस्य च'(पा० ६ । १ । ३३)इति सम्प्रसारणम् । उवङादेशाभावश्छान्दसः । यद्वा । 'छन्दस्युभयथा' (पा० ३ । ४ । ११७) इति सार्वधातुकसंज्ञायाम् 'हुश्नुवोः सार्वधातुके' (पा० ६ । ४ । ८७) इति यणादेशः । अत्र लक्षणप्रतिपदोक्तपरिभाषा (परि० १०५) लक्ष्यानुरोधान्नाश्रीयते । इतरथा हि आजुह्वान इत्यादिषु यणादेशो न स्यात् । न चैवं सति "सातये हुवे वाम्" (ऋ० सं० ६। ६० । १३) इत्यादावपि तथा स्यादिति वाच्यम्, अनेकाच्त्वाभावात्। अनेकाच इति हि तत्रानुवर्तते । प्रत्ययस्वरेणान्तोदात्तत्वम् । 'हि च' (पा० ८।१।३४) इति निघातप्रतिषेधः । महावीरम्, महांश्चासौ वीरश्च महावीरः ।'आन्महतः' (पा० ६ । ३ । ४६) इत्यात्वम् । तुविबाधम्,'बाधृ विलोडने'। तुवीन् प्रभूतान् बाधते इति तुविबाधः। पचाद्यच् । कृदुत्तरपदप्रकृतिस्वरत्वम् । समृतिम्, 'तादौ चेति' ( पा० ६ । २ । ५० ) गतेः प्रकृतिस्वरत्वम् । रुजानाः 'रुजो भङ्गे'। रुजन्ति कूलानि इति रुजाना नद्यः। "रुजाना नद्यो भवन्ति। रुजन्ति कूलानि" (निरु० ६ । ४) इति यास्कः। व्यत्ययेन शानच् । 'तुदादिभ्यः शः' (पा० ३ । १ । ७७) मुगभावश्छान्दसः। 'अदुपदेशाल्लसार्वधातुकानुदात्तत्वे'(पा० ६ । १ । १८६) विकरणस्वरः । पिपिषे, 'पिषॢ संचूर्णने' । व्यत्ययेन लिट् । इन्द्रशत्रुः बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।

---

१—मैक्समूलरसम्पादितपुस्तके राजारामशोधितग्रन्थे चोपलभ्यमानः 'नुमभाव' इति पाठः प्रामादिकः, नुमोऽप्राप्तः ।

सप्तमीमृचमाह—

म०—अपादहस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान। वृष्णो वध्रिः प्रतिमानं बुभूषन्पुरुत्रा वृत्रो अशयद्व्यस्तः ॥७॥

प०—अपात्। अहस्तः। अपृतन्यत्। इन्द्रम्। आ। अस्य। वज्रम्। अधि। सानौ। जघान। वृष्णः। वध्रिः। प्रतिऽमानम्। बुभूषन्। पुरुऽत्रा। वृत्रः। अशयत्। विऽअस्तः ॥७॥

अपात् वज्रेण छिन्नत्वात् पादरहितः, अहस्तः हस्तरहितो वृत्रः इन्द्रमुद्दिश्य अपृतन्यत् पृतनां युद्धमैच्छत्। द्वेषाधिक्येन बहुधा विद्धोऽपि युद्धं न परित्यक्तवानित्यर्थः। अस्य हस्तपादहीनस्य वृत्रस्य सानौ पर्वतसानुसदृशे प्रौढस्कन्धे अधि उपरि वज्रम् आ जघान इन्द्र आभिमुख्येन प्रक्षिप्तवान्। अशक्तस्यापि युद्धेच्छायां दृष्टान्तः—वध्रिः छिन्नमुष्कः पुरुषः, वृष्णो रेतःसेचनसमर्थस्य पुरुषान्तरस्य प्रतिमान् सादृश्यं, बुभूषन् प्राप्तुमिच्छन् यथा न शक्नोति तद्वदयमिति शेषः। स वृत्रः पुरुत्रा बहुष्ववयवेषु व्यस्तः विविधं क्षिप्तः ताडितः सन् अशयत् भूमौ पतितवान्।

अपात्, बहुव्रीहौ पादशब्दस्यान्त्यलोपश्छान्दसः। अहस्तः बहुव्रीहौ 'नञ्सुभ्याम्' (पा० ६। २। १७२) इत्युत्तरपदान्तोदात्तत्वम्। अपृतन्यत्, 'सुप आत्मनः क्यच्' (पा० ३। १। ८)। 'कव्यध्वरपृतनस्य' (पा० ७। ४। ३९) इत्यन्त्यलोपः। बुभूषन्, 'सनि ग्रहगुहोश्च' (पा० ७। २। १२) इतीट्प्रतिषेधः। पुरुत्रा, 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो

द्वितीयासप्तम्योर्बहुलम्' ( पा० ५ । ४ । ५६ ) इति सप्तम्यर्थे त्राप्रत्ययः। अशयत्, व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि' ( पा० २ । ४ । ७३) इति शपो लुगभावः । व्यस्तः, 'असु क्षेपणे' इत्यस्मात् कर्मणि क्तः। 'यस्य विभाषा' ( पा० ७ । २ १५ ) इतीट्प्रतिषेधः । 'गतिरनन्तरः' ( पा० ६ । २ । ४९ ) इति गतेः प्रकृतिस्वरत्वम् । संहितायाम् 'उदात्तस्वरितयोर्यणः' (पा० ८।२।४) इति परस्यानुदात्तस्य स्वरितत्वम्।

अष्टमीमृचमाह—

म०—नदं न भिन्नममुया शयानं मनो रुहाणा अति यन्त्यापः। याश्चिद्वृत्रो महिना पर्य्यतिष्ठत्तासामहिः पत्सुतःशीर्बभूव ॥ ८॥

प०—नदम् । न । भिन्नम् । अमुया । शयानम् । मनः । रुहाणाः । अति । यन्ति । आपः । याः । चित् । वृत्रः । महिना । परिऽअतिष्ठत् । तासाम् । अहिः । पत्सुतःऽशीः । बभूव ॥ ८॥

अमुया अमुष्यां पृथिव्यां, शयानं पतितं, मृतं, वृत्रम् आपो जलानि अति यन्ति अतिक्रम्य गच्छन्ति । तत्र दृष्टान्तः—भिन्नं बहुधा भिन्नकूलं नदं न सिन्धुमिव । यथा वृष्टिकाले प्रभूता आपो नद्याः कूलं भित्त्वातिक्रम्य गच्छन्ति तद्वत् । कीदृश्य आपः मनो रुहाणाः, नृणां चित्तमारोहन्त्यः । पुरा वृत्रे जीवति सति तेन निरुद्धा मेघस्थिता आपो भूमौ वृष्टा न भवन्ति तदानीं नृणां मनः खिद्यते । मृते तु वृत्रे निरोधरहिता आपो वृत्रशरीरमुल्लङ्घ्य प्रवहन्ति, तदा वृष्टिलाभेन तु मनुष्यास्तुष्यन्तीत्यर्थः । तदेतदुत्तरार्धेन स्पष्टीक्रियते । वृत्रो जीवनदशायां महिना

स्वकीयेन महिम्ना याश्चित् या एव मेघगता अपः पर्य्यतिष्ठत् परिवृत्य स्थितवान्। अहिर्वृत्रो मेघः तासामपां पत्सुतःशीः पादस्याधःशयानो बभूव। यद्यप्यपां पादो नास्ति तथाप्यद्भिर्वृत्रस्याभिलङ्घितत्वात् पादस्याधः शयनमुपपद्यते।

भिन्नम्, 'रदाभ्यां निष्ठातो नः' (पा० ८। २। ४२) इति नत्वम्। अमुया, 'सुपां सुलुक्' (पा० ७। १। ३९) इति सप्तम्या याजादेशः। शयानम्, 'शीङः सार्वधातुके' (पा० ७। ४। २१) इति गुणः। धातोर्ङित्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः। रुहाणाः, 'रुह बीजजन्मनि प्रादुर्भावे च'। व्यत्ययेन शानच्। कर्तरि शपि प्राप्ते व्यत्ययेन शः। 'अनित्यमागमशासनम्' इति वचनान्मुगभावः। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वरे प्राप्ते व्यत्ययेन धातुस्वरः। महिना, 'मह पूजायाम्'। 'इन् सर्वधातुभ्यः' (उ० ४। ११७) इतीन्प्रत्ययः। व्यत्ययेन विभक्तेरुदात्तत्वम्। यद्वा। महिना महिम्ना महच्छब्दस्य पृथ्वादिषु पाठात् 'तस्य भावः' इत्यस्मिन्नर्थे 'पृथ्वादिभ्य इमनिज्वा' (पा० ५। १। १२२) इतीमनिच्प्रत्ययः। 'टेः' (पा० ६। ४। १४३) इति टिलोपः। 'चितः' (पा० ६। १। १६३) इत्यन्तोदात्तत्वम्। तृतीयैकवचने अल्लोपे सति उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वम्। मकारलोपश्छान्दसः। पत्सुतःशीः, पादस्याधः शेते इति पत्सुतःशीः। 'क्विप्च' (पा० ३। २। ७६) इति क्विप्। तसि, 'पद्दन्' (पा० ६। १। ६३) इत्यादिना पादशब्दस्य पदादेशः। शस्प्रभृतिष्विति प्रभृतिशब्दः प्रकारवचने इति 'शला दोषणी' इत्यत्रापि दोषन्नादेशो भवति (का० ६। १। ६३) इत्युक्तत्वात्। मध्ये सु इति शब्दोपजनश्छान्दसः। यद्वा। पादशब्दस्य सप्तमीबहुवचने पदादेशे कृते 'इतराभ्योऽपि दृश्यन्ते' (पा० ५।३।१४) इति सप्तम्यर्थे तसिल्। लुगभावश्छान्दसः।

नवमीमृचमाह—

म०—नी॒चाव॑या अभवद्वृ॒त्रपु॒त्रेन्द्रो॑ अ॒स्या अव॒

वधर्जभार । उत्तरा सूरधरः पुत्र आसीद्दानुः

शये सहवत्सा न धेनुः ॥ ९ ॥

प०—नीचाऽवयः अभवत् । वृत्रऽपुत्रा । इन्द्रः । अस्याः । अव ।

वधः । जभार । उत्ऽतरा । सूः । अधरः । पुत्रः । आसीत् । दानुः ।

शये । सहऽवत्सा । न । धेनुः ॥ ९ ॥

वृत्रपुत्रा वृत्रः पुत्रो यस्या मातुः सेयं माता वृत्रपुत्रा । नीचावया न्यग्भावं प्राप्ता हताभवत् । पुत्रं प्रहारादुरक्षितुं पुत्रदेहस्योपरि तिरश्ची पतितवतीत्यर्थः । तदानीमयमिन्द्रः अस्या मातुः अव अधोभागे वृत्रस्योपरि वधं हननसाधनमायुधं जभार प्रहृतवान् । तदानीं सूर्माता उत्तरा उपरिस्थितासीत्, पुत्रस्तु अधोभागस्थित आसीत् । सा च दानुर्दानवी वृत्रमाता शये मृता शयनं कृतवती । तत्र दृष्टान्तः–धेनुर्लोकप्रसिद्धा गौः सहवत्सा न । यथा वत्ससहिता शयनं करोति तद्वत् ।

नीचावया, वेति खादतीति वयो बाहुः औणादिकोऽसिप्रत्ययः । न्यञ्चौ वयसौ यस्याः सा नीचावयाः । न्यञ्चशब्दानुत्तरस्या विभक्तेः सुपां सुपो भवन्तीति तृतीयैकवचनादेशः । 'अचः' (पा० ६ । ४ । १३८) इत्यकारलोपे 'चौ' (पा० ६ । ३ । १३८) इति दीर्घत्वम् । 'अञ्चेश्छन्दस्यसर्वनामस्थानम्' (पा० ६ । १ । १७०) इति तस्योदात्तत्वम् । समासे लुगभावश्छान्दसः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । यद्वा नीचौ निकृष्टौ वयसौ यस्याः सा । पूर्वपदस्य दीर्घश्छान्दसः

वधः, हन्यतेऽनेनेति वधः । अप्सुनि हन्तेर्वधादेशः । नित्त्वादाद्युदात्तत्वम् । जभार, 'हृग्रहोर्भः' (वा० पा० ८ । २ । ३२) इति भत्वम् । सूः, 'षूङ् प्राणिगर्भविमोचने' । सूते गर्भं विमुञ्चतीति सूर्माता । 'क्विप् च' (पा० ३ । २ । ७६) इति क्विप् । दानुः, 'दो अवखण्डने' । 'दाभाभ्यां नुः' (उ० ३।३२) । शये, लटि 'लोपस्त आत्मनेपदेषु' (पा० ७ । १ । ४१) इति तलोपः । 'शीङः सार्वधातुके' (पा० ७ । ४ । २१) इति गुणे अयादेशः ।

दशमीमृचमाह—

म०—अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् । वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ॥१०॥

प०—अतिष्ठन्तीनाम् । अनिऽवेशनानाम् । काष्ठानाम् । मध्ये । निऽहितम् । शरीरम् । वृत्रस्य । निण्यम् । वि । चरन्ति । आपः । दीर्घम् । तमः । आ । अशयत् । इन्द्रशत्रुः ॥१०॥

वृत्रस्य शरीरमापो वि चरन्ति विशेषेणोपर्य्याक्रम्य वहन्ति । कीदृशं शरीरम् । निण्यं निर्नामधेयम् । अप्सु मग्नत्वेन गूढत्वात्तदीयं नाम न केनापि ज्ञायते । एतदेव स्पष्टीक्रियते । काष्ठानामपां मध्ये निहितं निक्षिप्तम् । कीदृशानां काष्ठानाम् । अतिष्ठन्तीनां स्थितिरहितानाम् अनिवेशनानाम् उपवेशनरहितानाम् । प्रवहणस्वभावत्वादेतासां मनुष्यवन्न क्वापि स्थितिः संभवति । इन्द्रशत्रुः वृत्रो जलमध्ये शरीरे निक्षिप्ते सति दीर्घं तमो दीर्घनिद्रात्मकं मरणं यथा भवति तथा आशयत् सर्वतः पतितवान् ।

अतिष्ठन्तीनाम्, अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा० ६।२।२)। अनिवेशनानाम्, निविशन्तेऽस्मिन्निति निवेशनं स्थानम्।'करणाधिकरणयोश्च' (पा० ३।३।११७) इत्यधिकरणे ल्युट्। तद्रहितानाम्। बहुव्रीहौ'नञ्सुभ्याम्' ( पा० ६। २। १७२ ) इत्युत्तरपदान्तोदात्तत्वम् । क्रान्त्वा-स्थिताः काष्ठाः। पृषोदरादिः। निहितम्, 'गतिरनन्तरः' (पा० ६।२।४९) इति गतेः प्रकृतिस्वरत्वम्।

अत्र यास्कः—

अतिष्ठन्तीनामनिविशमानानामित्यस्थावराणां काष्ठानां मध्ये निहितं शरीरं मेघः। शरीरं शृणातेः शम्नातेर्वा। वृत्रस्य निण्यं निर्णामं विचरन्ति विजानन्त्याप इति। दीर्घम्, द्राघतेस्तमस्तनोतेराशयदाशेते-रिन्द्रशत्रुरिन्द्रोऽस्य शमयिता वा शातयिता वा तस्मादिन्द्रशत्रुः। तत्को वृत्रो मेघ इति नैरुक्ताः,त्वाष्ट्रोऽसुर इत्यैतिहासिकाः' (निरु० २।१६)इति।

एकादशीमृचमाह—

**म०—दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव।गावः अपां बिलमपिहितं यदासीद् वृत्रं जघन्वाँ अप तद्ववार ॥ ११ ॥**

प० —दासऽपत्नीः। अहिऽगोपाः। अतिष्ठन्। निऽरुद्धाः। आपः। पणिनाऽइव। गावः। अपाम्। बिलम्। अपिऽहितम्। यत्। आसीत्। वृत्रम्। जघन्वान्। अप। तत्। ववार ॥११॥

१—अयमितिहासस्तैत्तिरीयसंहितायां (२। ४। १२) शतपथब्राह्मणे च स्पष्टमुपलभ्यमान एव भगवतादिषु स्पष्टीकृतः।

दासपत्नीः दासो विश्वोपक्षपणहेतुर्वृत्रः पतिः स्वामी यासामपां ताः दासपत्नीः । अत एवाहिगोपाः अहिर्वृत्रो गोपा रक्षको यासां ताः । गोपनं नाम स्वच्छन्देन यथा न प्रवहन्ति तथा निरोधनम् । एतदेव स्पष्टीक्रियते—आपो निरुद्धा अतिष्ठन्निति । तत्र दृष्टान्तः । पणिनेव गावः । पणिनामकोऽसुरः गा अपहृत्य बिले स्थापयित्वा बिलद्वारमाच्छाद्य यथा निरुद्धवांस्तथेत्यर्थः । अपां यद् बिलं प्रवहणद्वारम् अपिहितं वृत्रेण निरुद्धमासीत्, तद् बिलं प्रवहणद्वारं वृत्रं जघन्वान् हतवानिन्द्रः । अप ववार अपवृतमकरोत् । वृत्रकृतमपां निरोधं परिहृतवान् ।

अत्र यास्कः—

"दासपत्नीर्दासाधिपत्न्यो । दासो दस्यतेरुपदासयति कर्माण्यहिगोपा अतिष्ठन्नहिना गुप्ताः । अहिरयनादेत्यन्तरिक्षेऽयमपीतरोऽहिरेतस्मादेव निर्ह्रसितोपसर्ग आहन्तीति । निरुद्धा आपः पणिनेव गावः पणिर्वणिग्भवति । पणिः पणनाद्वणिक् पण्यं नेनेक्ति । अपां बिलमपिहितं यदासीत् । बिलं भरं भवति बिभर्तेर्वृत्रं जघ्निवान् अपववार तद्वृत्रो वृणोतेर्वा वर्ततेर्वा वर्धतेर्वा यदवृणोत्तद्वृत्रस्य वृत्रत्वमिति विज्ञायते । यदवर्तत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते । यदवर्धत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते" ( नि० २ । १७ ) इति ।

दासपत्नीः, 'दसु उपक्षये' दासयतीति दासो वृत्रः । पचाद्यच् । 'चितः' ( पा० ६ । १ । १६३ ) इत्यन्तोदात्तत्वम् । दासः पतिर्यासाम् 'विभाषा सपूर्वस्य' ( पा० ४।१।३४ ) इति ङीप् । तत्सन्नियोगेनेकारस्य नकारः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । यद्वा । दासस्य पालयित्र्यः । 'पत्यावैश्वर्ये' ( पा० ६ । २ । १८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । अहिगोपाः, 'गुपू रक्षणे' । गोपायतीति गोपाः । 'आयादय आर्द्धधातुके वा' ( पा० ३ । १ । ३१ ) इत्यायप्रत्ययः । ततः क्विप् । 'अतो लोपः' ( पा० ६ । ४ । ४८ ) 'वेरपृक्तलोपाद्वलि लोपो बलीयान्' ( पा० ६ । १ । ६६ । ६७) इति पूर्वं यकारलोपः । न च 'अचः परस्मिन्' ( पा० १ । १ । ५७ ) इति अतो लोपस्य स्थानिवत्त्वम् । 'न पदान्तद्विर्वचन' ( पा० १।१।५८ )

इति प्रतिषेधात्। अहिर्गोपा यासां पूर्ववत्स्वरः। निरुद्धाः, 'रुधिर् आवरणे'। 'झषस्तथोर्धोधः' (पा० ८।२।४०) इति निष्ठातकारस्य धकारः। 'गतिरनन्तरः' (पा० ६।२ ४९) इति गतेः प्रकृतिस्वरत्वम्। जघन्वान्, हन्तेर्लिटः क्वसुः। 'अभ्यासाच्च' (पा० ७।३।५५) इति अभ्यासादुत्तरस्य हकारस्य कुत्वम्। क्रादिनियमप्राप्तस्येटो 'विभाषा गमहन' (पा० ७।२।६८) इत्यादिना विकल्पविधानादभावः। संहितायां नकारस्य रुत्वानुनासिकावुक्तौ।

द्वादशीमृचमाह—

म०—अश्व्यो वारो अभवस्तदिन्द्र सृके यत् त्वा प्रत्यहन् देव एकः। अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्त सिन्धून् ॥१२॥

प०—अश्व्यः। वारः। अभवः। तत्। इन्द्र। सृके। यत्। त्वा। प्रतिऽअहन्। देवः। एकः। अजयः। गाः। अजयः। शूर। सोमम्।। अव। असृजः। सर्तवे। सप्त। सिन्धून्॥१२॥

सृके वज्रे। 'सृकः वृक' इति वज्रनामसु पठितत्वात्। देवो दीप्यमानः सर्वायुधकुशलः। एकः अद्वितीयो वृत्रः यद्यदा त्वा त्वां प्रत्यहन् प्रतिकूलत्वेन प्रहृतवान्, तत्तदानीं त्वम् अश्व्यो वारः अश्वसम्बन्धी वालोऽभवः। यथा अश्वस्य वालोऽनायासेन मक्षिकादीन् निवारयति तद्वद्वृत्रमगणयित्वा निराकृतवानित्यर्थः। किञ्च गाः पणिनापहृतास्त्वमजयः जितवान्। हे शूर शौर्ययुक्तेन्द्र सोममजयो जितवान्।

तथा च तैत्तिरीयाः 'त्वष्टा हतपुत्रः' इत्यस्मिन्नुपाख्याने समामनन्ति—'स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्' ( तै० सं० २ । ४ । १२ । १ ) इति ।

सप्त सिन्धून् 'इमं मे गङ्गे' (ऋ० सं० १० । ७५ । ५) इत्यस्यामृच्याम्नाता गङ्गाद्याः सप्तसंख्याका नदीः सर्तवे सर्तुं प्रवाहरूपेण गन्तुम् अवासृजः त्यक्तवान् । वृत्रकृतं प्रवाहनिरोधं निराकृतवानित्यर्थः ।

अश्व्यः, अश्वे भवः । 'भवे छन्दसि' ( पा० ४ । ४ । ११०) इति यत् । 'यतोऽनावः' ( पा० ६।१।१।२।३ ) इत्याद्युदात्तत्वम् । वारयति दंशमशकानिति वारः । पचाद्यच् । कपिलकादित्वात् ( म० ८।२।१८ ) लत्वविकल्पः । वृषादित्वादाद्युदात्तत्वम् । प्रत्यहन्, 'यद्वृत्तान्नित्यम्' (पा० ८।१।६६) इति निघातप्रतिषेधः । 'तिङि चोदात्तवति' ( पा० ८ । १ । ७१) इति गतेरनुदात्तत्वम् । अजयः, 'गाः' इत्यस्य वाक्यान्तरगतत्वात् तदपेक्षयास्य 'तिङ्ङतिङः' (पा० ८ । १ । २८) इति निघातो न भवति। 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' (वा०पा० १।१। १८) इति वचनात् । सर्तवे, 'तुमर्थे सेसेन्' ( पा० ३।४।९ ) इति तवेन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ।

त्रयोदशीमृचमाह—

म०—नास्मै विद्युन्न तन्यतुः सिषेध न यां मिहमकिरद्ध्रादुनिं च । इन्द्रश्च यद्युयुधाते अहिश्चोतापरीभ्यो मघवा वि जिग्ये ॥ १३ ॥

प०—न । अस्मै । विऽद्युत् । न । तन्यतुः । सिसेध । न । याम् । मिहम् । अकिरत् । ह्रादुनिम् । च । इन्द्रः । च । यत् । युयु-

धाते इति । अहिः । च । उत । अपरीभ्यः । मघवा । वि । जिग्ये ॥ १३ ॥

इन्द्रं निषेद्धुं वृत्रो यान् विद्युदादीन् मायया निर्मितवान् ते सर्वेऽप्येनं निषेद्धुमशक्ताः । सोऽयमर्थोऽनेन मन्त्रेणोच्यते। अस्मै इन्द्रार्थं निर्मिता विद्युत् न सिषेध इन्द्रं न प्राप्नोत्, तथा तन्यतुः गर्जनं यां मिहं सेचनं यां वृष्टिम् अकिरत् वृत्रो विक्षिप्तवान् सापि वृष्टिर्न सिषेध । ह्रादुनिं च अशनिमपि यां वृत्रः प्रयुक्तवान् सापि न सिषेध। इन्द्रश्चाहिश्च इन्द्रवृत्रावुभावपि यद्यदा युयुधाते युद्धं कृतवन्तौ तदानीं विद्युदादयो न प्राप्ता इति पूर्वत्रान्वयः । उत अपि च मघवा धनवानिन्द्रः अपरीभ्यः अपराभ्यः अन्यासामपि वृत्रनिर्मितानां मायानां सकाशाद्विजिग्ये विशेषेण जितवान् ।

सिषेध, 'षिधु गत्याम्' । मिहम्, 'मिह सेचने' । मेहति सिञ्चतीति मिट् वृष्टिः । 'क्विप् च' ( पा० ३ । २ । ७६ ) इति क्विप् । अकिरत्, 'कॄ विक्षेपे' । 'तुदादिभ्यः शः' (पा० ३।१।७७) । 'ॠत इद्धातोः' (पा० ७ । १ । १००) इतीत्त्वम् । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । युयुधाते, 'युध संप्रहारे' । लिटि प्रत्ययस्वरः । जिग्ये, 'सन्लिटोर्जेः' (पा० ७ । ३ । ५७) इत्यभ्यासादुत्तरस्य जकारस्य कुत्वम् ।

चतुर्दशीमृचमाह—

म०—अहेर्यातारं कमपश्य इन्द्र हृदि यत्ते जघ्नुषो भीरगच्छत् । नव च यन्नवतिं च स्रवन्तीः श्येनो न भीतो अतरो रजांसि ॥ १४ ॥

1936

प०—अहेः । यातारम् । कम् । अपश्यः । इन्द्र । हृदि । यत् । ते ।
जघ्नुषः । भीः । अगच्छत् । नव । च । यत् । नवतिम् ।
च । स्रवन्तीः । श्येनः । न । भीतः । अतरः । रजांसि ॥१४॥

हे इन्द्र जघ्नुषो वृत्रं हतवतः तव हृदि चित्ते यत् यदि भीरगच्छत् न हतवानस्मीति बुद्धया भयं प्राप्नुयात् तर्हि अहेर्वृत्रस्य यातारं हन्तारं कमपश्यः, त्वत्तोऽन्यं कं पुरुषं दृष्टवानसि । तादृशस्य पुरुषान्तरस्याभावात् । मा भूत्तव भयमित्यर्थः । यद्यस्मात्कारणात्त्वम् नव च नवतिं च स्रवन्तीः एकोनशतसंख्याकाः प्रवहन्तीर्नदीः प्राप्य रजांसि तत्रत्यान्युदकानि अतरः तीर्णवानसि । तत्र दृष्टान्तः—श्येनो न श्येननामको बलवान् पक्षीव । दूरगमनात्तव भयमासीदिति गम्यते । तद्भयं मा भूदित्यभिप्रायः ।

तच्च दूरगमनं ब्राह्मणे समाम्नातम्—'इन्द्रो वै वृत्रं हत्वा नास्तृषीति मन्यमानः पराः परावतोऽगच्छत्' ( ऐ० ब्रा० ३ । १५ ) इति ।

तैत्तिरीयाश्चामनन्ति 'इन्द्रो वृत्रं हत्वा परां परावतमगच्छदपराधमिति मन्यमानः' ( तै० ब्रा० १ । ६ । ७ । ४ ) इति ।

हृदि, 'पद्दन्' ( पा० ६ । १ । ६३ ) इत्यादिना हृदयशब्दस्य हृदादेशः । 'ऊडिदम्' ( पा० ६ । १ । १७१ ) इत्यादिना विभक्तेरुदात्तत्वम् । जघ्नुषः, हन्तेर्लिटः क्वसुः । षष्ठ्येकवचने 'वसोः सम्प्रसारणम्' ( पा० ६ । ४ । १३१ ) इति सम्प्रसारणपरपूर्वत्वे 'शासिवसिघसीनां च' ( पा० ८ । ३ । ६० ) इति षत्वम् । न च 'षत्वतुकोरसिद्धः' ( पा० ६ । १ । ८६ ) इति एकादेशस्यासिद्धत्वात् षत्वं न प्राप्नुयादिति वाच्यम् । 'संप्रसारणङीट्सु प्रतिषेधो वक्तव्यः' (वा० पा० ६ । १ । ८६) इति असिद्धवद्भावस्य प्रतिषिद्धत्वात् । 'गमहन' ( पा० ६ । ४ । ९८ )

इत्यादिना उपधालोपः । न च 'असिद्धवदत्राभात्' (पा० ६ । ४ । २२) इति सम्प्रसारणस्यासिद्धवद्भावः । भिन्नाश्रयत्वात् । संप्रसारणं हि षष्ठ्येकवचने उपधालोपस्तु वसाविति भिन्नाश्रयत्वम् । स्रवन्तीः, 'स्रु गतौ' । 'शप्श्यनोर्नित्यम्' (पा० ७ । १ । ८१) इति नुमागमः । शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेणाद्युदात्तत्वम् । अतरः, यद्वृत्तयोगादनिघातः ।

पञ्चदशीमृचमाह—

म०—इन्द्रो यातोऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः । सेदु राजा क्षयति चर्षणीनामरान्न नेमिः परि ता बभूव ॥ १५ ॥

प०—इन्द्रः । यातः । अवऽसितस्य । राजा । शमस्य । च । शृङ्गिणः । वज्रऽबाहुः । सः । इत् । ऊं इति । राजा । क्षयति । चर्षणीनाम् । अरान् । न । नेमिः । परि । ता । बभूव ॥ १५ ॥

वज्रबाहुरिन्द्रः शत्रौ हते सति निःसपत्नो भूत्वा, यातो गच्छतो जङ्गमस्य, अवसितस्य एकत्रैव स्थितस्य स्थावरस्य, शमस्य शान्तस्य शृङ्गराहित्येन प्रहरणादावप्रवृत्तस्याश्वगर्दभादेः, शृङ्गिणः शृङ्गोपेतस्योग्रस्य महिषबलीवर्दादेश्च राजाभूत् । सेदु स एवेन्द्रः चर्षणीनां मनुष्याणां राजा भूत्वा क्षयति निवसति । ता तानि पूर्वोक्तानि जङ्गमादीनि सर्वाणि परि बभूव व्याप्तवान् । तत्र दृष्टान्तः—अरान्न नेमिः यथा रथचक्रस्य परितो वर्तमाना नेमिररान्नाभौ कीलिता[न] काष्ठविशेषान् व्याप्नोति तद्वत् ।

यातः, 'या प्रापणे'। याति गच्छतीति यात् ।लटः शतृ। 'सावेकाचः'(पा० ६।१।१६८) इति विभक्तेरुदात्तत्वम् । सः, 'सोऽचि लोपे चेत्पादपूरणम्' (पा० ६ । १ । १३४) इति संहितायां सोर्लोपः ।ता, 'शेश्छन्दसि बहुलम्' (पा० ६ । १ । ७० ) इति शेर्लोपः । बभूव, भवतेर्लिटो णलि 'भवतेरः' (पा० ७ । ४ । ७३)इत्यभ्यासस्यात्वम्। कृताकृतप्रसङ्गितया वुगागमस्य नित्यत्वाद्वृद्धेः पूर्वं वुगागमः । यद्वा । 'इन्धिभवतिभ्यां च' (पा० १।२।६) इति लिटः कित्त्वाद्वृद्ध्यभावः । न च 'असिद्धवदत्राभात्' (पा० ६।४।२२) इति तस्यासिद्धत्वादुवङादेशः शङ्कनीयः, 'वुग्युटावुवङ्यणोः सिद्धौ भवतः' (वा० पा० ६ । ४ । २२) इति तस्य सिद्धत्वात् । 'तिङ्ङतिङः' (पा० ८ । १ । २८) इति निघातः ।



# अथ पञ्चाशत्तमं सूक्तम्



## संग्रहे षष्ठं सूक्तम् ।



उदु त्यमिति त्रयोदशर्चं सप्तमं सूक्तं प्रस्कण्वस्यार्षं सूर्यदेवत्यम् । आदौ नव गायत्र्यः शिष्टाश्चतस्रोऽनुष्टुभ इत्युक्तम् । तथा चानुक्रान्तम्—'उदु त्यं सप्तोना सौर्यं नवाद्या गायत्र्यः' इति । आश्विनशस्त्रे सौर्ये क्रतौ उदुत्यमित्यादयो नवर्चः शंसनीयाः । 'संस्थितेष्वाश्विनायेति खण्डे सूत्रितम् । सूर्यो नो दिव उदु त्यं जातवेदसमिति नव ( आश्व० ६ । ५ ) इति ।

तत्र प्रथमामृचमाह—

म०—उदु त्यं जातवेदसं देवं वहन्ति केतवः ।

दृशे विश्वाय सूर्य्यम् ॥१॥

प०—उत् । ऊं इति । त्यम् । जातऽवेदसम् । देवम् । वहन्ति । केतवः ।

दृशे । विश्वाय । सूर्यम् ॥१॥

केतवः प्रज्ञापकाः सूर्याश्वाः । यद्वा । सूर्यरश्मयः । सूर्यं सर्वस्य प्रेरकमादित्यम् उदु वहन्ति ऊर्ध्वं वहन्ति । उ इति पादपूरणः । उक्तञ्च 'मिताक्षरेष्मनर्थकाः कमीमिद्विति' ( नि० १ । ९ ) । किमर्थं । विश्वाय विश्वस्मै भुवनाय दृशे द्रष्टुम् । यथा सर्वे जनाः सूर्यं पश्यन्ति तथोर्ध्वं वहन्तीत्यर्थः । कीदृशं सूर्यम् त्यं प्रसिद्धम् । जातवेदसं जातानां प्राणिनां वेदितारं जातप्रज्ञं जातधनं वा । देवं द्योतमानम् ।

अत्र निरुक्तम् ।

'उद्वहन्ति तं जातवेदसं देवमश्वाः केतवो रश्मयो वा सर्वेषां भूतानां संदर्शनाय सूर्यम्' ( नि० १२ । १५ ) इति ।

जातवेदसं, जातानि वेत्तीति जातवेदाः। 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' ( उ० ४ । २२६ ) इत्यसुन् पूर्वपदप्रकृतिस्वरत्वं च। दृशे, 'दृशे विख्ये च' (पा० ३ । ४ । ११) इति तुमर्थे निपातितः। सूर्यम्, 'राजसूयसूर्य' (पा० ३।१।११४) इत्यादिना 'षु प्रेरणे' इत्यस्मात् क्यपि रुगाडमसहितो निपातितः। अतः प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम्।

द्वितीयामृचमाह—

## सं०—अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः।
## सूराय विश्वचक्षसे ॥ २ ॥

प०—अप। त्ये। तायवः। यथा। नक्षत्रा। यन्ति। अक्तुऽभिः।
सूराय। विश्वऽचक्षसे ॥ २ ॥

त्ये तायवो यथा, प्रसिद्धास्तस्करा इव, नक्षत्रा नक्षत्राणि देवगृहरूपाणि 'देवगृहा वै नक्षत्राणि' ( तै० ब्रा० १ । ५ । २ । ६ ) इति श्रुत्यन्तरात्। यद्वा। इह लोके कर्मानुष्ठानाय ये स्वर्गं प्राप्नुवन्ति ते नक्षत्ररूपेण दृश्यन्ते। तथा च श्रूयते 'यो वा इह यजते अमुं स लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्वम्' ( तै० ब्रा० १ । ५ । २ । ५ ) इति। यद्वा। तेषां सुकृतिनां ज्योतींषि नक्षत्राण्युच्यन्ते। 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' ( तै० सं० ५ । ४ । १ । ३ ) इत्याम्नानात्। यास्कस्त्वाह—'नक्षत्राणि नक्षतेर्गतिकर्मणो नेमानि क्षत्राणीति च ब्राह्मणम्' (निरु० ३ । २० ) इति। तथाविधानि नक्षत्राणि अक्तुभी रात्रिभिः सह अप यन्ति अपगच्छन्ति। विश्वचक्षसे विश्वस्य सर्वस्य प्रकाशकस्य सूराय सूर्यस्य आगमनं दृष्ट्वेति शेषः। तस्करा नक्षत्राणि च रात्रिभिः सह सूर्य आगमिष्यतीति भीत्या पलायन्त इत्यर्थः।

तायुरिति स्तेननाम। तायुस्तस्करः इति तन्नामसु पाठात्। अक्तुरिति रात्रिनाम। शर्वरी अक्तुरिति तत्र पाठात्।

यथा, 'यथेति पादान्ते' (फि० ४ । १३) इति सर्वानुदात्तत्वम्। नक्षत्रा, 'नक्ष गतौ'। 'अमिनक्षियजिबन्धिपतिभ्योऽत्रन्'(उ० ३ । १०५) इत्यत्रन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम्। 'नभ्राणनपादित्यत्र' (पा० ६। ३ । ७५) वृत्तौ त्वेवमुक्तम्। 'न क्षरति न क्षीयत इति वा नक्षत्रम्। क्षीयतेः क्षरतेर्वा नक्षत्रमिति निपात्यते' इति। 'शेश्छन्दसि बहुलम्' (पा० ६ । १ । ७०) इति शेर्लोपः। यन्ति, 'इण् गतौ', 'इणो यण्' (पा० ६ । ४ । ८१) इति यणादेशः। सूराय विश्वचक्षसे, विश्वं चष्टे प्रकाशयतीति विश्वचक्षाः। 'चक्षेर्बहुलं शिच्च' (उ० ४।२३२) इत्यसुन्प्रत्ययः। शित्त्वेन सार्वधातुकत्वात् ख्याञादेशाभावः। उभयत्र 'षष्ठ्यर्थे चतुर्थी वक्तव्या' (महाभा० २ । ३ । ६२ । १) इति चतुर्थी।

तृतीयामृचमाह—

म०—अदृ॑श्रमस्य के॒तवो॒ वि र॒श्मयो॒ जना॒ँ अनु॑।
भ्राज॑न्तो अ॒ग्नयो॑ यथा ॥ ३ ॥

प०—अदृ॑श्रन्। अ॒स्य॒। के॒तवः॑। वि। र॒श्मयः॑। जना॑न्। अनु॑।
भ्राज॑न्तः। अ॒ग्नयः॑। य॒था॒ ॥ ३ ॥

अस्य सूर्यस्य केतवः प्रज्ञापकाः रश्मयो दीप्तयो जनाननु व्यदृश्रं जातान् सर्वान् अनुक्रमेण प्रेक्षन्ते, सर्वं जगत् प्रकाशयन्तीत्यर्थः। तत्र दृष्टान्तः—भ्राजन्तो दीप्यमाना अग्नयो यथा अग्नय इव।

अदृश्रम्, 'दृशिर् प्रेक्षणे'। वर्तमाने लुङ्। 'इरितो वा' (पा० ३।१। ५७) इति च्लेरङादेशः। रुडित्यनुवृत्तौ 'बहुलं छन्दसि' (पा० ७।१।८) इति रुडागमः। अत एव बहुलवचनात् 'ऋदृशोऽङि गुणः' (पा० ७। ४ । १६ ) इति गुणाभाव इत्युक्तम्। तिङां तिङो भवन्तीति प्रथमपुरुषबहुवचनस्य उत्तमपुरुषैकवचनादेशः। प्रथमपुरुषान्त एव शाखान्तरे श्रूयते। 'अदृश्रन्नस्य केतवः' (अथ० १३।२।१८) इति। जनानित्यस्य

नकारस्य संहितायां रुत्वयत्वादि पूर्ववत् । भ्राजन्तः, शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते ।

चातुर्मास्येषु शुनासीर्य्ये पर्वणि अस्ति सौर्य एककपालः । तस्य तरणिरित्येषानुवाक्या । तथा च सूत्रितम् 'तरणिर्विश्वदर्शतश्चित्रं देवानामुदगादनीकमिति याज्यानुवाक्या' (आश्व० २।२०) इति । तथा—'अति मूर्त्तिनाम्न्येकाहे कृष्णपक्षे सौरीष्टिः कर्तव्या । तस्यामप्येषानुवाक्या।'अति मूर्तिनेति खण्डे सूत्रितम् । नवो नवो भवति जायमानस्तरणिर्विश्वदर्शतः' (आश्व० ९।८) इति ।

तामेतां सूक्ते चतुर्थीमृचमाह—

म०—तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य ।

विश्वमा भासि रोचनम् ॥४॥

प०—तरणिः । विश्वऽदर्शतः । ज्योतिःऽकृत् । असि । सूर्य ।

विश्वम् । आ । भासि । रोचनम् ॥४॥

हे सूर्य त्वं तरणिः तरिता अन्येन गन्तुमशक्यस्य महतोऽध्वनो गन्तासि । तथा च स्मर्य्यते—

'योजनानां सहस्रे द्वे द्वे शते द्वे च योजने । एकेन निमिषार्धेन क्रममाण नमोऽस्तु ते' इति । यद्वा । उपासकानां रोगात्तारयितासि 'आरोग्यं भास्करादिच्छेत्' इति स्मरणात् । तथा विश्वदर्शतः विश्वैः सर्वैः प्राणिभिर्दर्शनीयः । आदित्यदर्शनस्य चाण्डालादिदर्शनजनितपापनिर्हरणहेतुत्वात् । तथा चापस्तम्बः 'दर्शने ज्योतिषां दर्शनम्' इति । यद्वा । विश्वं सकलं भूतजातं दर्शतं द्रष्टव्यं प्रकाश्यं येन स तथोक्तः । तथा ज्योतिष्कृत् ज्योतिषः प्रकाशस्य कर्ता सर्वस्य वस्तुनः प्रकाशयितेत्यर्थः । यद्वा । चन्द्रादीनां रात्रौ प्रकाशयिता । रात्रौ हि अम्मयेषु चन्द्रादिबिम्बेषु सूर्यकिरणाः प्रतिफलिताः सन्तोऽन्धकारं निवारयन्ति । यथा द्वारस्थदर्पणोपरि निपतिताः सूर्य्यरश्मयो गृहा-

न्तर्गतं तमो निवारयन्ति तद्वदित्यर्थः । यस्मादेवं तस्मात् विश्वं व्याप्तं रोचनं रोचमानमन्तरिक्षं आ समन्ताद्भासि प्रकाशयसि । यद्वा । हे सूर्य अन्तर्यामितया सर्वस्य प्रेरक परमात्मन् तरणिः संसाराब्धेस्तारकोऽसि । यस्मात्त्वं विश्वदर्शतः विश्वैः सर्वैर्मुमुक्षुभिर्दर्शतो द्रष्टव्यः साक्षात्कर्तव्य इत्यर्थः । अधिष्ठानसाक्षात्कारे ह्यारोपितं निवर्तते । ज्योतिष्कृत् ज्योतिषः सूर्यादेः कर्ता । तथा चाम्नायते 'चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत' ( तै० आ० ३ । १२ । ६ ) इति ईदृशस्त्वं चिद्रूपतया विश्वं सर्वं दृश्यजातं रोचनं रोचमानं दीप्यमानं यथा भवति तथा भासि, प्रकाशयसि । चैतन्यस्फुरणे हि सर्वं जगद् दृश्यते । तथा चाम्नायते "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" ( क० उप० ५ । १५ ) इति ।

तरणिः, 'तॄ प्लवनसन्तरणयोः'। अस्मादन्तर्भावितण्यर्थात् 'अर्ति सृभृधृधम्यश्यवितॄभ्योऽनिः' (उ० २ । १०२ ) इत्यनिप्रत्ययः । प्रत्ययाद्युदात्तत्वम् । ज्योतिः करोतीति ज्योतिष्कृत् । 'क्विप् च' ( पा० ३ । २ । ७६ ) इति क्विप् । 'नित्यं समासेऽनुत्तरपदस्थस्य इति' ( पा० ८।३।४५ ) विसर्जनीयस्य षत्वम् । भासि, 'भा दीप्तौ'। अन्तर्भावितण्यर्थाल्लिटि अदादित्वाच्छपो लुक् ।

पञ्चमीमृचमाह—

म०—प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् ।
प्रत्यङ् विश्वं स्वर्दृशे ॥५॥

प० — प्रत्यङ् । देवानाम् । विशः । प्रत्यङ् । उत् । एषि ।
मानुषान् । प्रत्यङ् । विश्वम् । स्वः । दृशे ॥ ५ ॥

हे सूर्य त्वं देवानां विशः मरुन्नामकान् देवान् 'मरुतो देवानां विशः' ( तै० सं० २ । २ । ५ । ७ ) इति श्रुत्यन्तरात् । तान् मरुत्संज्ञकान् देवान् प्रत्यङ्ङुदेषि तान् प्रति गच्छन्नुदयं प्राप्नोषि

तेषामभिमुखं यथा भवति तथेत्यर्थः । तथा मानुषान् मनुष्यान् प्रत्यङ्ङुदेषि तेऽपि यथा अस्मदभिमुख एव सूर्य उदेतीति मन्यन्ते । तथा विश्वं व्याप्तं स्वः स्वर्लोकं दृशे द्रष्टुं प्रत्यङ्ङुदेषि । यथा स्वर्लोकवासिनो जनाः स्वस्वाभिमुख्येन पश्यन्ति तथा उदेषीत्यर्थः । एतदुक्तं भवति—लोकत्रयवर्तिनो जनाः सर्वेऽपि स्वस्वाभिमुख्येन सूर्यं पश्यन्तीति । तथा चाम्नायते 'तस्मात् सर्व एव मन्यते मां प्रत्युदगात्' (तै० सं० ६ । ५ । ४ ) इति ।

प्रत्यङ्, प्रत्यञ्चतीति प्रत्यङ् । 'अञ्चु गतिपूजनयोः' । 'ऋत्विक्' (पा० ३।२।५९) इत्यादिना' क्विन् । 'अनिदिताम्' (पा० ६।४।२४) इति नलोपः । 'उगिदचाम्' ( पा० ७ । १ । ७० ) इति नुम् । हल्ङ्यादिसंयोगान्तलोपौ । संयोगान्तलोपस्यासिद्धत्वात् उपधादीर्घनलोपयोरभावः । 'क्विन्प्रत्ययस्य कुः' ( पा० ८ । २ । ६२ ) इति कुत्वम् । 'अनिगन्तोऽञ्चतौ' ( पा० ६ । २ । ५२ ) इत्यनिगन्त इति पर्युदासात् पूर्वपदप्रकृतिस्वराभावे कृदुत्तरपदप्रकृतिस्वरत्वम् । एषि, 'इण् गतौ' । सिपि अदादित्वाच्छपो लुक् । 'आदेशप्रत्यययोः' ( पा० ८ । ३ । ५९ ) इति षत्वम् । स्वः सुपूर्वादर्तेर्विच् गुणे यणादेशः । 'न्यङ्स्वरौ स्वरितौ च' ( फि० ४ । ६ ) इति स्वरितत्वम् । दृशे, 'दृशिर् प्रेक्षणे' इत्यस्मात् 'दृशे विख्ये च' ( पा० ३ । ४ । ११ ) इति तुमर्थे निपातितः ।

षष्ठीमृचमाह—

म०—येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।

त्वं वरुण पश्यसि ॥६॥

प०—येन । पावक । चक्षसा । भुरण्यन्तम् । जनान् । अनु ।

त्वम् । वरुण । पश्यसि ॥६॥

हे पावक सर्वस्य शोधक वरुण अनिष्टनिवारक सूर्य

त्वं जनान् जातान् प्राणिनः भुरण्यन्तं धारयन्तं पोषयन्तं वा इमं लोकं येन चक्षसा प्रकाशेनानु पश्यसि अनुक्रमेण प्रकाशयसि तं प्रकाशं स्तुम इति शेषः। यद्वा। उत्तरस्यामृचि सम्बन्धः। तेन चक्षसा व्येषीति।

तथा च यास्केनोक्तम् 'तत्ते वयं स्तुम इति वाक्यशेषोऽपि वोत्तरस्यामन्वयस्तेन व्येषि' ( निरु० १२ । २२ ) इति।

भुरण्यन्तम्, 'भुरण धारणपोषणयोः'। कण्ड्वादित्वाद्यक्। ततः शतरि कर्तरि शप्। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे यक एव स्वरः शिष्यते। वरुण, 'वृञ् वरणे'। अस्मादन्तर्भावितण्यर्थात्, 'कृवृदृदारिभ्य उनन्' ( उ० ३ । ५३ ) इत्युनन्प्रत्ययः।

अत्र वरुणशब्देन आदित्य एवोच्यते। तथा चान्यत्राम्नातम् 'तस्यै मित्रश्च वरुणश्चाजायेताम्' ( तै० ब्रा० १ । १ । ९ ) इति। 'मित्रश्च वरुणश्च धाता चार्यमा च' ( तै० आ० १ । १३ । ३ ) इति च।

सप्तमीमृचमाह—

**म०—वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः।**

**पश्यञ्जन्मानि सूर्य ॥७॥**

**प०—वि। द्याम्। एषि। रजः। पृथु। अहा। मिमानः। अक्तुऽभिः।**

**पश्यन्। जन्मानि। सूर्य ॥७॥**

हे सूर्य त्वं पृथु विस्तीर्णं रजो लोकम्। 'लोका रजांस्युच्यन्ते' (नि० ४ । १९) इति यास्कः। कं लोकम्, द्याम् अन्तरिक्षलोकं व्येषि विशेषेण गच्छसि। किं कुर्वन्। अहा अहानि अक्तुभी रात्रिभिः सह मिमानः उत्पादयन्। आदित्यगत्यधीनत्वादहोरात्रविभागस्य। तथा जन्मानि जननवन्ति भूतजातानि पश्यन् प्रकाशयन्।

रजस्पृथ्वित्यत्र 'छन्दसि वाप्राम्रेडितयोः' ( पा० ८ । ३ । ४९ ) इति विसर्जनीयस्य सत्वम्। अहा, 'शेश्छन्दसि बहुलम्' इति

(पा० ६ । १ । ७० ) शेर्लोपः । मिमानः, 'माङ् माने' जौहोत्यादिकः । शानचि श्लौ द्विर्भावे 'भृञामित्' (पा० ७। ४।७६) इत्यभ्यासस्येत्वम्। 'श्नाभ्यस्तयोरातः' ( पा० ६ । ४ । ११२ ) इत्याकारलोपः । 'अभ्यस्तानामादिः' (पा० ६ । १ । १८९) इत्यभ्यस्तस्याद्युदात्तत्वम् । जन्मानि, 'जनी प्रादुर्भावे' । 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३ । २ । ७५ ) इति मनिन् । नित्वादाद्युदात्तत्वम् ।

अष्टमीमृचमाह—

मं०—सप्त त्वा हरितो रथे वहन्ति देव सूर्य ।

शोचिष्केशं विचक्षण ॥८॥

प०—सप्त । त्वा । हरितः । रथे । वहन्ति । देव । सूर्य ।

शोचिःऽकेशम् । विऽचक्षण ॥८॥

हे सूर्य देव द्योतमान विचक्षण सर्वस्य प्रकाशयितः सप्त सप्तसंख्याका हरितोऽश्वाः रसहरणशीला रश्मयो वा त्वा त्वां वहन्ति प्रापयन्ति । कीदृशं रथेऽवस्थितमिति शेषः । तथा शोचिष्केशं शोचींषि तेजांस्येव यस्मिन् केशा इव दृश्यन्ते स तथोक्तः । तम् । हरित इत्यादित्याश्वानां संज्ञा, 'हरित आदित्यस्येति' निघण्टावुक्तत्वात् ।

शोचिष्केशं, 'शुच दीप्तौ' । 'अर्चिशुचिहुसृपि' (उ० २ । १०८) इत्यादिना इसिप्रत्ययान्तोऽन्तोदात्तः । स एव बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन शिष्यते । 'नित्यं समासेऽनुत्तरपदस्थस्य' (पा० ८ । ३ । ४५) इति विसर्जनीयस्य षत्वम् ।

नवमीमृचमाह—

म—अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः।

ताभिर्याति स्वयुक्तिभिः ॥९॥

प०—अयुक्त । सप्त । शुन्ध्युवः । सूरः । रथस्य । नप्त्यः ।

ताभिः । याति । स्वयुक्तिऽभिः ॥९॥

सूरः सर्वस्य प्रेरकः सूर्यः शुन्ध्युवः शोधिकाः अश्वस्त्रियः ताहशीः सप्त सप्तसंख्याकाः अयुक्त स्वरथे योजितवान्। कीदृश्यः। रथस्य नप्त्यः न पातयित्र्यः याभिर्युक्ताभी रथो याति न पतति ताहशीभिरित्यर्थः । एवं भूताभिस्ताभिरश्वस्त्रीभिः स्वयुक्ति स्वकीययोजनेन रथे सम्बद्धाभिर्याति यज्ञगृहं प्रत्यागच्छति। अतस्तस्मै हविर्दातव्यमिति वाक्यशेषः।

अयुक्त, 'युजिर् योगे'। स्वरितत्वात् कर्त्रभिप्राये आत्मनेपदम्। लुङि च्लेः सिच्। 'एकाचः'(पा० ७ । २ । १०) इतीट्प्रतिषेधः। 'लिङ् सिचावात्मनेपदेषु' (पा० १ । २ । ११) इति सिचः कित्त्वाल्लघूपधगुणा भावः। 'झलो झलि' ( पा० ८ । २ । २६ ) इति सिचः सकारलोपः। 'चोः कुः' (पा० ८ । २ । ३०) इति कुत्वम्। शुन्ध्युवः, 'शुन्ध विशुद्धौ' 'यजिमनिशुदसिजनिभ्यो युः' ( उ० ३ । २० ) इति युप्रत्ययः । शसि 'तन्वादीनां छन्दसि बहुलमुपसंख्यानम्' (वा० पा० ६ । ४ । ७७) इति उवङादेशः। सूरः, 'पू प्रेरणे'। 'सुसूधाग्रधिभ्यः क्रन्' (उ० २।२४) इति क्रन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम। नप्त्यः, न पातयतीत्यर्थे 'नप्तृनेष्टृ' ( उ० २ । ९६ ) इत्यदिना उणादिषु नप्तृशब्दस्तृजन्तो निपातितः। 'ऋन्नेभ्यो ङीप्' ( पा० ४ । १ । ५ ) इति ङीप्। यणादेशे 'उदात्तयणो हल्पूर्वात्' ( पा० ६ । १ । १७४ ) इति ङीप उदात्तत्वम्। 'सुपां सुलुक् भवन्तीति' ( पा० ७ । १ । ३९ ) शसो जसादेशः । ततो यणादेशे ' उदात्तस्वरितयोर्यणः ' ( पा० ८ । २ । ४ ) इति

स्वरितत्वम् । रेफलोपश्छान्दसः । उक्तं च "द्वौ चापरौ वर्णविकारनाशौ" (काशिका ६ । ३ । १०९) इति । शाखान्तरे ( तै० ब्रा० २।४।५ ) तु 'नप्त्यः' इत्येव पठ्यते । स्वयुक्तिभिः, स्वकीयाः सूर्यसम्बन्धिन्यः युक्तयो योजनानि यासाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।

अवभृथेष्टौ होत्रका जलान्निष्क्रम्य उद्वयं तमसस्परीति मन्त्रं ब्रूयुः । तथा च पत्नीसंयाजैश्चरित्वेति खण्डे सूत्रितम् । उद्वयं तमसस्परीति, उदेत्य ( आश्व० ६ । १३ ) इति ।

तामेतां सूक्ते दशमीमृचमाह—

म०—उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥१०॥

प०—उत् । वयम् । तमसः । परि । ज्योतिः । पश्यन्तः । उत्ऽतरम् ।
देवम् । देवऽत्रा । सूर्यम् । अगन्म । ज्योतिः । उत्ऽतमम् ।१०॥

वयमनुष्ठातारः तमसस्परि तमस उपरि रात्रेरूर्ध्वं वर्तमानं तमसः पापात् परि उपरि वर्तमानं वा पापरहितमित्यर्थः । तथा चाम्नायते 'उद्वयं तमसस्परीत्याह पाप्मा वै तमः पाप्मानमेवास्मादपहन्ति । (तै० सं० ५ । १ । ८ । ६) इति । ज्योतिस्तेजस्विनम् । उत्तरम् उद्गततरम् उत्कृष्टतरं वा । देवत्रा देवेषु मध्ये देवं दानादिगुणयुक्तं सूर्यं पश्यन्तः स्तुतिभिर्हविर्भिश्च उपासीनाः सन्तः उत्तमम् उत्कृष्टतमं ज्योतिः सूर्यरूपम् अगन्म प्राप्नवाम । तथा च श्रूयते, 'अगन्म ज्योतिरुत्तममित्याह असौ वा आदित्यो ज्योतिरुत्तममादित्यस्यैव सायुज्यं गच्छति' (तै०सं ५।१।८ ) इति । युक्तं चैतत् 'तं यथा यथोपासते तदेव भवन्ति' इति

श्रुत्यन्तरात् । तमसस्परि, 'पञ्चम्याः परावध्यर्थे' ( पा० ८।३।५१ ) इति विसर्जनीयस्य सत्वम् । ज्योतिष्पश्यन्तः, 'इसुसोः सामर्थ्ये' ( पा० ८। ३ । ४४ ) इति विसर्जनीयस्य षत्वम् । व्यपेक्षालक्षणं सामर्थ्यं तत्राङ्गीक्रियते । देवत्रा, 'देवमनुष्यपुरुषमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' (पा० ५ । ४ । ५६) इति सप्तम्यर्थे त्राप्रत्ययः । प्रत्ययस्वरः । अगन्म, 'छन्दसि लुङ्लङ्लिटः' ( पा० ३ । ४ । ६ ) इति प्रार्थनायां लङि 'बहुलं छन्दसि' ( पा० २ । ४ । ७३ ) इति शपो लुक् । 'म्वोश्च' (पा० ८।२।६५) इति धातोर्मकारस्य नकारः । अडागम उदात्तः । पादादित्वान्निघाताभावः । उत्तमम्, तमपः पित्त्वादनुदात्तत्वे प्राप्ते 'उत्तमशश्वत्तमौ सर्वत्र' ( ग० सू० ६ । ३१ । १६० ) इत्युञ्छादिषु पाठात् अन्तोदात्तत्वम् ।

उद्यन्नित्ययं तृचो रोगशान्त्यर्थः । तथा चानुक्रमण्यामुक्तम्, 'अन्त्यस्तृचो रोगघ्न उपनिषत्' इति । युक्तं चैतत् । यस्मादनेन तृचेन त्वग्दोषशान्तये प्रस्कण्वः सूर्यमस्तौत् । तेन तृचेन स्तुतः सूर्यः तमृषिं रोगान्निरगमयत् । तस्मादिदानीमपि रोगशान्तये अनेन तृचेन सूर्य उपासनीयः । तदुक्तं शौनकेन—

उद्यन्नद्येति मन्त्रोऽयं सौरः पापप्रणाशनः ।
रोगघ्नश्च विषघ्नश्च भुक्तिमुक्तिफलप्रदः ॥ इति ॥

तृचस्याद्यां सूक्ते एकादशीमृचमाह—

**म०—उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् ।**
**हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥११॥**

प०—उत्ऽयन् । अद्य । मित्रऽमहः । आरोहन् । उत्ऽतराम् ।

दिवम् । हृत्ऽरोगम् । मम । सूर्य । हरिमाणम् । च । नाशय ॥११॥

हे सूर्य सर्वस्य प्रेरक मित्रमहः सर्वेषामनुकूलदीप्तियुक्त अद्यास्मिन् काले उद्यन् उदयं गच्छन् उत्तरां उद्गततरां दिवमन्तरिक्षम् आरोहन् आभिमुख्येन प्राप्नुवन् । यद्वा । दिवमन्तरिक्षम् उत्तरामारोहन् उत्कर्षेण प्राप्नुवन् । एवंविधस्त्वं मम हृद्रोगं हृदयगतमान्तरं रोगं, हरिमाणं शरीरगतकान्तिहरणशीलं वाह्यं रोगम् । यद्वा । शरीरगतं हरिद्वर्णं रोगप्राप्तं वैवर्ण्यमित्यर्थः । तदुभयमपि नाशय । मां स्तोतारम् उभयविधाद्रोगान्मोचयेत्यर्थः ।

मित्रमहः, मित्रमनुकूलं महस्तेजो यस्यासौ । आमन्त्रितनिघातः । उत्तराम् उदित्यनेनोपसर्गेण स्वसंसृष्टधात्वर्थो लक्ष्यते । तस्मादातिशायनिकस्तरप्प्रत्ययः । प्रथमपक्षे अन्तरिक्षविशेषणत्वेन द्रव्यप्रकर्षप्रतीतेराम् न भवति । द्वितीये त्वारोहणक्रियायाः प्रकर्षो गम्यत इति । 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' ( पा० ५ । ४ । ११ ) इत्यामुः । प्रथमपक्षे तमतरपोः पित्त्वादनुदात्तत्वे उपसर्गस्वर एव शिष्यते । द्वितीये तु आम्प्रत्ययस्य सति शिष्टत्वात्तस्यैव स्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् । वृषादिर्वा द्रष्टव्यः । स ह्याकृतिगणः । हृद्रोगं, 'वा शोकष्यञ्रोगेषु' (पा० ६ । ३ । ५१ ) इति हृदयशब्दस्य हृदादेशः । मम, 'युष्मदस्मदोर्ङसि' (पा० ६ । १ । २११) इत्याद्युदात्तत्वम् । हरिमाणं, 'हृञ् हरणे' । 'जनिहृभ्यामिमनिन्' ( उ० ४ । १४८ ) इत्यौणादिक इमनिन्प्रत्ययः । व्यत्ययेनान्तोदात्तत्वम् । यद्वा । हरिच्छब्दस्य वर्णवाचित्वात् 'वर्णदृढादिभ्यः ष्यञ् च' ( पा० ५ । १ । १२३ ) इति चकारादिमनिन्प्रत्ययः । 'इष्टेमेयःसु' इत्यनुवृत्तौ 'टेः' ( पा० ६ । ४ । १५५ ) इति टिलोपः ।

द्वादशीमृचमाह—

म०—शुकेषु मे हरिमाणं रोपणाकासु दध्मसि ।

अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि ॥१२॥

प०—शुकेषु । मे । हरिमाणम् । रोपणाकासु । दध्मसि ।

अथो इति हारिद्रवेषु । मे । हरिमाणम् । नि । दध्मसि ॥१२॥

ता० मे मदीयं हरिमाणं शरीरगतं हरिद्वर्णस्य भावं शुकेषु तादृशं वर्णं कामयमानेषु पक्षिषु । तथा रोपणाकासु शारिकासु पक्षिविशेषेषु दध्मसि स्थापयामः । अथो अपि च हारिद्रवेषु हरितालद्रुमेषु तादृग्वर्णवत्सु मे मदीयं हरिमाणं नि दध्मसि निदधीमहि । स च हरिमा तत्रैव सुखेनास्ताम् अस्मान् मा बाधिष्टेत्यर्थः ।

दध्मसि, 'इदन्तोमसिः' (पा० ७।१।४६) इति मस इकारागमः ।

त्रयोदशीमृचमाह—

म०—उदगादयमादित्यो विश्वेन सहसा सह ।

द्विषन्तं मह्यं रन्धयन्मो अहं द्विषते रधम् ॥१३॥

प०—उत् । अगात् । अयम् । आदित्यः । विश्वेन । सहसा ।

सह । द्विषन्तम् । मह्यम् । रन्धयन् । मो इति । अहम् ।

द्विषते । रधम् ॥१३॥

अयं पुरोवर्ती आदित्यः अदितेः पुत्रः सूर्यः विश्वेन सहसा सर्वेण बलेन सह उदगात् उदयं प्राप्तवान् । किं कुर्वन् । मह्यं द्विषन्तं रन्धयन् ममोपद्रवकारिणं रोगं हिंसन् । अपि च अहं द्विषते अनिष्टकारिणे रोगाय मो रधम् नैव हिंसां करोमि । सूर्य एव अस्म-

दनिष्टकारिणं रोगं विनाशयत्वित्यर्थः ।

अगात्, एतेर्लुङि 'इणो गा लुङि' ( पा० २ । ४ । ४५ ) इति गादेशः । 'गातिस्था' (पा० २।४।७७) इति सिचो लुक् । आदित्यः, 'दित्य-दित्यादित्य' ( पा० ४।१।८५ ) इत्यपत्यार्थे प्राग्दीव्यतीयो ण्यप्रत्ययः । रन्धयन्, 'रध हिंसासंराद्ध्योः' । ण्यन्ताल्लटः शतृ । 'रधिजभोरचि' (पा० ७ । १ । ६१ ) इति णौ धातोर्नुमागमः । मो, मा उ निपातद्वय-समुदायो मैवेत्यस्यार्थे । 'ओत्' ( पा० १ । १ । १५ ) इति प्रगृह्यत्वे 'प्लुतगृह्या अचि' ( पा० ६।१।१२५ ) इति प्रकृतिभावः । द्विषते, 'शतुर-नुमः' (पा० ६ । १ । १७३ ) इति विभक्तेरुदात्तत्वम् । रधम्, रधेर्लुङि पुषादित्वात् च्लेरङादेशः। 'रधिजभोरचि' इति धातोर्नुम्। 'अनिदिताम्' (पा० ६ । ४ । २४) इत्यनुषङ्गलोपः । 'न माङ्योगे' (पा० ६ । ४ । ७४) इत्यडभावः ।



# अथ दशोत्तरशततमं सूक्तम्

## संग्रहे सप्तमं सूक्तम् ।



ततं म इति नवर्चं पञ्चमं सूक्तम् । कुत्सस्यार्षम् ऋभुदेवताकम् । पञ्चमी-नवम्यौ त्रिष्टुभौ । शिष्टाः सप्त जगत्यः । तथा चानुक्रान्तम्—'ततं नवार्भवं तु पञ्चम्यन्त्ये त्रिष्टुभौ इति । अभिप्लवषडहस्य चतुर्थेऽहनि वैश्वदेवशस्त्रे इदमार्भवं निविद्धानम् । सूत्रितं च तृतीयस्येति खण्डे । ततं मे अप इति वैश्वदेवम् ( आश्व० ७ । ७ ) इति ।

तत्र प्रथमामृचमाह—

म०—ततं मे अपस्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते । अयं समुद्र इह विश्वदेव्यः स्वाहाकृतस्य समु तृप्णुत ऋभवः ॥१॥

प—ततम् । मे । अपः । तत् । ऊम् इति । तायते । पुनरिति । स्वादिष्ठा । धीतिः । उचथाय । शस्यते । अयम् । समुद्रः । इह । विश्वऽदेव्यः । स्वाहाकृतस्य । सम् । ऊम् इति । तृप्णुत । ऋभवः ॥ १ ॥

हे ऋभवः मे मया अपः अग्निष्टोमादिरूपं कर्म ततं विस्तारितं बहुशः पूर्वमनुष्ठितम्। तदु तदेव पुनस्तायते विस्तार्यते अनुष्ठीयत इत्यर्थः। तत्र स्वादिष्ठा स्वादुतमा अतिशयेन प्रीतिकरी धीतिः स्तुतिश्च उचथाय स्तुत्याय शस्यते पठ्यते। अपि च इहास्मिन् यागे समुद्रः समुन्दनशीलोऽयं सोमरसः विश्वदेव्यः सर्वेभ्यो देवेभ्यः पर्याप्तो यथा भवति तथा सम्पादितः। तस्य स्वाहाकृतस्य स्वाहाकारेणाग्नौ प्रक्षिप्तस्य सोमस्य पानेन समुतृप्णुत सम्यगेव तृप्ता भवत।

ततम्, 'तनु विस्तारे'। निष्ठायां 'यस्य विभाषा'(पा० ७।२।१५)इतीट्प्रतिषेधः। 'अनुदात्तोपदेश' (पा० ६।४।३७) इत्यादिना अनुनासिकलोपः। अपः, 'आप्लृ व्याप्तौ'। 'आपः कर्माख्यायां ह्रस्वो नुट् च वा' (उ० ४।२०७) इत्यसुन्, धातोर्ह्रस्वश्च। तायते, 'तनोतेर्यकि' (पा० ६।४।४४) इत्यात्वम्। स्वादिष्ठा, स्वादुशब्दादातिशायनिक इष्ठन्। 'टेः' (पा० ६।४।१५५) इति टिलोपः। उचथाय, 'वच परिभाषणे'। औणादिकोऽथक्प्रत्ययः। 'वचिस्वपि' इत्यादिना सम्प्रसारणम्। समुद्रः, 'उन्दी क्लेदने'। 'स्फायितञ्चि' (उ० १।१०७) इत्यादिना रक्। 'अनिदिताम्' (पा० ६।४।२४) इति नलोपः। विश्वदेव्यः, देवार्हो भागो देव्यः, 'छन्दसि च' (पा० ५।१।६७) इति यप्रत्ययः। विश्वे सर्वे देव्या यस्मिन् सोमे। 'बहुव्रीहौ विश्वं संज्ञायाम्' (पा० ६।२।१०६) इति व्यत्ययेन असंज्ञायामपि पूर्वपदान्तोदात्तत्वम्। स्वाहाकृतस्य, स्वाहाशब्दस्य ऊर्यादित्वेन गतित्वात् (पा० १।४।६१)। 'गतिरनन्तरः' (पा० ६।२।४९) इति पूर्वपदप्रकृतिस्वरत्वम्। तृप्णुत, 'तृप प्रीणने'। 'स्वादिभ्यः श्नुः' (पा० ३।१।३७)। ऋभव इत्यनेन संहितायाम् 'ऋत्यकः' (पा० ६।१।१२८) इति प्रकृतिभावः।

द्वितीयामृचमाह—

म०—आभोगयं प्र यदिच्छन्त ऐतनापाकाः प्राञ्चो मम केचिदापयः। सौधन्वनासश्चरितस्य भूमनागच्छत सवितुर्दाशुषो गृहम् ॥ २ ॥

प०—आऽभोगयम्। प्र। यत्। इच्छन्तः। ऐतन। अपाकाः। प्राञ्चः।
मम। के। चित्। आपयः। सौधन्वनासः। चरितस्य। भूमना।
अगच्छत। सवितुः। दाशुषः। गृहम्॥ २॥

हे ऋभवः अपाकाः परिपक्वज्ञानाः प्राञ्चः पूर्वकालीना मम आपयः प्रापयितारो मदीया ज्ञातयः के चित् एवंभूता ये केचन यूयम् आभोगयम् उपभोग्यं सोमम् इच्छन्तः यद्यदा प्रैतन तपश्चरितुमरण्यं गतवन्तः। ऋभवो हि सुधन्वन आङ्गिरसस्य पुत्राः। तदुक्तं यास्केन 'ऋभुर्विभ्वा वाज इति सुधन्वनः आङ्गिरसस्य त्रयः पुत्रा बभूवुः' (निरु० ११। १६) इति। कुत्सोऽप्याङ्गिरसः। अतस्तेन मदीया ज्ञातय इत्युक्तम्। हे सौधन्वनासः सुधन्वनः पुत्राः तदानीं चरितस्य समुपार्जितस्य तपसः भूमना भूम्ना बहुत्वेन दाशुषः हवींषि दत्तवतः सवितुः सोमाभिषवं कुर्वतो यजमानस्य सम्बन्धि यज्ञगृहमगच्छत। तपसा लब्धसोमाः सन्तः कृतपाना यूयं गतवन्तः। यद्वा, दाशुषः प्रातःसवनादिष्वग्न्यादिभिरपसारितेभ्यो ऋभुभ्यः सोमपानं दत्तवतः सवितुर्गृहं निवासस्थानं तृतीयसवनाख्यम् अगच्छत प्राप्ताः। एतत्सर्वमार्भवं शंसतीत्यादौ (ऐ० ब्रा० ३। ३०) विस्पष्टमाम्नातम्।

आभोगयम्, आ समन्ताद्भोग आभोगः। तदर्हं आभोगयः। 'छन्दसि च' (पा० ५।१।६७) इति यः। 'यस्य' (पा० ६।४।१४८) इति लोपाभावश्छान्दसः। व्यत्ययेन प्रत्ययात् पूर्वस्योदात्तत्वम्। यद्वा आङ्पूर्वाद्भुजेरौणादिकः कर्मणि इप्रत्ययः कुत्वं च। असि व्यत्ययेन गुणः। ऐतन, 'इण् गतौ'। लङि मध्यमबहुवचनस्य थस्य तादेशः। 'तप्तनप्तनथनाश्च' (पा० ७। १। ४५) इति तस्य तनबादेशः। आडागमो वृद्धिश्च। आपयः, आप्नोतेरौणादिक इप्रत्ययः। भूमना, बहुशब्दात् पृथ्वादिलक्षण इमनिच् (पा० ५। १। १२२)। बहोर्लोपो भू च 'बहोः'

(पा० ६ । ४ । १५८ ) इतीएकारलोपो बहोर्भूभावश्च । संज्ञापूर्वकस्य विधेरनित्यत्वादल्लोपाभावः ।

तृतीयामृचमाह—

मं०—तत्सविता वोऽमृतत्वमासुवदगोह्यं यच्छ्रवयन्त ऐतन । त्यं चिच्चमसमसुरस्य भक्षणमेकं सन्तमकृणुता चतुर्वयम् ॥ ३ ॥

प०—तत् । सविता । वः । अमृतऽत्वम् । आ । असुवत् । अगोह्यम् । यत् । श्रवयन्तः । ऐतन । त्यम् । चित् । चमसम् । असुरस्य । भक्षणम् । एकम् । सन्तम् । अकृणुत । चतुःऽवयम् ॥३॥

हे ऋभवः तत् तदानीं सविता सर्वस्य प्रेरको देवो वो युष्माकम् अमृतत्वं देवत्वम् आसुवत् आभिमुख्येन प्रेरितवान् दत्तवानित्यर्थः । यद्यदा यूयमगोह्यं गूहितुमशक्यं सर्वैर्दृश्यमानं सवितारं श्रवयन्तः अपेक्षितं सोमपानं विज्ञापयन्तः सन्तः ऐतन=आगच्छत । तदानीमिति पूर्वेणान्वयः । यस्माद्यूयं देवैराज्ञापिताः सन्तः असुरस्य त्वष्टुः संबन्धिनं तेन निर्मितमित्यर्थः । भक्षणं सोमपानसाधनं त्यं तं चमसम् एकं चित् असहायमेव सन्तं चतुर्वयं चतुर्व्यूहं अकृणुत कृतवन्तः । सृष्ट्यादौ त्वष्ट्रा कृतं चमसं होतृचमसादिमुख्यचमसचतुष्टयरूपेण ऋभवः कृतवन्त इत्यर्थः ।

असुवत्, 'षू प्रेरणे'। तौदादिकः । श्रवयन्तः, 'श्रु श्रवणे'। छान्दसो वृद्ध्यभावः । ऐतन, लङि मध्यमबहुवचनस्य तादेशे 'तप्तनप्तनथनाश्च' ( पा० ७ । १ । ४५ ) इति तनबादेशः । भक्षणम्, करणे ल्युट् । अकृणुत, 'कृवि हिंसाकरणयोश्च'। लङि मध्यमबहुवचने 'धिन्विकृण्व्योरच' ( पा० ३ । १ । ८० ) इत्युप्रत्ययः । चतुर्वयम्, वया अवयवाः । चत्वारोऽवयवा यस्य स तथोक्तः ।

चतुर्थीमृचमाह—

म०—विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः। सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः ॥ ४ ॥

प०—विष्ट्वी। शमी। तरणिऽत्वेन। वाघतः। मर्तासः। सन्तः। अमृतऽत्वम्। आनशुः। सौधन्वनाः। ऋभवः। सूरऽचक्षसः। संवत्सरे। सम्। अपृच्यन्त। धीतिऽभिः ॥४॥

वाघतः ऋत्विङ्नामैतत्। अत्र च सामर्थ्यात्तद्वन्तो लक्ष्यन्ते। ऋत्विग्भिरुपेता ऋभवः। शमी कर्मनामैतत्। यागदानादीनि कर्माणि, अन्यान्यपि 'एकं चमसं चतुरः कृणोतन' (ऋ० सं० १। १६१। २) इत्यादिना देवैरुक्तानि कर्माणि तरणित्वेन। तरणिरिति क्षिप्रनाम। क्षिप्रत्वेन शैघ्र्येण विष्ट्वी। यद्यप्येतत् कर्मनाम तथाप्यत्र क्रियापरं व्याप्य कृत्वेत्यर्थः। एवं कर्माणि कृत्वा मर्तासो मनुष्या अपि सन्तः अमृतत्वं देवत्वं आनशुः आनशिरे कृतैः कर्मभिर्लेभिरे। देवत्वं प्राप्य च सौधन्वनाः सुधन्वनः पुत्राः सूरचक्षसः सूर्यसमानप्रकाशाः सूर्यसदृशज्ञाना वा ते ऋभवः संवत्सरे संवत्सरावयवभूते वसन्तादिकाले अनुष्ठेयैर्धीतिभिरग्निष्टोमादिकर्मभिः समपृच्यन्त संयुक्ता अभवन् हविर्भागार्हा बभूवुरित्यर्थः।

अत्र निरुक्तम्

कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्तासः सन्तो अमृतत्वमानशिरे सौधन्वना ऋभवः सूरख्याना वा सूरप्रज्ञा वा संवत्सरे समपृच्यन्त धीतिभिः कर्मभिः ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः (नि० ११। १६) इति।

विष्ट्वी, 'विष्लृ व्याप्तौ'। 'स्नात्व्यादयश्च' ( पा० ७ । १ । ४९ ) इति क्त्वाप्रत्ययस्य ईकारान्तादेशः । शमी, 'सुपां सुलुक्' ( पा० ७ । १।३९) इति शसो लुक् । आनशुः, 'अशू व्याप्तौ' । व्यत्ययेन परस्मैपदम् । 'अश्नोतेश्च' ( पा० ७ । ४ । ७२ ) इत्यभ्यासादुत्तरस्य नुडागमः । अपृच्यन्त, 'पृची संपर्के' कर्मणि लङ् ।

पञ्चमीमृचमाह—

म०—क्षेत्रमिव वि ममुस्तेजनेनँ एकं पात्रमृभवो जेहमानम् । उपस्तुता उपमं नाधमाना अमर्त्येषु श्रव इच्छमानाः ॥ ५ ॥

प०—क्षेत्रम्ऽइव । वि । ममुः । तेजनेन । एकम् । पात्रम् । ऋभवः । जेहमानम् । उपऽस्तुताः । उपऽमम् । नाधमानाः । अमर्त्येषु । श्रवः । इच्छमानाः ॥५॥

उपस्तुताः समीपस्थैः ऋषिभिः स्तुताः ऋभवः जेहमानं होमक्रियां प्रति प्रयतमानम् एकमसहायं पात्रं पानसाधनं त्वष्ट्रा निर्मितं चमसं मानदण्डेन क्षेत्रमिव भूमिमिव तेजनेन तीक्ष्णेन शस्त्रेण चमसचतुष्टयरूपेण कर्तुं वि ममुः विशेषेण मानं कृतवन्तः । किमिच्छन्तः । उपमं सर्वेषामुपमानभूतं प्रशस्तं सोमलक्षणमन्नं नाधमाना याचमानाः । एतदेव विवृणोति अमर्त्येषु मरणरहितेषु देवेषु मध्ये श्रवो हविर्लक्षणमन्नम् । इच्छमानाः इच्छन्तो, देवैः सह सोमपानं कामयमानाः तल्लाभाय चतुरश्चमसानकार्षुरित्यर्थः ।

ममुः, 'माङ् माने शब्दे च' । व्यत्ययेन परस्मैपदम् । तेजनेन, 'अणोऽप्रगृह्यस्यानुनासिकः' (पा० ८ । ४ । ५७) इत्यनवसाने व्यत्ययेनाकारस्यानुनासिक्यम् । ईषा, अक्षादित्वात् (वार्ति ६।१।१२७)

प्रकृतिभावः। जेहमानम्, 'वेहृ जेहृ वाहृ प्रयत्ने'। सौवादिकः। अनुदात्तेत्त्वादात्मनेपदम्। उपस्तुताः, 'गतिरनन्तरः' ( पा० ६। २। ४९ ) इति गतेः प्रकृतिस्वरत्वम्। उपमम्, 'माङ् माने' 'आतश्चोपसर्गे' ( पा० ३। १। १३६ ) इति कप्रत्ययः। इच्छमानाः, व्यत्ययेनात्मनेपदम्।

षष्ठीमृचमाह—

म०—आ मनीषामन्तरिक्षस्य नृभ्यः स्रुचेव घृतं जुहवाम विद्मना। तरणित्वा ये पितुरस्य सश्चिर ऋभवो वाजमरुहन्दिवो रजः ॥६॥

प०—आ। मनीषाम्। अन्तरिक्षस्य। नृऽभ्यः। स्रुचाऽइव। घृतम्। जुहवाम। विद्मना। तरणिऽत्वा। ये। पितुः। अस्य। सश्चिरे। ऋभवः। वाजम्। अरुहन्। दिवः। रजः॥६॥

अन्तरिक्षस्य अन्तरिक्षलोकस्य मध्यमस्थानस्य संबन्धिभ्यो नृभ्यः यज्ञस्य नेतृभ्यः ऋभुभ्यः। ऋभवो हि यज्ञस्य नेतारः। तेन हि देवत्वं प्राप्ताः। यद्वा। अन्तरिक्षस्य लोकस्य नेतृभ्यः। मध्यमे स्थाने ह्येते पठ्यन्ते। तादृशेभ्यः स्रुचेव यथा स्रुचा जुह्वा घृतं क्षरणशीलाज्योपेतं हविः आ जुहवाम। मर्यादायामाकारः। यथाशास्त्रं प्रयच्छाम। एवमेव मनीषां स्तुतिं विद्मना वेदनेन ज्ञानेन कुर्म इति शेषः। अपि च ये ऋभवः पितुः सर्वस्य जगतः पालकस्यास्य सूर्यस्य तरणित्वा तरणित्वानि तरणकौशलानि सश्चिरे सूर्यरश्मिभूताः सन्तः प्रापुः। तदुक्तम्—'आदित्यरश्मयो-

ऋभव उच्यन्ते' ( निरु० ११ । १६ ) इति । ते ऋभवः दिवो रजः । रजःशब्दो लोकवाची । द्योतमानस्य स्वर्गाख्यस्य लोकस्य सम्बन्धिनं वाजं सोमलक्षणमन्नम् अरुहन् । यागदानादिभिः कर्मभिः अन्यैश्च वेदोक्तैश्चमसचतुष्टयकरणादिकैः प्राप्नुवन् ।

स्रुचेव, 'सावेकाचः' ( पा० ६ । १ । १६८ ) इति विभक्तेरुदात्तत्वम् । जुहवाम, 'हु दानादनयोः' । लोटि 'आडुत्तमस्य पिच्च' ( पा० ३ । ४ । ९२ ) इति आडागमः । विद्मना, 'विद ज्ञाने' औणादिको मनिः । 'न संयोगाद्वमन्तात्' ( पा० ६ । ४ । १३७ ) इत्यल्लोपाभावः । तरणित्वा, 'तॄ प्लवनसंतरणयोः'। 'अर्तिसृभृधृधम्यश्यवितृभ्योऽनिः' (उ० २ । १०२) इति कर्तर्यनिप्रत्ययः । तस्य भावस्तरणित्वम् । 'शेश्छन्दसि बहुलम्' (पा० ६ । १ । ७०) इति शेर्लोपः । सश्चिरे, 'ग्लुञ्च षस्ज गतौ' इत्यत्र सश्चिमप्येके पठन्ति । व्यत्ययेनात्मनेपदम् । द्विर्वचनप्रकरणे 'छन्दसि वेति वक्तव्यम्' (वार्त्ति० ६ । १ । ८) इति वचनात् द्विर्वचनाभावः । इरेचश्चित्वादन्तोदात्तत्वम् । 'यद्वृत्तान्नित्यम्' ( पा० ८।१।६६ ) इति निघातप्रतिषेधः । अरुहन्, 'रुह बीजजन्मनि प्रादुर्भावे च'। लुङि 'कृमृदृरुहिभ्यश्छन्दसि' (पा० ३ । १ । ५९) इति च्लेरङादेशः । दिवः, 'ऊडिदम्' ( पा० ६ । १ । १७१ ) इत्यादिना विभक्तेरुदात्तत्वम् । रजः, 'रञ्ज रागे' रजन्त्यस्मिन्निति रजो लोकः । तदुक्तम् 'लोका रजांस्युच्यन्ते' ( नि० ४ । १९) इति । औणादिकोऽधिकरणेऽसुन्। 'रजकरजनरजःसूपसंख्यानम्' ( वार्ति० ६ । ४ । ३४ ) इति नलोपः । 'सुपां सुलुक्' (पा० ७ । १ । ३९ ) इति षष्ठ्या लुक् ।

सप्तमीमृचमाह—

म०—ऋभुर्न इन्द्रः शवसा नवीयानृभुर्वाजेभिर्वसुभिर्वसुर्ददिः । युष्माकं देवा अवसाहनि प्रिये३

भि तिष्ठेम पृत्सुतीरसुन्वताम् ॥ ७ ॥

प०—ऋभुः । नः । इन्द्रः । शवसा । नवीयान् । ऋभुः । वाजेभिः । वसुऽभिः । वसुः । ददिः । युष्माकम् । देवाः । अवसा । अहनि । प्रिये । अभि । तिष्ठेम । पृत्सुतीः । असुन्वताम् ॥ ७ ॥

ऋभुर्विभ्वा वाज इति त्रयः सुधन्वनः पुत्राः । तत्र शवसा बलेन नवीयान् नवतरः प्रशस्ततरः ऋभुर्नोऽस्माकम् इन्द्रः परमेश्वरः अस्माकं रक्षक इत्यर्थः । यद्वा । इन्द्र एव प्रसङ्गादुरु भातीति नैरुक्तव्युत्पत्त्या (नि० ११ । १५) ऋभुरिति स्तूयते । अपि च वाजेभिः वाजैः अस्मभ्यं दातव्यैरन्नैः वसुभिः निवासहेतुभिः धनैश्च ऋभुर्वसुरस्माकं निवासयिता । अत एव ददिः तेषामन्नानां धनानां च दाता भवतु । परोऽर्धर्चः प्रत्यक्षकृतः । हे देवा दानादिगुणयुक्ता ऋभुप्रभृतयः युष्माकं सम्बन्धिना अवसा रक्षणेन युक्ते प्रिये अस्माकमनुकूले अहनि दिवसे वर्तमाना वयम् असुन्वतां सुन्वद्यजमानविरोधिनां शत्रूणां पृत्सुतीः सेना अभि तिष्ठेम ।

नवीयान्, नवशब्दादातिशायनिक ईयसुन् । वाजेभिः, 'बहुलं छन्दसि' (पा० ७ । १ । १०) इति भिस ऐसभावः । वसुः, 'वस निवासे' । अस्मादन्तर्भावितण्यर्थात् 'शृस्वृस्निहि' (उ० १।१०) इत्यादिना उप्रत्ययः । निदित्यनुवृत्तेराद्युदात्तत्वम् । ददिः, 'डुदाञ् दाने', 'आदृगमहन' (पा० ३ । २ । १७१) इति किप्रत्ययः । लिड्वद्भावाद्द्विर्भावादि । 'आतो लोप इति च' (पा० ६ । ४ । ६४) इत्याकारलोपः ।

अष्टमीमृचमाह—



म०—निश्चर्मण ऋभवो गामपिंशत सं वत्सेनासृ-

जता मातरं पुनः । सौधन्वनासः स्वपस्यया

नरो जिव्री युवाना पितराकृणोतन ॥ ८ ॥

प०—निः । चर्मणः । ऋभवः । गाम् । अपिंशत । सम् । वत्सेन ।

असृजत । मातरम् । पुनरिति । सौधन्वनासः । सुऽअपस्यया ।

नरः । जिव्री इति । युवाना । पितरा । अकृणोतन ॥८॥

पुरा कस्यचिदृषेर्धेनुर्मृता । स ऋषिस्तस्या धेनोर्वत्सं दृष्ट्वा ऋभून् तुष्टाव । ऋभवस्तत्सदृशीमन्यां धेनुं कृत्वा तदीयेन चर्मणा संवीय तेन वत्सेन समयोजयन्निति । अयमर्थः पूर्वार्धे प्रतिपाद्यते । हे ऋभवः यूयं चर्मणः चर्मणा त्वचा । तृतीयार्थे षष्ठी । गां धेनुं निरपिंशत निःशेषेणाश्लिष्टां संयुक्तामकुरुत । तदनन्तरं मातरं तां गां पुनर्वत्सेन समसृजत संसृष्टामकुरुत समगमयतेति यावत् । अपि च हे सौधन्वनासः सुधन्वन आङ्गिरसस्य पुत्रा नरो यज्ञस्य नेतार ऋभवः स्वपस्यया शोभनकर्मेच्छया यागदानाद्याचरणेनेति यावत् । जिव्री जीर्णौ वृद्धौ पितरा मातापितरौ युवाना पुनर्यौवनोपेतौ अकृणोतन यूयमकुरुत ।

अपिंशत, 'पिश अवयवे' । तौदादिकः । 'शे मुचादीनाम्' (पा० ७।१।५९) इति नुम् । सौधन्वनासः, सुधन्वनः पुत्राः सौधन्वनाः । 'अन्' (पा० ६ । ४ । १६७) इति प्रकृतिभावः । 'आज्जसेरसुक्' (पा० ७ । १ । ५०) । 'आमन्त्रितस्य च' (पा० ६ । १ । १९८) इत्याद्युदात्तत्वम् । स्वपस्यया शोभनमपः स्वपः तदिच्छा स्वपस्या । 'सुप आत्मनः क्यच्' (पा० ३ । १ । ८) । 'अ प्रत्ययात्' (पा० ३ । ३ । १०२) इति भावे अकारप्रत्ययः । जिव्री, 'जॄष् वयोहानौ' । 'जॄशॄस्तॄजागृभ्यः क्विन्' (उ० ४।५४) । 'ॠत इद्धातोः'

(पा० ७।१।१००) इतीत्वम् । रेफवकारयोः स्थानविपर्ययः । *बहुलवचनात् । 'हलि च' (पा० ८ । २ । ७७) इति दीर्घाभावः । नित्त्वादाद्युदात्तत्वम् । युवाना, 'सुपां सुलुक्' (पा० ७।१।३९) इति विभक्तेराकारः । पितरा; पिता च माता च पितरौ । 'पिता मात्रा' ( पा० १ । २ । ७० ) इति पिता शिष्यते । पूर्ववद्विभक्तेराकारः । अकृणोतन, 'कृवि हिंसाकरणयोश्च' । इदित्त्वान्नुम् । 'धिन्विकृण्व्योर च' ( पा० ३ । १ । ८० ) इत्युप्रत्ययः । तत्सन्नियोगेन वकारस्य चाकारः । अतो लोपे सति तस्य स्थानिवद्भावाल्लघूपधगुणाभावः । लङ्मध्यमबहुवचनस्य तशब्दस्य 'तप्तनप्तनथनाश्च' ( पा० १ । ७ । ४५ ) इति तनबादेशः । तस्य पित्त्वेन ङित्त्वाभावादगुणः ।

नवमीमृचमाह—

म०—वाजेभिर्नो वाजसातावविड्ढ्यृभुमाँ इन्द्र चित्रमा दर्षि राधः । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ९ ॥

प०—वाजेभिः । नः । वाजऽसातौ । अविड्ढि । ऋभुऽमान् । इन्द्र । चित्रम् । आ । दर्षि । राधः । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥९॥

हे इन्द्र ऋभुमान् । ऋभुर्विभ्वा वाज इति त्रयोऽप्यृभुशब्देनोपचारादत्रोच्यन्ते । तैर्युक्तस्त्वं वाजसातौ वाजस्यान्नस्य संभजने निमित्तभूते सति वाजेभिरन्नैरविड्ढि अस्मान् व्याप्नुहि । यद्वा । वाजसातिरिति

* मैक्समूलरमहाशयसंपादितपुस्तके तु 'बहुलवचनात्' इत्यस्य दीर्घाभावे हेतुताऽङ्गीकृता । तथा च वर्णविपर्यये हेतुश्चिन्त्यः । वर्णविपर्यये हेतुऽङ्गीकारे तु दीर्घाभावेप्यनुवर्तनीयमेव । वलोपवारणामपि तद्धेतुकमधिकमङ्गीकरणीयम्

सङ्ग्रामनाम । वाजसातौ संग्रामे वाजेभिर्वेजनयुक्तैरश्वैः अविड्ढि अस्मान् रक्ष । अपि च चित्रं चायनीयं राधो धनम् आदर्षि अस्मभ्यं दातुमाद्रियस्व । तृतीयसवने ऋभुभिः सहेन्द्रस्यावस्थानात् प्रसङ्गादत्रेन्द्रस्तुतिः । यदेतदस्माभिः प्रार्थितमस्मदीयं तत् मित्रादयो ममहन्ताम् पूजयन्ताम् ।

वाजसातौ, 'वन षण सम्भक्तौ' । भावे क्तिन् । 'जनसनखनां सञ्झलोः' (पा० ६ । ४ । ४२) इत्यात्वम् । वाजानां सातिर्यस्मिन् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अविड्ढि, 'विष्लृ व्याप्तौ' । लोटो हिः । 'बहुलं छन्दसि' (पा० २ । ४ । ७६) इति शपो लुक् । 'हुझल्भ्यो हेर्धिः' (पा० ६।४।१०१) । ष्टुत्वजश्त्वे । 'छन्दस्यपि दृश्यते' (पा० ६ । ४ । ७३) इति दृशिग्रहणात् लोट्यडागमः । यद्वा । अवतेर्लोटि 'सिब्बहुलं लेटि' (पा० ३ । १ । ३४) इति बहुलवचनात् विकरणः सिप् । तस्यार्द्धधातुकत्वादिट् । 'आदेशप्रत्यययोः' ( पा० ८ । ३ । ५९ ) इति षत्वम् । धित्वादि पूर्ववत् । ऋभुमान्, 'ह्रस्वनुड्भ्यां मतुप्' (पा० ६ । १ । १७६) इति मतुप उदात्तत्वम् । दर्षि, 'दृङ् आदरे' । लोटि व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि' (पा० २ । ४ । ७३) इति विकरणस्य लुक् ।

———

# त्रयोदशोत्तरैकशततमं सूक्तम्

( संग्रहे अष्टमं सूक्तम् )



यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

इत्थं सप्तममध्यायं व्याख्याय अष्टमोऽध्यायो व्याख्यातुमारभ्यते। प्रथमे मण्डले षोडशेऽनुवाके सप्त सूक्तानि गतानि । इदमिति विंशत्यृचमष्टमं सूक्तम् । अत्रानुक्रम्यते—इदं विंशतिरुषस्यं द्वितीयोऽर्धर्चो रात्रिश्चेति । ऋषिश्चान्यस्मादिति परिभाषयानुवृत्तेराङ्गिरसः कुत्स ऋषिः । अनादेशपरिभाषया त्रिष्टुप्छन्दः । उषा देवता । द्वितीयार्धर्चस्य रात्रिरपि । प्रातरनुवाके उषस्ये क्रतौ त्रैष्टुभे छन्दस्येतत्सूक्तम् । सूत्रितं च 'इदं श्रेष्ठं पृथू रथ इति सूक्ते (आश्व० ४ । १४) इति । आश्विनशस्त्रे चेदं सूक्तं प्रातरनुवाकातिदेशात् ।

तत्र प्रथमामृचमाह—

म०—इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः
प्रकेतो अजनिष्ट विभ्वा । यथा प्रसूता सवितुः
सवायँ एवा रात्र्युषसे योनिमारैक् ॥ १ ॥

प०—इदम् । श्रेष्ठम् । ज्योतिषाम् । ज्योतिः । आ । अगात् । चित्रः । प्रऽकेतः । अजनिष्ट । विऽभ्वा । यथा । प्रऽसूता । सवितुः । सवाय । एव । रात्री । उषसे । योनिम् । अरैक् ॥ १ ॥

ज्योतिषां ग्रहनक्षत्रादीनां द्योतमानानां मध्ये इदम् उषआख्यं ज्योतिः श्रेष्ठं प्रशस्यतमम्। अस्य कोऽतिशय इति चेत् उच्यते। नक्षत्रादिकं ज्योतिः स्वात्मानमेव प्रकाशयति नान्यत्। चन्द्रस्तु यद्यप्यन्यत् प्रकाशयति तथापि न विस्पष्टप्रकाशः। औषसं तु ज्योतिर्युगपदेव सर्वस्य जगतोऽन्धकारनिराकरणेन विशेषेण प्रकाशकम्। अतः प्रशस्यतममित्यर्थः। तादृशं ज्योतिः आगात् पूर्वस्यां दिश्यागमत्। आगते च तस्मिन् चित्रश्चायनीयः प्रकेतः अन्धकारावृतस्य सर्वस्य पदार्थस्य प्रज्ञापकस्तदीयो रश्मिः विभ्वा विभुर्व्याप्तः सन्नजनिष्ट प्रादुरभूत्। किञ्च यथा रात्री रात्रिः स्वयं सवितुः सूर्यसकाशात् प्रसूता उत्पन्ना। सूर्यो ह्यस्तं गच्छन् रात्रिं जनयति। तस्मिन्ननस्तमिते रात्रेरुत्पत्त्यभावात्। एवमेव रात्रिरपि उषसे सवाय उषस उत्पत्तये तदर्थं योनिं स्थानं स्वकीयापरभागलक्षणम् अरैक् आरेचितवती कल्पितवतीत्यर्थः। यद्वा। प्रसूता रात्रिसकाशादुत्पन्ना उषाः सवितुः सूर्य्यस्य सवाय प्रसवाय जन्मने यथा भवति एवं रात्रिरपि उषसे उषसो यज्जन्म तदर्थं योनिं स्वापरभागलक्षणं स्थानं कृतवती।

अत्र—निरुक्तम् 'इदं श्रेष्ठं ज्योतिषां ज्योतिरागमत् चित्रं प्रकेतनं प्रज्ञाततममजनिष्ट विभूततमं यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्यैवं रात्र्युषसे योनिमरिचत्स्थानम्' (नि० २। १९) इति।

श्रेष्ठम्, प्रशस्यशब्दादातिशायनिक इष्ठन्। 'प्रशस्यस्य श्रः' (पा० ५। ३। ६०) इति श्रादेशः। 'प्रकृत्यैकाच्' (पा० ६। ४। १६३) इति प्रकृतिभावाट्टिलोपाभावः। अगात्, एतेर्लुङि 'इणो गा लुङि' (पा० २। ४। ४५) इति गादेशः। 'गातिस्था' (पा० २। ४। ७७) इति सिचो लुक्। प्रकेतः, 'कित ज्ञाने'। अन्तर्भावितण्यर्थात् कर्मणि घञ्। 'थाथा' (पा० ६। २। १४४) आदिना उत्तरपदान्तोदात्तत्वम्। अजनिष्ट, 'जनी प्रादुर्भावे'। लुङि सिच इडागमः। विभ्वा, 'विप्रसंभ्यो ड्वसंज्ञायाम्' (पा० ३।२।१८०) इति भवतेर्डुप्रत्ययः। 'सुपां सुलुक्' (पा० ७।१।३९)

इत्यादिना सोराकारादेशः । 'ओः सुपि' (पा० ६ । ४ । ८३) इति यणा-देशस्य 'न भूसुधियोः' (पा० ६ । ४ । ८५) इति प्रतिषेधे प्राप्ते 'छन्दस्यु-भयथा' ( पा० ६ । ४ । ८६ ) इति यणादेशः । व्यत्ययेनाद्युदात्तत्वम् । यद्वा । विपूर्वाद्भवतेरौणादिको डुन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । प्रसूता, 'षूङ् प्राणिप्रसवे' । कर्मणि निष्ठा । 'गतिरनन्तरः' (पा० ६ । २ । ४९ ) इति गतेः प्रकृतिस्वरत्वम् । सवाय 'छन्दसि जवसवौ वक्तव्यौ' (वा० पा० । ३ । ३ । ६५) इति निपातनादच् । चित्त्वादन्तोदात्तत्वम् । 'अणोऽप्रगृह्यस्यानुनासिकः' (पा० ८ । ४ । ५७) इति संहितायामकारः सानुनासिकः । एव, 'निपातस्य च' (पा० ६ । ३ । १३६ ) इति संहितायां दीर्घः । रात्री, 'रात्रेश्चाजसौ' (पा० ४ । १ । ३१) इति ङीप् । 'यस्येति च' ( पा० ६।४।१४८ ) इतीकारलोपः । अरैक्, 'रिचिर् विरेचने' । लङि 'बहुलं छन्दसि' (पा० २ । ४ । ७३) इति विकरणस्य लुक् । लघूपधगुणे 'हल्ङ्याभ्यः' (पा० ६ । १ । ६८) इति तिलोपः । वर्णव्यापत्त्या व्यत्ययेन एकारस्य ऐकारः ।

द्वितीयामृचमाह—

म०—रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सद-
नान्यस्याः । समानबन्धू अमृते अनूची
द्यावा वर्णं चरत आमिनाने ॥ २ ॥

प०—रुशत्ऽवत्सा । रुशती । श्वेत्या । आ । अगात् । अरैक् । ऊँ
इति । कृष्णा । सदनानि । अस्याः । समानबन्धू

समानऽबन्धू । अमृते इति । अनूची इति । द्यावा ।

वर्णम् । चरतः । आमिनाने इत्याऽमिनाने ॥२॥

श्वेत्येत्युषसो नामधेयम्, रुशती दीप्ता श्वेत्या श्वेतवर्णोषाः रुशद्वत्सा रुशद्दीप्तः सूर्य्यो वत्सो यस्याः सा तथोक्ता। यथा मातुः समीपे वत्सः सञ्चरति एवम् उषसः समीपे सूर्यस्य नित्यमवस्थानात्तद्वत्सत्वम्। अथवा, यथा वत्सो मातुः स्तन्यं रसं पिबन् हरति एवमुषसोऽवश्यायाख्यं रसं पिबन् वत्स इत्युच्यते। तादृशी सती आगात् आगतवती। आगताया अस्या उषसः कृष्णा कृष्णवर्णा रात्रिः सदनानि स्थानानि स्वकीयान्त्यार्धयामलक्षणानि अरैक् आरेचितवती कल्पितवती दत्तवतीत्यर्थः। उ इत्येतत्पादपूरणम्। अपि चैते रात्र्युषसौ समानबन्धू समानेन एकेन सूर्य्याख्येन बन्धुना सख्या युक्ते। यद्वा। सूर्येण सह संबद्धे। यथा उषा उदेष्यता सूर्येण संबद्धा, एवं रात्रिरपि अस्तं यता सूर्येण संबद्धा। अमृते मरणरहिते कालात्मकतया नित्यत्वात्, अनूची अन्वञ्चन्त्यौ। प्रथमं रात्रिः पश्चादुषा इत्यनेन क्रमेण गच्छन्त्यौ। यद्वा। सूर्यगत्यनुसारेण गच्छन्त्यौ एवंभूते वर्णं सर्वेषां प्राणिनां रूपम् आमिनाने जरयन्त्यौ यद्वा। स्वकीयं रूपं हिंसन्त्यौ। उषसा नैशं तमो निवर्त्यते। प्रकाशात्मकमुषसो रूपं रात्र्या। एवंविधे सत्यौ द्यावा द्योतमाने चरतः प्रतिदिवसमावर्तेते। यद्वा। द्यावा नभसान्तरिक्षमार्गेण चरतः प्रतिदिवसं गच्छतः।

अत्र निरुक्तम्—

'रुशद्वत्सा सूर्यवत्सा रुशदिति वर्णनाम। रोचतेर्ज्वलतिकर्मणः। सूर्यमस्या वत्समाह साहचर्याद्रसहरणाद्वा। रुशती श्वेत्यागात्। श्वेत्या श्वेततेः। अरिचत्कृष्णा सदनान्यस्याः कृष्णवर्णा रात्रिः।

The sonship of the Sun is based on analogy only; the Nairuktas dislike any kind of relationship between god & god & created

कृष्णं कृष्यतेर्निकृष्टो वर्णः। अथैने संस्तौति समानबन्धू समानबन्धने। अमृते अमरणधर्माणावनूची अनूच्यावितीतरेतरमभिप्रेत्य। द्यावा वर्णं चरतस्ते एव द्यावौ द्योतनादपि वा द्यावा चरतस्तया सह चरत इति स्यादामिनाने आमिन्वाने अन्योन्यस्याध्यात्मं कुर्वाणे' (नि० २।२०) इति।

Was अमरणधर्माणौ really अमरणधर्माणौ? (Rajvade). चरण = movement, they are not stationary. अमरणधर्माणौ would express the dislike of the Nairuktas for associating life, death or immortality with natural phenomena.

श्वेत्या, 'श्विता वर्णे'। अस्मात् ण्यन्तात् 'अचो यत्' (पा० ३।१।९७) इति भावे यत्। णिलोपः। अर्शआदित्वान्मत्वर्थीयोऽच्। अमृते, मृतं मरणमनयोर्नास्तीति बहुव्रीहौ 'नञो जरमरमित्रमृताः' (पा० ६।२।११६) इत्युत्तरपदाद्युदात्तत्वम्। अनूची, अनुपूर्वादञ्चतेः 'ऋत्विक्' (पा० ३।२।५९) इत्यादिना क्विन्। 'अनिदिताम्' (पा० ६।४।२४) इति नलोपः। 'अञ्चतेश्चोपसंख्यानम्' (वा० पा० ४।१।६) इति ङीप्। 'अचः' (पा० ६।४।१३८) इत्यकारलोपे 'चौ' (पा० ६।३।१३८) इति दीर्घः। 'अनुदात्तस्य च यत्रोदात्तलोपः' (पा० ६।१।१६१) इति ङीप उदात्तत्वम्। 'सुपां सुलुक्' (पा० ७।१।३९) इति विभक्तेर्लुक्। आमिनाने, 'मीङ् हिंसायाम्'। क्रैयादिकः। शानचि 'मीनातेर्निगमे' (पा० ७।३।८१) इति ह्रस्वत्वम्।

तृतीयामृचमाह—

**म०—समानो अध्वा स्वस्रोरनन्तस्तमन्यान्या**
**चरतो देवशिष्टे। न मेथेते न तस्थतुः सुमेके**
**नक्तोषासा समनसा विरूपे ॥३॥**

1939

प०—समानः । अध्वा । स्वस्रोः । अनन्तः । तम् । अन्याऽअन्या । चरतः । देवशिष्टे इति देवऽशिष्टे । न । मेथेते इति । न । तस्थतुः । सुमेके इति सुऽमेके । नक्तोषसा । सऽमनसा । विरूपे इति विऽरूपे ॥३॥

स्वस्रोर्भगिन्यो रात्र्युषसोः अध्वा सञ्चरणसाधनभूतो मार्गः समान एक एव । येनैवाकाशमार्गेण उषा निर्गच्छति तेनैव रात्रिरपि । स च मार्गोऽनन्तः अवसानरहितः । तं मार्गं देवशिष्टे देवेन द्योतमानेन सूर्येणानुशिष्टे शिक्षिते सत्यौ अन्यान्या एकैका चरतः क्रमेण गच्छतः । अपि च सुमेके शोभनमेहने सर्वेषामुत्पादकत्वात् शोभनप्रजनने नक्तोषासा रात्रिरुषाश्च विरूपे तमःप्रकाशलक्षणाभ्यां विरुद्धरूपाभ्यां युक्ते । अपि समनसा समानमनस्के ऐकमत्यं प्राप्ते सत्यौ न मेथेते परस्परं न हिंस्तः । तथा न तस्थतुः क्वचिदपि न तिष्ठतः सर्वदा लोकानुग्रहार्थं गच्छत इत्यर्थः ।

अन्यान्या, कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यम् । 'समासवच्च बहुलम्' ( वा० पा० ८।१।१२ ) इत्यन्यशब्दस्य द्विर्भावः । 'तस्य परमाम्रेडितम्' ( पा० ८ । १ । २ )इत्याम्रेडितसंज्ञायाम् 'अनुदात्तं च' (पा० ८ । १ । ३) इत्याम्रेडितानुदात्तत्वम् । देवशिष्टे, 'शासु अनुशिष्टौ'। अस्मात् कर्मणि निष्ठा। 'यस्य विभाषा' (पा० ७ । २ । १५) इतीट्प्रतिषेधः । 'शास इदङ्हलोः' ( पा० ६ । ४ । ३४ ) इत्युपधाया इत्वम् । 'शासिवसिघसीनां च' ( पा० ८ । ३ । ६० ) इति षत्वम् । 'तृतीया कर्मणि' ( पा० ६ । २ । ४८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । मेथेते, 'मिथृ मेथृ मेधाहिंसनयोः' । भौवादिकः अनुदात्तेत् । सुमेके, 'मिह सेचने'। भावे घञ् । शोभनो मेहो ययोस्ते । व्यत्ययेन ककारः ।

उत्तरपदस्य ञित्स्वरेणाद्युदात्तत्वम् । 'आद्युदात्तं द्व्यच्छन्दसि' ( पा० ६ । २ । ११९ ) इति उत्तरपदाद्युदात्तत्वम् । नक्तोषसा, 'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इति विभक्तेराकारः । 'अन्येषामपि दृश्यते' ( पा० ६ । ३ । १३७ ) इति संहितायामुपधादीर्घः ।

अथ चतुर्थीमृचमाह—

म०—भास्वती नेत्री सूनृतानामचेति चित्रा

वि दुरो न आवः । प्रार्प्या जगद्व्यु नो रायो

अख्यदुषा अजीगर्भुवनानि विश्वा ॥४॥

प०—भास्वती । नेत्री । सूनृतानाम् । अचेति । चित्रा । वि ।

दुरः । नः । आवरित्यावः । प्रऽअर्प्य । जगत् । वि । ऊम्

इति । नः । रायः । अख्यत् । उषाः । अजीगः । भुवनानि ।

विश्वा ॥४॥

भास्वती विशिष्टप्रकाशनयुक्ता । सूनृतेति वाङ्नाम । सूनृतानां वाचां नेत्री उत्पादयित्री । उषसः प्रादुर्भावानन्तरं हि पशुपक्षिमृगादयः सर्वे शब्दं कुर्वन्ति । एवंभूता उषाः अचेति अस्माभिरज्ञायि । चित्रा चायनीया ज्ञाता सा नोऽस्माकं दुरो द्वाराणि तमसा तिरोहितानि व्यावः व्यवृणोत् । यथास्माभिर्दृश्यन्ते तथा तमो निवार्य प्रकाशयतीत्यर्थः । अपि च जगत्सर्वं भुवनं, प्रार्प्य प्रकाशं गमयित्वा नोऽस्माकं रायो धनानि व्यख्यत् विशिष्टप्रकाशनयुक्तान्यकरोत् । उ इत्येतत् पादपूरणम् । सैषोषाः विश्वा भुवनानि सर्वाणि भुवनानि तमसा तिरोहितत्वेनाविद्यमानकल्पानि अजीगः उद्गिरति स्वमुखान्निर्गमयति स्वकीयेन प्रकाशेन तमो निःसार्य पुनरुत्पन्नानि करोतीत्यर्थः ।

नेत्री, 'णीञ् प्रापणे' । तृच् । 'ऋन्नेभ्यो ङीप्' (पा० ४ । १ । ५)

'उदात्तयणो हल्पूर्वात्' (पा० ६ । १ । १७४) इति ङीप उदात्तत्वम् । अचेति, 'चिती संज्ञाने' । दुरः, 'द्वारशब्दस्य रयेर्मतौ बहुलम्'(वा० पा० ६ । १ । ३७ ) इति बहुलवचनात् सम्प्रसारणम् । आवः, 'वृञ् वरणे' । लुङि 'मन्त्रे घस' ( पा० २।४।८० ) इति च्लेर्लुक् । गुणः । 'हल्ङ्याब्भ्यः' ( पा० ६ । १ । ६८ ) इति तिलोपः । 'छन्दस्यपि दृश्यते' (पा० ६ । ४ । ७३ ) इत्याडागमः । प्रार्प्य, 'ऋ गतौ' । णौ 'अर्तिह्री' (पा० ७ । ३ । ३६ ) इत्यादिना पुक् । 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' (पा० ७ । १ । ३७) । अख्यत् , 'ख्या प्रकथने' । लुङि 'अस्यतिवक्ति' (पा० ३ । १ । ५२) इत्यादिना च्लेरङादेशः । अजीगः, ' गॄ निगरणे' । लुङि तिपि 'बहुलं छन्दसि' ( पा० २।४।७६ ) इति विकरणस्य श्लुः । द्विर्वचनोरदत्वहलादिशेषाः। 'अर्तिपिपर्त्योश्च' 'बहुलं छन्दसि' (पा० ७ । ४ । ७७-७८) इति अभ्यासस्येत्वम् । छान्दस ईकारः । यद्वा । अस्माण्ण्यन्ताल्लुङि चङि द्विर्भावसन्वद्भावेत्वदीर्घाः । छान्दसश्चङो लोपः ।

पञ्चमीमृचमाह—

म०—जिह्मश्ये ३ चरितवे मघोन्याभोगय इष्टये
राय उ त्वम् । दभ्रं पश्यद्भ्य उर्विया
विचक्ष उषा अजीगर्भुवनानि विश्वा ॥ ५ ॥

प०—जिह्मऽश्ये । चरितवे । मघोनी । आऽभोगये । इष्टये ।
राये । ऊम् इति । त्वम् । दभ्रम् । पश्यत्ऽभ्यः उर्विया ।
विऽचक्षे । उषाः । अजीगः । भुवनानि । विश्वा ॥५॥

मघोनीत्युषो नामधेयम् । मघोनी धनवती उषाः। जिह्मश्ये जिह्मं वक्रं शयानाय पुरुषाय चरितवे चरितुं शयनादुत्थाय स्वापेक्षितं प्रति गन्तुं व्युच्छन्ती भवति। त्वम्, अयमेकशब्दपर्यायः सर्वनामशब्दः। यदाह, 'त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तम्' (नि० १। ७) इति। त्वमेकं प्रति आभोगय आभोग्याय शब्दादिविषयार्थम्। तथा अपरं प्रति इष्टये यागार्थं तथा अन्यं प्रति राये धनार्थं च व्युच्छन्तीति शेषः। उशब्दश्चार्थे। अपि च दभ्रम् अल्पं पश्यद्भ्यः अन्धकारावृतत्वेन ईषद्द्रष्टृभ्यो मनुष्येभ्यः विचक्षे विशिष्टप्रकाशाय व्युच्छन्ती उर्विया उर्वी विस्तीर्णा उषाः सर्वाणि भूतजातानि तमसा तिरोहितानि प्रकाशदानेनोद्गीर्णानीव करोति।

जिह्मश्ये, 'शीङ् स्वप्ने'। जिह्मं शेते इति जिह्मशीः। 'क्विप् च' ( पा० ३। २। ७६ ) इति क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वम्। 'एरनेकाचः' (पा० ६।४।८२) इति यण्। 'उदात्तस्वरितयोर्यणः' (पा० ८।२।४) इति विभक्तेः स्वरितत्वम्। आभोगये, आभोगशब्दाच्चतुर्थ्येकवचने यकारोपजनः। यद्वा। आङ्पूर्वाद्भुजेर्बहुलवचनादौणादिकः किप्रत्ययः कुत्वं च। उर्विया, 'इयाडियाजीकाराणामुपसंख्यानम्' (वा० पा० ७। १। ३९ ) इति उर्वीशब्दादुत्तरस्य सोर्डियाजादेशः। विचक्षे, 'चक्षिङ् व्यक्तायां वाचि'। विपूर्वादस्मात् सम्पदादिलक्षणो भावे क्विप्।

षष्ठीमृचमाह—

म०—क्षत्राय त्वं श्रवसे त्वं महीया इष्टये त्वमर्थमिव त्वमित्यै। विसदृशा जीविताभिप्रचक्ष उषा अजीगर्भुवनानि विश्वा ॥६॥

प०—क्षत्राय । त्वम् । श्रवसे । त्वम् । महीयै । इष्टये । त्वम् ।

अर्थम्ऽइव । त्वम् । इत्यै । विऽसदृशा । जीविता ।

अभिऽप्रचक्षे । उषाः । अजीगः । भुवनानि । विश्वा ॥६॥

क्षत्राय, धननामैतत् । धनार्थं त्वम् एकं प्रति उषा व्युच्छन्तीति शेषः । तथा श्रवसे अन्नार्थं त्वम् एकं प्रति, महीयै महत्यै इष्टयेऽग्निष्टोमादिमहायज्ञार्थं त्वमेकं प्रति व्युच्छन्ती । तथार्थमिव अपेक्षितमर्थं प्रति इत्यै गमनार्थं त्वमेकं प्रति व्युच्छन्ती । अपि च विसदृशा विलक्षणानि नानारूपाणि जीविता जीवितानि जीवनोपायभूतानि कृषिवाणिज्यादीनि अभिप्रचक्षे आभिमुख्येन प्रकाशयितुं व्युच्छन्ती उषाः सर्वाणि भूतजातानि तमसा निगीर्णान्यजीगः प्रकाशनेन उद्गीर्णानीवाकरोत् ।

त्वम्, 'त्वसमसिमनेमेत्यनुच्चानि' ( फि० ४ । १० ) इति सर्वानुदात्तत्वम् । महीयै, मह्यै । 'वहेरिन् सर्वधातुभ्यः' (उ० ४ । ११६ ) इतीन्प्रत्ययः । 'कृदिकारादक्तिनः' ( गण० ४ । १ ४५ ) इति ङीष् । 'उदात्तयणः' ( पा० ६ । १ । १७४ ) इति विभक्तेरुदात्तत्वम् । छान्दस ईकारोपजनः । यद्वा, महीशब्दादुत्तरस्य चतुर्थ्येकवचनस्य 'याडापः' (पा० ७ । ३ । ११३) इति व्यत्ययेन याडागमः । छान्दसमन्तोदात्तत्वम् । विसदृशा, 'त्यदादिषु दृशोऽनालोचने कञ्च' ( पा० ३ । २ । ६० ) इत्यत्र 'समानान्ययोश्च' ( वा० पा० ३ । २ । ६० ) इति वचनात् दृशेः कञ् । 'समानस्य छन्दसि' (पा० ६ । ३ । ८४ ) इति सभावः । विगतसादृश्यानि विसदृशानि । 'शेश्छन्दसि बहुलम्' (पा० ६ । १ । ७०) इति शेर्लोपः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अभिप्रचक्षे, चक्षेः 'तुमर्थे सेसेन्' (पा० ३ । ४ । ९ ) इति सेन्प्रत्ययः । 'स्कोः संयोगाद्योः' (पा० ८।२।२९) इति कलोपः । कत्वषत्वे ।

सप्तमीमृचमाह—

म०—एषा दिवो दुहिता प्रत्यदर्शि व्युच्छन्ती युवतिः शुक्रवासाः । विश्वस्येशाना पार्थिवस्य वस्व उषो अद्येह सुभगे व्युच्छ ॥७॥

प०—एषा । दिवः । दुहिता । प्रति । अदर्शि । विऽउच्छन्ती । युवतिः । शुक्रऽवासाः । विश्वस्य । ईशाना । पार्थिवस्य । वस्वः । उषः । अद्य । इह । सुऽभगे । वि । उच्छ ॥७॥

दिवो दुहिता व्योम्नो दुहितृस्थानीया । तस्य हि पूर्वार्धे उषा उत्पद्यते । सैषा व्युच्छन्ती तमो वर्जयन्ती प्रत्यदर्शि सर्वैः प्राणिभिर्दृष्टाभूत् । कीदृशी सा । युवतिः यावयित्री फलानां पुरुषैः प्रापयित्री नित्ययौवनोपेता वा । शुक्रवासाः श्वेतवसना निर्मलदीप्तिर्वा । तथा विश्वस्य सर्वस्य पार्थिवस्य पृथिव्याः सम्बन्धिनो वस्वो धनस्य ईशाना ईश्वरी । हे सुभगे शोभनधने उषः तादृशी त्वम् अद्यास्मिन् काले इह अस्मिन् देवयजनदेशे व्युच्छ तमांसि विवासय वर्जयेत्यर्थः ।

दिवः, 'ऊडिदम्' ( पा० ६ । १ । १७१ ) इति विभक्तेरुदात्तत्वम् । व्युच्छन्ती, 'उछी विवासे' । विवासो वर्जनम् । तौदादिकः । युवतिः, 'यूनस्ति' (पा० ४ । १ । ७७) । शुक्रवासाः, 'वस आच्छादने' वस्ते सर्वमाच्छादयतीति प्रकाशो वासः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । ईशाना, 'ईश ऐश्वर्ये' । अदादित्वाच्छपो लुक् । अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । पार्थिवस्य, 'पृथिव्या ञाञौ' ( वा०पा० ४ । १ । ८५ ) इति प्राग्दीव्यतीयोऽञ्प्रत्ययः । वस्वः, लिङ्ग

व्यत्ययः। 'घेर्ङिति' ( पा० ७ । ३ । १११ ) इति गुणस्य 'जसादिषु छन्दसि वा वचनम्' ( वा० पा० ७ । ३ । १०९ ) इति विकल्पितत्वादभावे यणादेशः ।

अष्टमीमृचमाह—

मं०—परायतीनामन्वेति पाथ आयतीनां प्रथमा शश्वतीनाम् । व्युच्छन्ती जीवमुदीरयन्त्युषा मृतं कं चन बोधयन्ती ॥८॥

प०—पराऽयतीनाम् । अनु । एति । पाथः । आऽयतीनाम् । प्रथमा । शश्वतीनाम् । विऽउच्छन्ती । जीवम् । उत्ऽईरयन्ती । उषाः मृतम् । कम् । चन । बोधयन्ती ॥८॥

परायतीनां परागच्छन्तीनामतीतानामुषसां सम्बन्धि पाथः अन्तरिक्षैकदेशलक्षणं स्थानम् । 'पाथोऽन्तरिक्षं पथा व्याख्यातम्' ( नि० ६ । ७ ) इति यास्कः । अद्यतनी उषाः अन्वेति अनुगच्छति । अतीता उषसो यथा व्युष्टा एवमेवैषामपि व्युच्छतीत्यर्थः । तथा आयतीनामागच्छन्तीनां शश्वतीनां बह्वीनामुषसां प्रथमा आद्या भवति । एषा यथा वर्तते एवमेवागामिन्योऽप्युषस इत्यर्थः । तादृशी व्युच्छन्ती तमो वर्जयन्ती जीवं प्राणिनां जीवात्मानम् उदीरयन्ती शयनादूर्ध्वं प्रेरयन्ती उषाः मृतं स्वापसमये प्रलीनेन्द्रियत्वात् मृतमिव सन्तं कं चन कमपि पुरुषं बोधयन्ती पुनरिन्द्रियप्रवेशेन चेतनं कुर्वती प्रवर्तत इति शेषः ।

परायतीनाम्, 'इण् गतौ'। लटः शतृ 'इणो यण्' (पा० ६।४।८१)। 'उगितश्च' ( पा० ४ । १ । ६ ) इति ङीप् । 'ङ्यश्छन्दसि बहुलम्, ( पा० ६ । १ । १७८ ) इति नाम उदात्तत्वम् ।

नवमीमृचमाह—

म०—उषो यद॒ग्निं स॒मिधे॑ च॒कर्थ॒ वि यदाव॒श्चक्ष॑सा॒ सूर्य॑स्य । यन्मानु॑षान्य॒क्ष्यमा॑णाँ अजी॑गस्त॒द्दे॒वेषु॑ चकृषे भ॒द्रमप्नः॑ ॥९॥

प०—उषः॑ । यत् । अ॒ग्निम् । स॒म्ऽइधे॑ । च॒कर्थ॑ । वि । यत् । आव॒रिति॑ । चक्ष॑सा । सूर्य॑स्य । यत् । मानु॑षान् । य॒क्ष्यमा॑णान् । अजी॑ग॒रिति॑ । तत् । दे॒वेषु॑ । च॒कृ॒षे । भ॒द्रम् । अप्नः॑ ॥९॥

हे उषः त्वम् अग्निं गार्हपत्यादिरूपं समिधे समिन्धनाय प्रज्वलनार्थं यच्चकर्थ कृतवती । उषःकाले ह्यग्नयो होमार्थं उपसमिध्यन्ते । अपि च तमसा तिरोहितं जगत् सूर्य्यस्य चक्षसा प्रकाशेन यद्व्यावः व्यवृणोः तमसा विश्लिष्टमकरोः । तथा मानुषान् मनोः पुत्रान् मनुष्यान् यक्ष्यमाणान् यागं करिष्यतः त्वं यत् अजीगः पूर्वं तमसा ग्रस्तान् प्रकाशनेनोद्गीर्णानिवाकरोः हे उषः देवेषु मध्ये त्वमेव भद्रं भजनीयं तदेतत्त्रिविधमप्नः कर्म चकृषे कृतवती ।

आवः, 'वृञ् वरणे' । लुङि 'मन्त्रे घस' (पा० २ । ४ । ८०) इति च्लेर्लुक् । गुणे 'हल्ङ्याब्भ्यः' ( पा० ६ । १ । ६८ ) इति सिलोपः । 'छन्दस्यपि दृश्यते' ( पा० ६ । ४ । ७३ ) इत्याडागमः । मानुषान्, 'मनोर्जातावञ्यतौ षुक् च' ( पा० ४ । १ । १६१ ) इति अञ् षुगागमश्च ।

दशमीमृचमाह—

म०—किया॒त्या यत् स॒मया॒ भवा॑ति॒ या व्यू॒षुर्या॑श्च

नूनं व्युच्छान् । अनु पूर्वाः कृपते वावशाना
प्रदीध्याना जोषमन्याभिरेति ॥१०॥

प०—कियति । आ । यत् । समया । भवाति । याः ।
विऽऊषुः । या । च । नूनम् । विऽउच्छान् । अनु । पूर्वाः ।
कृपते । वावशाना । प्रऽदीध्याना । जोषम् । अन्याभिः ।
एति ॥१०॥

समयेत्यव्ययं समीपवचनम् । उषाः समया भवाति समीपस्था भवति इति यदेतत् तत्कियति काले प्रवृत्तं परिसमाप्त मित्याकारः प्रश्नार्थः । एतदुक्तं भवति । उषाः येन कालेन संयुक्ता स कालः कियान् तस्य कालस्य किं परिमाणमिति । अनेनोषसोऽनन्तत्वमुक्तम् । तदेव स्पष्टीकरोति । पुरा या उषसो व्युषुः व्युष्टाः संजाताः नूनम् अवश्यम् इतः परं याश्चोषसो व्युच्छान् व्युच्छन्ति व्युष्टा भविष्यन्ति । तत्र पूर्वाः व्युष्टा अतीता उषसः वावशाना कामयमाना इदानीं वर्तमानोषाः अनु कृपते अनुकल्पते, समर्था भवति । अतीता उषसो यथा प्रकाशमकुर्वन् तद्वदेषापि प्रकाशं करोतीत्यर्थः । तथा प्रदीध्याना प्रकर्षेण दीप्यमानोषाः अन्याभिरागामिनीभिरुषोभिर्जोषं सह एति संगच्छते । आगामिन्योऽप्येतदीयं प्रकाशमनुकुर्वन्तीत्यर्थः ।

कियति, किं परिमानमस्य, 'किमिदंभ्यां वो घः' ( पा० ५ । २ । ४० ) इति घत्वविधानसामर्थ्यात् किम्शब्दादपि परिमाणार्थे वतुप्वकारस्य घत्वम् । 'इदंकिमोरीश्की' ( पा० ६ । ३ । ९० ) इति किमः कीआदेशः । घस्येयादेशो 'यस्येति' ( पा० ६ । ४ । १४८ ) लोपः । प्रत्ययाद्युदात्तत्वम् । छान्दसः सांहितिको दीर्घः । भवाति, लेट्याडागमः । व्यूषुः, विपूर्वो वसतिः व्युच्छने वर्तते । लिट्युसि कित्त्वे

यजादित्वात् सम्प्रसारणं द्विर्वचनादि । व्युच्छान्, 'उछी विवासे'। विवासो वर्जनम् । लेटचाडागमः । संयोगान्तस्य लोपः । कृपते, 'कृपू सामर्थ्ये' । व्यत्ययेन शः । वावशाना, 'वश कान्तौ' । अस्माद्यङ्लुगन्तात्ताच्छीलिकश्चानश् । प्रदीध्याना, 'दीधीङ् दीप्तिदेवनयोः' । लटः शानच् । अदादित्वाच्छपो लुक् । 'जक्षित्यादयः षट्' (पा० ६ । १ । ६) इत्यभ्यस्तसंज्ञायाम् 'अभ्यस्तानामादिः' ( पा० ६ । १ । १८९) इत्याद्युदात्तत्वम् । गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम् ।

एकादशीमृचमाह—

म०—ईयुष्टे ये पूर्वतरामपश्यन् व्युच्छन्तीमुषसं मर्त्यासः । अस्माभिरू नु प्रतिचक्ष्याभूदो ते यन्ति ये अपरीषु पश्यान् ॥११॥

प०—ईयुः । ते । ये । पूर्वऽतराम् । अपश्यन् । विऽउच्छन्तीम् । उषसम् । मर्त्यासः । अस्माभिः । ऊम् इति । नु । प्रतिऽचक्ष्या । अभूत् । ओ इति । ते । यन्ति । ये । अपरीषु । पश्यान् ॥ ११ ॥

ये मर्त्यासो मरणधर्माणो मनुष्या व्युच्छन्तीं विवासयन्तीं पूर्वतराम् अतिशयेन पूर्वां विप्रकृष्टाम् उषसम् अपश्यन् दृष्टवन्तः ते मनुष्या ईयुर्गताः । तथा अस्माभिरपि नु इदानीं प्रतिचक्ष्या प्रकर्षेण द्रष्टव्या अभूत् जाता । तथा अपरीषु भाविनीषु रात्रिषु ये मनुष्या एतामुषसं पश्यान् पश्यन्ति ते । आ उ इति निपातद्वयसमुदायः तत्र उ इत्येतदवधारणे । एव यन्ति आगच्छन्त्येव । काल

त्रयेष्वेषा व्याप्य वर्तते इत्यर्थः ।

ईयुः, 'इण् गतौ' । लिट्युसि 'इणो यण्' (पा० ६ । ४ । ८१) इति यणादेशः । 'द्विर्वचनेऽचि' ( पा० १।१।५९ ) इति तस्य स्थानिवद्भावाद् द्विर्भावे 'दीर्घ इणः किति' ( पा० ७ । ४ । ६९ ) इति अभ्यासस्य दीर्घत्वम् । ते युष्मत्तत्ततक्षुःष्वन्तः पादमिति सकारस्य षत्वं ष्टुत्वं च । मर्त्यासः, 'आज्जसेरसुक्' ( पा० ७ । १ । ५० ) ।

द्वादशीमृचमाह—

म०—यावयद्द्वेषा ऋतपा ऋतेजाः सुम्नावरी सूनृता ईरयन्ती । सुमङ्गलीर्बिभ्रती देववीतिमिहाद्योषः श्रेष्ठतमा व्युच्छ ॥१२॥

प०—यवयत्ऽद्वेषाः । ऋतऽपाः । ऋतेऽजाः । सुम्नऽवरी । सूनृताः । ईरयन्ती । सुऽमङ्गलीः । बिभ्रती । देवऽवीतिम् । इह । अद्य । उषः । श्रेष्ठऽतमा । वि । उच्छ ॥१२॥

यावयद्द्वेषाः, यावयन्ति अस्मत्तः पृथक्कृतानि द्वेषांसि द्वेष्टॄणि राक्षसादीनि यया सा तथोक्ता । न ह्युषसि जातायां राक्षसादयोऽवतिष्ठन्ते यतस्ते निशाचराः । ऋतपाः ऋतस्य सत्यस्य यज्ञस्य वा पालयित्री ऋतेजा यज्ञार्थं प्रादुर्भूता । सर्वामुषसि अहनि यागा अनुष्ठीयन्ते अतो यज्ञार्थं जातेत्युच्यते । सुम्नावरी सुम्नमिति सुखनाम तद्वती । सूनृता, वाङ्नामैतत्, पशुपक्षिमृगादीनां वचांसि ईरयन्ती प्रेरयन्ती उत्पादयन्ती सुमङ्गलीः सौमङ्गल्योपेता । पत्या कदाचिदपि न वियुक्ता इत्यर्थः । देववीतिं देवैः काम्यमानं यज्ञं बिभ्रती धारयन्ती हे उषः श्रेष्ठतमा उक्तेन प्रकारेण अतिप्रशस्ता त्वम् इह अस्मिन् देवयजनदेशे अद्य अस्मिन् यागसमये व्युच्छ विवासय ।

यावयद्द्वेषाः, 'यु मिश्रणामिश्रणयोः'। अस्माण्ण्यन्ताल्लटः शतृ। तस्य 'छन्दस्युभयथा' ( पा० ६ । ४ । ५ ) इत्यार्धधातुकत्वात् अदुपदेशाल्लसार्वधातुकानुदात्तत्वाभावात् प्रत्ययस्वर एव शिष्यते । पुनर्बहुव्रीहौ स एव स्वरः। छान्दसः पदकालीनो ह्रस्वः । ऋतपाः, ऋतं पाति रक्षतीत्यृतपाः । 'पा रक्षणे' विच् । ऋतेजाः, ऋते निमित्तभूते जायते इत्यृतेजाः । 'जनी प्रादुर्भावे'। 'जनसनखनक्रमगमो विट्' (पा० ३।२।६७) 'विड्वनोरनुनासिकस्यात्' ( पा० ६ । ४ । ४१ ) इत्यात्वम् । 'तत्पुरुषे कृति बहुलम्' ( पा० ६ । ३ । १४ ) इति अलुक् । सुम्नावरी, 'छन्दसीवनिपौ' इति मत्वर्थीयो वनिप् । 'वनो र च' ( पा० ४ । १ । ७ ) इति ङीप् । नकारस्य रेफादेशश्च । 'अन्येषामपि दृश्यते'। ( पा० ६ । ३ । १३७ ) इति दीर्घः । व्यत्ययेन प्रत्ययाद्युदात्तत्वम् । सुमङ्गलीः, 'सुमङ्गलात् संज्ञायाम्' ( पा० ४ । १ । ४१ ) इति गौरादिषु पाठात् ङीष् । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' ( पा० ६ । १ । ६८ ) इति सुलोपस्य विकल्पितत्वादभावे रुत्वविसर्गौ । देववीतिम्, 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु' । देवैर्वीयते काम्यत इति देववीतिर्यज्ञः। कर्मणि क्तिन्। दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ।

त्रयोदशीमृचमाह—

म०—शश्वत्पुरोषा व्युवास देव्यथो अद्येदं व्यावो मघोनी । अथो व्युच्छादुत्तराँ अनु द्यूनजरामृता चरति स्वधाभिः ॥१३॥

प०—शश्वत् । पुरा । उषाः । वि । उवास । देवी। अथो इति। अद्य । इदम् । वि । आवः । मघोनी । अथो इति।

वि । उच्छात् । उत्ऽतरान् । अनु । द्यून् । अजरा । अमृता ।

चरति । स्वधाभिः ॥ १३ ॥

देवी देवनशीलोषाः पुरा पूर्वस्मिन् काले शश्वत् नित्यं सततं व्युवास व्यौच्छत् । अथो अनन्तरम् अद्यास्मिन् काले मघोनी धनवती उषाः तमसा तिरोहितमिदं सर्वं जगद्व्यावः विवासितं प्रकाशनेन तमसा वियुक्तमकरोत् । अथो अनन्तरम् उत्तरान् ऊर्ध्वतरान् भाविनः द्यून् दिवसान् अनुलक्ष्य आगामिष्वपि दिवसेषु व्युच्छात् व्युच्छति विवासयति । अतः कालत्रयव्यापिनी सोषाः अजरा जरारहिता सर्वदैकरूपा अमृता मरणरहिता च सती स्वधाभिः आत्मीयैस्तेजोभिः सह चरति वर्तते ।

उवास, 'वस निवासे' । 'लिट्यभ्यासस्योभयेषाम्' (पा० ६ । १ । १७) इत्यभ्यासस्य सम्प्रसारणम् । आवः, तस्मादेव धातोर्लङि 'बहुलं छन्दसि' (पा० २ । ४ । ७३) इति विकरणस्य लुक् । 'हल्ङ्याब्भ्यः' (पा० ६ । १ । ६८) इति तिलोपः । 'छन्दस्यपि दृश्यते' (पा० ६।४।७३) इत्याडागमः । उच्छात्, लेट्याडागमः । उत्तरान्, 'दीर्घादटि समानपादे' (पा० ८ । ३ । ९) इति नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' (पा० ८ । ३ । ३) इति सानुनासिक आकारः । अनु, 'अनुर्लक्षणे' (पा० १ । ४ । ८४) इति अनोः कर्मप्रवचनीयत्वम् । अजरा अमृता, तत्र बहुव्रीहौ 'नञो जरमरमित्रमृताः' (पा० ६ । २ । ११६) इत्युत्तरपदाद्युदात्तत्वम् ।

चतुर्दशीमृचमाह—

मू०—व्य१ञ्जिभिर्दिव आतास्वद्यौदप कृष्णा निर्णिजं देव्यावः । प्रबोधयन्त्यरुणेभिरश्वै-रोषा याति सुयुजा रथेन ॥ १४ ॥

प०—वि । अञ्जिऽभिः । दिवः । आतासु । अद्यौत् । अप । कृष्णाम् । निःऽनिजम् । देवी । आवः । प्रऽबोधयन्ती । अरुणेभिः । अश्वैः । आ । उषाः । याति । सुयुऽजा । रथेन ॥१४॥

दिवो नभसः सम्बन्धिनीषु आतासु । दिङ्नामैतत् । आततासु विस्तीर्णासु दिक्षु उषाः अञ्जिभिः व्यञ्जकैः प्रकाशकैस्तेजोभिः व्यद्यौत् विद्योतते प्रकाशते । सैषा देवी देवनशीला कृष्णां निर्णिजम् । निर्णिगिति रूपनाम । रात्रिकृतं कृष्णं रूपम् अपावः अपावृणोत् प्रकाशेन तिरस्कृतवती । अपि च अरुणेभिः अरुणैर्लोहितवर्णैः अश्वैर्व्यापनशीलैः स्वकीयैः किरणैः तुरगैर्वा सुयुजा सम्यग्युक्तेन रथेन उषा आ याति आगच्छति । किं कुर्वती । प्रबोधयन्ती सुप्तान् प्राणिनः प्रबुद्धान् कुर्वती ।

अद्यौत्, 'द्युत दीप्तौ' । लुङ् । 'द्युद्भ्यो लुङि' (पा० १ । ३ । ९१) इति परस्मैपदम् । व्यत्ययेन गुणे च्लेर्लुक् । गुणे प्राप्ते वृद्धिश्छान्दसी । यद्वा । 'द्यु अभिगमने' । आदादिकः । 'उतो वृद्धिर्लुकि हलि' (पा० ७ । ३ । ८९) इति वृद्धिः ।

देवीनां हविष्षु आवहन्तीत्येषोषसो याज्या । सूत्रितं च । आ द्यां तनोषि रश्मिभिरावहन्ती पोष्या वार्याणि न ता अर्वा रेणुककाटो अश्नुते (आ० ६ । १४) इति ॥

पञ्चदशीमृचमाह—

म०—आवहन्ती पोष्या वार्याणि चित्रं केतुं कृणुते

चेकिताना । ईयुषीणामुपमा शश्वतीनां

विभातीनां प्रथमोषा व्यश्वैत् ॥१५॥

प०—आऽवहन्ती । पोष्या । वार्याणि । चित्रम् । केतुम् ।

कृणुते । चेकिताना । ईयुषीणाम् । उपऽमा । शश्वतीनाम् ।

विऽभातीनाम् । प्रथमा । उषाः । वि । अश्वैत् ॥१५॥

पोष्या यावज्जीवं पोषणसमर्थानि वार्याणि वरणीयानि धनानि आमुहन्ती अस्मभ्यम् आनयन्ती चेकिताना सर्वं जनं प्रज्ञापयन्ती उषाश्चित्रं विचित्रम् आश्चर्यभूतं चायनीयं वा केतुं प्रज्ञापकं रश्मिं कृत्स्नजगत्प्रकाशनसमर्थं कृणुते स्वात्मनः प्रकाशात् कुरुते । तथा ईयुषीणां गमनवतीनां पूर्वं निष्पन्नानां शश्वतीनां बह्वीनाम् उषसाम् उपमा उप समीपे निर्मिता उपमानभूता वा, विभातीनां विशेषेण प्रकाशमानानाम् आगामिनीनाम् उषसां प्रथमा आद्या एवं भूतोषाः व्यश्वैत् तेजसा प्रवृद्धासीत् ।

पोष्या, 'पुष पुष्टौ'। पोषणं पोषः। भावे घञ्। तत्र भवानि। 'भवे छन्दसि' ( पा० ४।४।११० ) इति यत्। 'यतो नावः' ( पा० ६।१।२१३) इत्याद्युदात्तत्वम्। 'शेश्छन्दसि बहुलम्' (पा० ६।१।७०) इति शेर्लोपः। वार्याणि, 'वृङ् संभक्तौ'। 'ऋहलोर्ण्यत्'(पा० ३।१।१२४)। 'ईडवन्दवृशंसदुहां ण्यतः'(पा० ६।१।२१४)इत्याद्युदात्तत्वम्। चेकिताना, 'कित ज्ञाने'। अस्माद्यङन्ताल्लटः शानच्। 'छन्दस्युभयथा' (पा० ३।४।११७) इति तस्यार्धधातुकत्वादतोलोपयलोपौ। 'अभ्यस्तानामादिः'(पा० ६।१।१८९) इत्याद्युदात्तत्वम्। ईयुषीणां, 'इण् गतौ'। लिटः क्वसुः। द्विर्भावादि। उगितश्च'(पा० ४।१।६) इति ङीप्। 'वसोः सम्प्रसारणम्'(पा० ६।४।१३१)। 'इणो यण्' (पा० ६।४।८१) इति यणादेशः। 'दीर्घ इणः किति' (पा० ७।४।६९) इत्यभ्यासस्य दीर्घत्वम्। 'शासिवसिघसीनां च' ( पा० ८।३।६० ) इति

षत्वम्। ङीप्सुपौ पित्वादनुदात्तौ। विभातीनाम्, 'भा दीप्तौ'। अस्माच्छत्रन्तात् पूर्ववत् ङीप्। 'ङ्याश्छन्दसि बहुलम्' (पा० ६।१।१७८) इति नाम उदात्तत्वम्। अश्वैत्, 'टुओश्वि गतिवृद्ध्योः'। लङि 'बहुलं छन्दसि' (पा०२।४।७६) इति विकरणस्य लुक्। गुणे कृते प्रत्ययेनैत्वम्।

षोडशीमृचमाह—

म०—उदीर्ध्वं जीवो असुर्न आगादप प्रागात्तम आ ज्योतिरेति। आरैक्पन्थां यातवे सूर्याय-गन्म यत्र प्रतिरन्त आयुः ॥१६॥

प०—उत्। ईर्ध्वम्। जीवः। असुः। नः। आ। अगात्। अप। प्र। अगात्। तमः। आ। ज्योतिः। एति। अरैक्। पन्थाम्। यातवे। सूर्याय। अगन्म। यत्र। प्रऽतिरन्ते। आयुः ॥१६॥

हे मनुष्याः उदीर्ध्वं शयनं परित्यज्य उद्गच्छत। नोऽस्माकम् असुः शरीरस्य प्रेरयिता जीवो जीवात्मा आगात् आगतवान्। तमः अप प्रागात् अपक्रान्तं उषसः प्रकाशे सति सर्वजीवनव्यापारयोग्यः तस्मात् परमात्मरूपतया। स च जीवस्तदेव ज्योतिरैति आगच्छति। सूर्याय सूर्यस्य पन्थां मार्गम् आरैक् विविक्तीकरोति यातवे गमनाय तस्मिन् देशे अगन्म गच्छामः। यत्र यस्मिन् देशे आयुः। अन्ननामैतत्। अन्नं प्रतिरन्ते। प्रपूर्वस्तिरतिर्वर्धनार्थः। उदाराः दानेन प्रवर्धयन्ति।

ईर्ध्वम्, 'ईर गतौ', आदादिकोऽनुदात्तेत्। अरैक्, 'रिचिर् विरेचने'। लङि 'बहुलं छन्दसि' (पा० २।४।७६) इति विकरणस्य लुक्। गुणे व्यत्ययेनैत्वम्। पन्थाम्, द्वितीयायामपि 'पथिमथ्यृभुक्षामात्' (पा० ७।१।८५) इति व्यत्ययेनात्वम्। अगन्म, गमेर्लङि 'बहुलं छन्दसि' (पा० २।४।७६) इति विकरणस्य लुक्। 'म्वोश्च' (पा० ८। २। ६५) इति मकारस्य नकारः।

सप्तदशीमृचमाह—

म०—स्यूमना वाच उदियर्ति वह्निः स्तवानो रेभ उषसो विभातीः । अद्या तदुच्छ गृणते मघोन्यस्मे आयुर्नि दिदीहि प्रजावत् ॥१७॥

प० —स्यूमना । वाचः । उत् । इयर्ति । वह्निः । स्तवानः । रेभः । उषसः । विऽभातीः । अद्य । तत् । उच्छ । गृणते । मघोनि । अस्मे इति । आयुः । नि । दिदीहि । प्रजाऽवत् ॥१७॥

वह्निः स्तोत्राणां वोढा रेभः । स्तोतृनामैतत् । स्तोता उषसो विभातीः तमसोऽपनोदनेन प्रकाशमाना उषोदेवताः स्तवानः स्तुवन् वाचो वेदरूपायाः सम्बन्धीनि स्यूमना स्यूमानि अनुस्यूतानि संततान्युक्थानि उदियर्ति उद्गमयति, उच्चारयति । अतो हे मघोनि धनवत्युषः अद्यास्मिन् समये गृणते स्तुवते तस्मै पुरुषाय तदुच्छ दृष्टिनिरोधकतया प्रसिद्धं नैशं तमो विवासय वर्जय । अस्मे अस्मभ्यं च प्रजावत् प्रजाभिः पुत्रपौत्रादिभिर्युक्तम् आयुरन्नं नि दिदीहि नितरां प्रकाशय । दीदेतिश्छान्दसो दीप्तिकर्मा । प्रयच्छेत्यर्थः ।

स्यूमना, 'षिवु तन्तुसन्ताने' । 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३।२।७५ ) इति दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात् कर्मणि मनिन् । 'च्छ्वोः शूडनुनासिके च' ( पा० ६ । ४ । १९ ) इति ऊठ् । 'आङ्याजयारां चोपसंख्यानम्' (महा० ७ । १ । ३९ । १) इति विभक्तेराङादेशः । यद्वा, उणादिको भावे मक् । पामादिलक्षणो मत्वर्थीयो नः । बन्धनयुक्तानीत्यर्थः । 'शेश्छन्दसि बहुलम्' ( पा० ६ । १ । ७० ) इति शेर्लोपः । प्रत्ययेनाद्युदात्तत्वम् । वाचः, 'सावेकाचः' ( पा० ६ । १ । १६८ ) इति ङस उदात्तत्वम् । इयर्ति, 'ऋ गतौ' । जौहोत्यादिकः । 'अर्तिपि-

पर्त्योश्च' (पा० ७ । ४ । ७७) इति अभ्यासस्येत्वम् । स्तवानः, 'ष्टुञ् स्तुतौ'। शानचि अदादित्वाच्छपो लुक् । तस्य 'छन्दस्युभयथा' (पा० ३ । ४ । ११७ ) इत्यार्धधातुकत्वेन ङित्त्वाभावाद्गुणावादेशौ। व्यत्ययेनाद्युदात्तत्वम् । विभातीः, 'शतुरनुमो नद्यजादी' (पा० ६ । १ । १७३) इति ङीप उदात्तत्वम् । गृणते, 'गॄ शब्दे' । क्रैयादिकः । 'प्वादीनां ह्रस्वः' (पा० ७ । ३ । ८० ) । पूर्वोक्तेन सूत्रेण विभक्तेरुदात्तत्वम् । अस्मे,'सुपां सुलुक्' ( पा० ७ । १ । ३९ ) इति चतुर्थ्याः शेआदेशः ।

अष्टादशीमृचमाह—

म०—या गोमतीरुषसः सर्ववीरा व्युच्छन्ति दाशुषे मर्त्याय । वायोरिव सूनृतानामुदर्के ता अश्वदा अश्ववत्सोमसुत्वा ॥ १८ ॥

प० — याः । गोऽमतीः । उषसः । सर्वऽवीराः । विऽउच्छन्ति । दाशुषे । मर्त्याय । वायोःऽइव । सूनृतानाम् । उतऽअर्के । ताः । अश्वऽदाः । अश्नवत् । सोमऽसुत्वा ॥१८॥

दाशुषे हवींषि दत्तवते मर्त्याय मनुष्याय यजमानाय गोमतीः गोमत्यो बहुभिर्गोभिर्युक्ताः सर्ववीराः सर्वैः सरणसमर्थैः वीरैः शूरैर्युक्ता या उषसो व्युच्छन्ति तमो वर्जयन्ति, वायोरिव वायुवच्छीघ्रं प्रवर्तमानानां सूनृतानां स्तुतिरूपाणां वाचाम् उदर्के समाप्तौ अश्वदा अश्वानां दात्रीस्ता उषसः सोमसुत्वा सोमानामभिषोता यजमानः अश्नवत् व्याप्नोतु ।

दाशुषे, 'दाशृ दाने'। 'दाश्वान्साह्वान्' ( पा० ६।१।१२) इति क्वसुप्रत्ययान्तो निपात्यते । चतुर्थ्येकवचने 'वसोः सम्प्रसारणम्' (पा० ६ । ४ । १३१ ) इति सम्प्रसारणम् । 'शासिवसिघसीनां च' ( पा० ८ । ३ । ६० ) इति षत्वम् । अश्नवत्, 'अशू व्याप्तौ' । व्यत्ययेन परस्मैपदम् । लेट्यडागमः । 'इतश्च लोपः' इतीकारलोपः । सोमसुत्वा, 'षुञ्

अभिषवे'। 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३ । २ । ७५ ) इति क्वनिप्। 'ह्रस्वस्य पिति' ( पा० ६ । १ । ७१ ) इति तुक्।

एकोनविंशीमृचमाह—

म०—माता देवानामदितेरनीकं यज्ञस्य केतुर्बृहती वि भाहि। प्रशस्तिकृद्ब्रह्मणे नो व्यु१च्छा नो जने जनय विश्ववारे ॥ १९ ॥

प०—माता। देवानाम्। अदितेः। अनीकम्। यज्ञस्य। केतुः। बृहती। वि। भाहि। प्रशस्तिऽकृत्। ब्रह्मणे। नः। वि। उच्छ। आ। नः। जने। जनय। विश्वऽवारे ॥ १९ ॥

हे उषः त्वं देवानां माता जननी। उषसि सर्वे देवाः स्तुत्या प्रबोध्यन्ते अतः सा तज्जननवतीत्युच्यते। अत एव अदितिर्देवानां मातुरनीकं प्रत्यनीकं प्रतिस्पर्धिनी त्वमित्यर्थः। यद्वा। दीव्यन्तीति देवा रश्मयः। तेषां निर्मात्री। अदितेरखण्डनीयाया भूमेरनीकं मुखम्। यथा इन्द्रियाश्रयत्वात् मुखं प्रकाशकं एवमुषा भूमेः प्रकाशयित्रीत्यर्थः। यज्ञस्य केतुः केतयित्री ज्ञापयित्री बृहती महती सती वि भाहि प्रकाशस्व। अपि च प्रशस्तिकृत् सम्यक् स्तुतमिति प्रशंसनं कुर्वती नोऽस्मदीयाय ब्रह्मणे मन्त्ररूपाय स्तोत्राय व्युच्छ विवासय। तदनन्तरं हे विश्ववारे सर्वैर्वरणीये उषः नोऽस्मान् जने जनपदे आ जनय आभिमुख्येन प्रादुर्भावय अवस्थापयेत्यर्थः।

बृहती, 'बृहन्महतोरुपसंख्यानम्' इति ङीप उदात्तत्वम्। प्रशस्तिकृत्, 'शंसु स्तुतौ'। भावे क्तिन्। 'तितुत्र' (पा० ७।२।९) इतीट्-

प्रतिषेधः। 'अनिदिताम्' (पा० ६।४।२४) इति नलोपः। तस्मिन्नुपपदे करोतेः 'क्विप् च' (पा० ३।२।७६) इति क्विप्। जनय, 'जनी प्रादुर्भावे'। णिच्युपधावृद्धिः। 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' ( धातु० १९। ६३-६७) इति मित्त्वे 'मितां ह्रस्वः' (पा० ६।४।९२) इति ह्रस्वत्वम्।

विंशीमृचमाह—

म०—यच्चित्रमप्न उषसो वहन्तीजानाय शशमानाय भद्रम्। तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ २० ॥

प०—यत्। चित्रम्। अप्नः। उषसः। वहन्ति। ईजानाय। शशमानाय। भद्रम्। तत्। नः। मित्रः। वरुणः। ममहन्ताम्। अदितिः। सिन्धुः। पृथिवी उत। द्यौः ॥२०॥

चित्रं चायनीयम् अप्नः आप्तव्यं यद्धनम् उषसो वहन्ति आनयन्ति ईजानाय हविर्भिरिष्टवते शशमानाय स्तुतिभिः संभजमानाय पुरुषाय भद्रं भजनीयं तद्भवतीति शेषः। यदनेन सूक्तेनाऽस्माभिः प्रार्थितं तन्मित्रादयः षड्देवता ममहन्तां पूजितं कुर्वन्तु।

अप्नः, 'आप्लृ व्याप्तौ'। 'आपः कर्माख्यायां ह्रस्वो नुट् च वा' ( उणादि ) इति बहुलग्रहणादकर्माख्यायामपि असुन्। धातोर्ह्रस्वो नुडागमश्च। ईजानाय, यजतेश्छन्दसि लिट्। 'लिटः कानज्वा' ( पा० ३।२।१०६ )। 'वचिस्वपि' ( पा० ६।१।१५ ) इत्यादिना सम्प्रसारणम्। द्विर्वचनादि। शशमानाय, 'शश प्लुतगतौ'। ताच्छीलिकश्चानश्। तस्य लसार्वधातुकत्वाभावाददुपदेशाल्लसार्वधातुकस्वराभावे चित्स्वर एव शिष्यते।

# अष्टादशोत्तरशततमं सूक्तम् ।

## ( संग्रहे नवमं सूक्तम् )

आ वामित्येकादशर्चं तृतीयं सूक्तं कक्षीवत आर्षं त्रैष्टुभमाश्विनम् । तथा चानुक्रान्तम्—'आ वामेकादशेति' । पूर्वसूक्ताभ्यां सह प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

प्रथमामृचमाह—

म०—आ वां रथो अश्विना श्येनपत्वा सुमृळीकः
स्ववाँ यात्वर्वाङ् । यो मर्त्यस्य मनसो
जवीयान्त्रिबन्धुरो वृषणा वातरंहाः ॥१॥

प०—आ । वाम् । रथः । अश्विना । श्येनऽपत्वा । सुऽमृळीकः ।
स्वऽवान् । यातु । अर्वाङ् । यः । मर्त्यस्य । मनसः ।
जवीयान् । त्रिऽबन्धुरः । वृषणा । वातऽरंहाः ॥१॥

हे अश्विनौ वां युवयोः स्वभूतो रथः अर्वाङ् अस्मदभिमुखम् आ यातु आगच्छतु । कीदृशो रथः । श्येनपत्वा श्येना इत्यश्वनाम । शंसनीयगमनैरश्वैः पतन् गच्छन् । यद्वा । श्येनः पक्षी । स इव शीघ्रं पतन् । सुमृळीकः शोभनसुखयुक्तः स्ववान् धनवान् । हे वृषणौ कामानां वर्षितारौ अश्विनौ यः युष्मदीयो रथः मर्त्यस्य मनुष्यस्य मनसो जवीयान् अतिशयेन वेगवान् । तद्यथा वेगेन कृत्स्नं जगद्व्याप्नोति ततोऽप्यतिशयेन क्षणमात्रादेव सर्वं जगत्पर्य्यटतीत्यर्थः । त्रिबन्धुरः बन्धुरं वेष्टितं सारथेः स्थानम् । त्रिप्रकारेण बन्धुरेण युक्तः ।

वातरंहाः वातस्य वायोः रंहा वेग इव वेगो यस्य स तथोक्तः। अनेनाप्रतिहतगतित्वमुच्यते। स रथ इति पूर्वत्रान्वयः।

श्येनपत्वा, 'पत्लृ गतौ'। 'अन्येभ्योपि दृश्यन्ते' ( पा० ३।२।७५ ) इति वनिप्। दासीभारादिः। यद्वा। दृशिग्रहणस्य विध्यन्तरोपसंग्रहार्थत्वात् भावे वनिप्। ततो बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। जवीयान्, जवोऽस्यास्तीति जववान्, अतिशयेन जववान्। आतिशायनिक ईयसुन्। 'विन्मतोर्लुक्' ( पा० ५।३।६५ )। 'टेः' ( पा० ६।४। १४३) इति टिलोपः।

द्वितीयामृचमाह—

म०—त्रिबन्धुरेण त्रिवृता रथेन त्रिचक्रेण सुवृता यातमर्वाक्। पिन्वतं गा जिन्वतमर्वतो नो वर्धयतमश्विना वीरमस्मे ॥२॥ ॥२॥

प०—त्रिऽबन्धुरेण। त्रिऽवृता। रथेन। त्रिऽचक्रेण। सुऽवृता। आ। यातम्। अर्वाक्। पिन्वतम्। गाः। जिन्वतम्। अर्वतः। नः। वर्धयतम्। अश्विना। वीरम्। अस्मे इति ॥२॥

त्रिबन्धुरेण बन्धुरं सारथिस्थानं त्रिप्रकारबन्धुरोपेतेन त्रिवृता त्रिधा वर्तमानेन त्रिचक्रेण चक्रत्रयोपेतेन सुवृता शोभनं गच्छता रथेन अर्वाक् अस्मदभिमुखम् आ यातम् आगच्छतम् आगत्य चास्मदीया गाः पिन्वतं पयसा पूरयतम्। नोऽस्माकम् अर्वतोऽश्वान् जिन्वतं प्रीणयतम्। अपि च हे अश्विनौ अस्मे अस्माकं वीरं पुत्रादिकं वर्धयतं प्रवृद्धं कुरुतम्।

त्रिचक्रेण, त्रीणि चक्राणि यस्य तथोक्तः। 'त्रिचक्रादीनां छन्दस्युपसंख्यानम्' (वा० पा० ६।२।१९९) इति उत्तरपदान्तोदात्तत्वम्।

तृतीयामृचमाह—

म०—प्रवद्यामना सुवृता रथेन दस्राविमं शृणुतं श्लोकमद्रेः । किमङ्ग वां प्रत्यवर्तिं गमिष्ठाहुर्विप्रासो अश्विना पुराजाः ॥ ३ ॥

प०—प्रवत्ऽयामना । सुऽवृता । रथेन । दस्रौ । इमम् । शृणुतम् । श्लोकम् । अद्रेः । किम् । अङ्ग । वाम् । प्रति । अवर्तिम् । गमिष्ठा । आहुः । विप्रासः । अश्विना । पुराऽजाः ॥ ३ ॥

हे दस्रौ दर्शनीयावश्विनौ प्रवद्यामना प्रकृष्टगमनेन शीघ्रगामिना सुवृता शोभनवर्तनेन रथेनागत्य अद्रेः आदरं कुर्वतः स्तोतुः इमं श्लोकं स्तुतिलक्षणामिमां वाचं शृणुतम् । अङ्गाश्विना हे अश्विनौ पुराजाः पूर्वजाताश्चिरन्तनाः विप्रासो मेधाविनः वां युवाम् अवर्तिं स्तोतॄणां दारिद्र्यं प्रति तत्परिहर्तुं गमिष्ठा गन्तृतमावाहुः कथयन्ति । किंशब्दः प्रदर्शनफलप्रश्ने वर्तते । किं न कथयन्ति । कथयन्त्येव सर्वे । तथा सत्यागन्तव्यमिति ।

प्रवद्यामना, स्वोपसृष्टे धात्वर्थे वर्तमानात् प्रशब्दात् 'उपसर्गाच्छन्दसि धात्वर्थे' ( पा० ५ । १ । ११८ ) इति वतिः । 'या प्रापणे' । 'आतो मनिन्' ( पा० ३।२।७४ ) इति बहुलवचनाद्भावे मनिन् । ततो बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अद्रेः, 'दृङ् आदरे' । आङ्पूर्वादस्मादौणादिकः क्रिप्रत्ययः आङो ह्रस्वश्च । गमिष्ठा, गन्तृशब्दात् 'तुश्छन्दसि' ( पा० ५।३।५९ ) इति इष्ठन् । 'तुरिष्ठेमेयःसु' ( पा० ६।४।१५४ ) इति तृलोपः । 'सुपां सुलुक्' ( पा० ७।१।३९ ) इति विभक्तेराकारः । आहुः, प्रत्ययस्वरः । पादादित्वान्निघाताभावः ।

चतुर्थीमृचमाह—

म०—आ वां श्येनासो अश्विना वहन्तु रथे युक्तास

आशवः पतङ्गाः । ये अप्तुरो दिव्यासो न गृध्रा अभि प्रयो नासत्या वहन्ति ॥ ४ ॥

प०—आ । वाम् । श्येनासः । अश्विना । वहन्तु । रथे । युक्तासः । आशवः । पतङ्गाः । ये । अप्ऽतुरः । दिव्यासः । न । गृध्राः । अभि । प्रयः । नासत्या । वहन्ति ॥ ४ ॥

हे अश्विनौ रथे युक्तासः सारथिना वहनप्रदेशे योजिताः आशवः व्यप्नुवन्तः पतङ्गाः पतनसमर्थाः श्येनासः शंसनीयगमनाः अश्वाः वां युवाम् आ वहन्तु अस्मत्समीपमानयन्तु । ये अश्वाः अप्तुरः आप इव त्वरोपेताः, दिव्यासो न गृध्राः अन्तरिक्षे वर्तमाना गृध्राख्याः पक्षिण इव शीघ्रं गच्छन्तः, हे नासत्यौ युवां प्रयो हविर्लक्षणमन्नम् अभिलक्ष्य वहन्ति प्रापयन्ति । तादृशा इति पूर्वत्र सम्बन्धः ।

अप्तुरः, 'तुर त्वरणे' । अप्शब्दोपपदादस्मात् 'क्विप् च' (पा० ३ । २ । ७६ ) इति क्विप् ।

पञ्चमीमृचमाह—

म०—आ वां रथं युवतिस्तिष्ठदत्र जुष्ट्वी नरा दुहिता सूर्यस्य । परि वामश्वा वपुषः पतङ्गा वयो वहन्त्वरुषा अभीके ॥ ५ ॥

प०—आ । वाम् । रथम् । युवतिः । तिष्ठत् । अत्र । जुष्ट्वी । नरा । दुहिता । सूर्यस्य । परि । वाम् । अश्वाः । वपुषः । पतङ्गाः । वयः । वहन्तु । अरुषाः । अभीके ॥ ५ ॥

हे नरा नेतारावश्विनौ युवतिस्तरुणी सूर्यस्य दुहिता जुष्टी प्रीता सती वां युवयोः अत्र इमं रथम् आ तिष्ठत् आरूढवती । तया सहितौ वां युवाम् अश्वाः अभीके गृहसमीपे तं रथं परि वहन्तु परिप्रापयन्तु । कीदृशा अश्वाः वपुषः । वपुरिति रूपस्य शरीरस्य वा नामधेयम् । तद्वन्तः । छान्दसो मत्वर्थीयस्य लोपः । पतंगाः उत्पतनसमर्थाः वयो गच्छन्तः अरुषा आरोचमानाः हिंसकरहिता वा ।

अत्र 'इतराभ्योऽपि दृश्यन्ते' (पा० ५ । ३ । १४) इति दृशिग्रहणाद्भवदाद्ययोगेऽपि इदम्शब्दात् विभक्त्यर्थे त्रल्प्रत्ययः । जुष्टी, 'जुषी प्रीतिसेवनयोः' । औणादिकः क्तुप्रत्ययः । 'वोतो गुणवचनात्' (पा० ४ । १ । ४४) इति ङीष् ।

षष्ठीमृचमाह—

म०—उद्वन्दनमैरतं दंसनाभिरुद्रेभं दस्रा वृषणा शचीभिः । निष्टौग्र्यं पारयथः समुद्रात्पुनश्च्यवानं चक्रथुर्युवानम् ॥ ६ ॥

प०—उत् । वन्दनम् । ऐरतम् । दंसनाभिः । उत् । रेभम् । दस्रा । वृषणा । शचीभिः । निः । तौग्र्यम् । पारयथः । समुद्रात् । पुनरिति । च्यवानम् । चक्रथुः । युवानम् ॥ ६ ॥

हे अश्विनौ वन्दनमेतत्संज्ञम् ऋषिं दंसनाभिरात्मीयैः कर्मभिः कूपादुदैरतम् उदैरयतम् उदगमयतम् । हे दस्रा दर्शनीयौ वृषणा कामानां वर्षितारावश्विनौ शचीभिः कर्मभी रेभम् एतत्संज्ञम् ऋषिं दश रात्रीर्नवाहानि च कूपे निवसन्तं तस्मादुदैयतम् । उदतारयतम् । तथा

तौग्र्यं तुग्रस्य पुत्रं भुज्युं समुद्रे निमग्नम् आत्मीयाभिर्नौभिरश्वैश्च समुद्रान्निष्पारयथः तीरदेशं प्रापितवन्तौ। तथा च्यवानम् ऋषिं जीर्णं पुनर्युवानं यौवनोपेतं चक्रथुः कृतवन्तौ।

ऐरतम्, 'ईर गतौ कम्पने च।' ण्यन्ताल्लुङि 'छन्दस्युभयथा' ( पा० ३।४।११७ ) इति शप आर्धधातुकत्वात्। 'णेरनिटि' ( पा० ६।४।५१ ) इति णिलोपः।

सप्तमीमृचमाह—

म०—युवमत्रयेऽवनीताय तप्तमूर्जमोमानमश्विनावधत्तम्। युवं कण्वायापिरिप्ताय चक्षुः प्रत्यधत्तं सुष्टुतिं जुजुषाणा ॥ ७ ॥

प०—युवम्। अत्रये। अवऽनीताय। तप्तम्। ऊर्जम्। ओमानम्। अश्विनौ। अधत्तम्। युवम् ।। कण्वाय। अपिऽरिप्ताय। चक्षुः। प्रति। अधत्तम्। सुऽस्तुतिम्। जुजुषाणा ॥७॥

हे अश्विनौ युवं युवाम् अवनीताय शतद्वारे पीडायन्त्रगृहे अवस्तान्नीतायात्रये तप्तं पीडार्थं प्रक्षिप्तं तुषाग्निं शीतेनोदकेनावारयेथाम्। अपि चास्मै अत्रये ओमानं सुखकरम् ऊर्जं रसवदन्नम् अधत्तम् प्रायच्छतम्। तथा सुष्टुतिं शोभनां स्तुतिं जुजुषाणा सेवमानौ युवाम् अपिरिप्ताय असुरैर्ब्राह्मण्यपरीक्षार्थम् इहासीनः सन् व्युष्टामुषसं जानीहीति अन्धकारवति गृहे प्रवेशिताय कण्वाय ऋषये चक्षुर्व्युष्टाया उषसः प्रकाशकं वीणाशब्दं प्रत्यधत्तं कृतवन्तौ। यद्वा। अपिरिप्तायापिलिप्ताय पटलेन पिहितदृष्टये एवंविधाय कण्वाय चक्षुरिन्द्रियं प्रत्यधत्तम् प्रत्यस्थापयतम्।

ओमानम्, अवतेरौणादिको मनिः। 'ज्वरत्वर' ( पा० ६।४।२० ) इत्यादिना वकारस्योपधायाश्च ऊठ्। गुणः। अपिरिप्ताय, 'लिप

उपदेहे'। अस्मात् कर्मणि निष्ठा। कपिलकादित्वाल्लत्वविकल्पः। 'गतिरनन्तरः' (पा० ६। २। ४९) इति गतेः प्रकृतिस्वरत्वम्। जुजुषाणा, 'जुषी प्रीतिसेवनयोः'। छान्दसो लिट्। 'लिटः कानज्वा' (पा० ३। २। १०६) 'सुपां सुलुक्' (पा० ७। १। ३९) इति विभक्तेराकारः।

अष्टमीमृचमाह—

म—युवं धेनुं शयवे नाधितायापिन्वतमश्विना पूर्व्याय। अमुञ्चतं वर्तिकामंहसो निः प्रति जंघां विश्पलाया अधत्तम् ॥८॥

प०—युवम्। धेनुम्। शयवे। नाधिताय। अपिन्वतम्। अश्विना। पूर्व्याय। अमुञ्चतम्। वर्तिकाम्। अंहसः। निः। प्रति। जंघाम्। विश्पलायाः। अधत्तम् ॥८॥

अश्विना हे अश्विनौ युवं युवां पूर्व्याय पुरातनाय नाधिताय याचमानाय शयवे एतत्संज्ञकाय ऋषये धेनुं निवृत्तप्रसवामदोग्ध्रीम् अपिन्वतं पयसा असिञ्चतम्। सर्वदा पयस्विनीमकुरुतमित्यर्थः। अपि च वर्तिकां वृकेण ग्रस्तां चटकसदृशीं शकुनिम् अंहसः वृकास्यलक्षणात् पापात् निरमुञ्चतम् निरमोचयतम्। यद्वा। पुनःपुनर्वर्तत इति वर्तिका उषाः। तामादित्येनाभिग्रस्तां युवाम् अमोचयतम्। तथा विश्पलायै संग्रामे छिन्नजंघायै अगस्त्यपुरोहितस्य खेलस्य सम्बन्धिन्यै एतत्संज्ञायै स्त्रियै आयसीं जंघां प्रत्यधत्तं प्रत्यस्थापयतम् समयोजयतमित्यर्थः।

नवमीमृचमाह।

म०—युवं श्वेतं पेदव इन्द्रजूतमहिहनमश्विना-

दत्तमश्वम् । जोहूत्रमर्यो अभिभूतिमुग्रं
सहस्रसां वृषणं वीड्वङ्गम् ॥९॥

प०—युवम् । श्वेतम् । पेदवे । इन्द्रऽजूतम् । अहिऽहनम् । अश्विना ।
अदत्तम् । अश्वम् । जोहूत्रम् । अर्यः । अभिऽभूतिम् । उग्रम् ।
सहस्रऽसाम् । वृषणम् । वीळुअङ्गम् ॥९॥

अश्विना हे अश्विनौ पेदवे पेदुनाम्ने राज्ञे युवं युवां श्वेतं श्वेतवर्णं कश्चिदश्वम् अदत्तं प्रायच्छतम् । कीदृशं । इन्द्रजूतम् इन्द्रेण युवाभ्यां गमितं दत्तमित्यर्थः । अहिहनं शत्रूणां हन्तारं जोहूत्रम् अतिशयेन संग्रामेष्वाह्वातारम् । अर्यः अरेः शत्रोः अभिभूतिम् अभिभावुकम् । उग्रम् उद्गूर्णं वीर्यवन्तमित्यर्थः । सहस्रसां सहस्रसंख्याकस्य धनस्य संभक्तारं दातारं वा वृषणं सेक्तारं युवानमित्यर्थः । वीड्वङ्गं दृढाङ्गम् ।

इन्द्रजूतम्, 'जु' इति सौत्रो धातुर्गत्यर्थः । अस्मादन्तर्भावितण्यर्थात् कर्मणि निष्ठा । 'तृतीया कर्मणि' (पा० ६ । २ । ४८) इति पूर्वपदप्रकृतिस्वरत्वम् । जोहूत्रम्, ह्वयतेर्यङ्लुगन्तादौणादिकस्त्रप्रत्ययः । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । अर्यः, अरिशब्दात् षष्ठ्येकवचने 'जसादिषु छन्दसि वा वचनम्' इति । 'घेर्ङिति' (पा० ७, ३।१११) इति गुणस्य विकल्पितत्वाद्भावे यणादेशः । 'उदात्तयणः' (पा० ६ । १ । १७४) इति विभक्तेरुदात्तत्वम् । अभिभूतिम्, अभिभूयतेऽनेनेत्यभिभूतिः । करणे क्तिन् । 'तादौ च' (पा० ६।२।५०) इति गतेः प्रकृतिस्वरत्वम् । सहस्रसाम्, सनोतेः सनतेर्वा 'जनसनखन' (पा० ३ । २।६७) इति विट् । 'विड्वनोरनुनासिकस्यात्' (पा०६।४।४१) इत्यात्वम् ।

दशमीमृचमाह—

म०—ता वां नरा स्ववसे सुजाता हवामहे अश्विना

नाधमानाः। आ न उप वसुमता रथेन गिरो

जुषाणा सुविताय यातम् ॥१०॥

प०—ता। वाम्। नरा। सु। अवसे। सुऽजाता। हवामहे।

अश्विना। नाधमानाः। आ। नः। उप। वसुऽमता।

रथेन। गिरः। जुषाणा। सुविताय। यातम् ॥१०॥

नरा नेतारो हे अश्विनौ सुजाता शोभनजन्मानौ ता वां तौ युवां नाधमानाः धनं याचमानाः वयं स्तोतारः अवसे रक्षणार्थं सु हवामहे शोभनमाह्वयामहे। गिरः स्तुतीः जुषाणा सेवमानौ युवां वसुमता धनयुक्तेन रथेन नोऽस्मानुपा यातम् उपागच्छतम्। किमर्थम्। सुविताय सुष्ठु प्राप्तव्याय धनाय सुखाय वा।

सुजाता, शोभनं जातं जन्म ययोस्तौ सुजातौ। 'सुपांसुलुक्' (पा० ७।१।३९) इति विभक्तेराकारः। 'नञ्सुभ्याम्' (पा० ६।२।१७२) इत्युत्तरपदान्तोदात्तत्वम्। नाधमानाः, 'नाधृ याच्ञायाम्'। जुषाणा, 'जुषी प्रीतिसेवनयोः'। ताच्छीलिकश्चानश्। तुदादित्वाच्छः। पूर्ववद्विभक्तेराकारः। सुविताय, सुपूर्वादेतेः कर्मणि निष्ठा। तन्वादित्वादुवङ्। 'सूपमानात् क्तः' (पा० ६।२।१४५) इत्युत्तरपदान्तोदात्तत्वम्।

एकादशीमृचमाह—

म०—आ श्येनस्य जवसा नूतनेनास्मे यातं नासत्या

सजोषाः। हवे हि वामश्विना रातहव्यः

शश्वत्तमाया उषसो व्युष्टौ ॥११॥

प०—आ। श्येनस्य। जवसा। नूतनेन। अस्मे इति। यातम्।

नासत्या । सऽजोषाः । हवे । हि । वाम् । अश्विना । रात-
ऽहव्यः । शश्वत्ऽतमायाः । उषसः । विऽउष्टौ ॥११॥

हे नासत्यावश्विनौ सजोषाः सजोषसौ समानप्रीतियुक्तौ श्येनस्य शंसनीयं गच्छतोऽश्वस्य नूतनेन नवतरेण प्रत्यग्रेण जवसा वेगेन सहितौ युवामस्मे अस्मान् आ यातम् आगच्छतम् । अश्विना हे अश्विनौ रातहव्यो वां युवाभ्यां दातव्येन हविषा युक्तः सन् शश्वत्तमायाः कालात्मकतया नित्याया उषसः व्युष्टौ विवासनसमये वां युवां हवे आह्वयामि । हिर्हेतौ । हि यस्मादेवं तस्मात् आ यातमित्यर्थः ।

अस्मे 'सुपांसुलुक्' (पा० ७।१।३९) इति शसः शेआदेशः । सजोषाः । तेनैव द्विवचनस्य सुआदेशः । हवे, ह्वेञो लडुत्तमैकवचने 'बहुलं छन्दसि' (पा० ६ । १ । ३४) इति सम्प्रसारणम् । शब्गुणावादेशाः । शश्वत्तमायाः, 'उत्तमशश्वत्तमौ सर्वत्र' (पा० ६ । १ । १६०) इत्युञ्छादिषु पाठादन्तोदात्तत्वम् ।

———

# चतुर्विंशत्युत्तरशततमं सूक्तम्

## (संग्रहे दशमं सूक्तम्)

उषा उच्छन्तीति त्रयोदशर्चं चतुर्थं सूक्तं दैर्घतमसः कक्षीवत आर्षम् त्रैष्टुभमुषस्यम् । उषा उच्छन्तीत्यनुक्रान्तं । विनियोगस्तु पूर्वसूक्त एवोक्तः ॥

तत्र प्रथमा—

म०—उषा उच्छन्ती समिधाने अग्ना उद्यन्त्सूर्य उर्विया ज्योतिरश्रेत् । देवो नो अत्र सविता न्वर्थं प्रासावीद् द्विपत्प्र चतुष्पादित्यै ॥१॥

प०—उषाः । उच्छन्ती । सम्ऽइधाने । अग्नौ । उत्ऽयन् । सूर्यः । उर्विया । ज्योतिः । अश्रेत् । देवः । नः । अत्र । सविता । नु । अर्थम् । प्र । असावीत् । द्विऽपत् । प्र । चतुःऽपत् । इत्यै ॥१॥

एषोषाः समिधाने अग्नौ । अग्नित्वसामान्येनैकवचनम् । अग्निषु समिध्यमानेषु सत्सु । कर्मार्थं कर्तृप्रयोगः । उषःकाले ह्याहवनीयादयः प्रज्वाल्यन्ते । उच्छन्ती तमो विवासयन्ती उर्विया उरु बहुलं ज्योतिः प्रकाशम् अश्रेत् सेवते प्रकाशते प्रकाशयति वा सर्वम् । किमिव । उद्यन् सूर्यः । उपमाप्रधाननिर्देशः । उदितः सूर्य इव, सूर्यो यथा प्रकाशयति तथेत्यर्थः । अत्र त्वदुदयानन्तरम् अस्मिन् कर्मणि

वा सविता देवः सर्वस्य प्रेरकः सूर्यो नोऽस्मदर्थं नु क्षिप्रम् अर्थम् । अर्थशब्दोऽत्र विशेषणवाची नपुंसकलिङ्गः । 'अयन्नर्थानि कृणवन्नपांसि' ( ऋ० ७ । ६३ । ४ ) इत्यादौ तथा दृष्टत्वात् । अरणीयं द्विपत् पादद्वयोपेतं मनुष्यादिरूपं धनं प्रासावीत् अनुजानातु, ददात्वित्यर्थः । तथा चतुष्पत् पादचतुष्टयोपेतं गवादिरूपं धनं प्रासावीत् । किमर्थम् । इत्यै द्विपदां चतुष्पदां च गमनाय । यद्वा । न इत्या इति सम्बन्धः । अस्मद्गमनागमनादिव्यापारायेत्यर्थः ।

अथ द्वितीया—

म०—अमिनती दैव्यानि व्रतानि प्रमिनती मनुष्या युगानि । ईयुषीणामुपमा शश्वतीनामायतीनां प्रथमोषा व्यद्यौत् ॥२॥

प०—अमिनती । दैव्यानि । व्रतानि । प्रऽमिनती । मनुष्या । युगानि । ईयुषीणाम् । उपमा । शश्वतीनाम् । आऽयतीनाम् । प्रथमा । उषा । वि । अद्यौत ॥२॥

दैव्यानि व्रतानि देवसम्बन्धीन्यग्निहोत्रादीनि कर्माणि । व्रतमिति कर्मनाम व्रतं कर्वरमिति तन्नामसु पाठत् । तानि कर्माणि अमिनती अहिंसन्ती भानप्रदानेनानुकूलं कुर्वती । तथा मनुष्या मनुष्याणां युगानि युगोपलक्षितान्निमेषादिकालावयवान् प्रमिनती प्रकर्षेण हिंसन्ती आयुः क्षपयन्तीत्यर्थः । यद्वा । युगानि युग्मानि परस्परसंयोगं प्रमिनती हिंसन्ती, वियोगं कुर्वतीत्यर्थः । उषः काले सर्वे यथायथं स्वस्वव्यापाराय गच्छन्तीति प्रसिद्धम् । किं च ईयुषीणां गच्छन्तीनां अतीतानां, शश्वतीनां नित्यानामुषसाम् उपमा

ताभिः सदृशीत्यर्थः। सादृश्यं च 'सदृशीरद्य सदृशीरिदु श्वः' इत्यत्रोक्तम् ( ऋ० १ । १२३ । ८ )। तथा आयतीनां प्रथमा आगामिनीनामुषसां प्रथमभाविनी सती व्यद्यौत् विशेषेण प्रकाशते। यद्वा। ईयुषीणां गमनशीलानां पश्वादीनां शश्वतीनां सन्ततिप्रवाहरूपेण नित्यानाम् उपमा तद्वन्नित्येर्थः। तथा आयतीनां रात्र्यवसानसमये उत्पद्यमानानां प्रज्ञावागादीनां प्रथमा प्रथमभाविनी। उषस्यागतायां वाचो बुद्धयश्च स्फुरन्तीति प्रसिद्धम्। तादृशी देवी व्यद्यौत् प्राणिनामनुग्रहाय द्योतते।

अथ तृतीया—

म०—एषा दिवो दुहिता प्रत्यदर्शि ज्योतिर्वसाना
समना पुरस्तात्। ऋतस्य पन्थामन्वेति
साधु प्रजानतीव न दिशो मिनाति ॥३॥

प०—एषा। दिवः। दुहिता। प्रति। अदर्शि। ज्योतिः।
वसाना। समना। पुरस्तात्। ऋतस्य। पन्थाम्। अनु। एति।
साधु। प्रजानतीऽइव। न। दिशः। मिनाति ॥ २ ॥

एषोषाः दिवो द्योतमानात्मकस्य द्युलोकस्य दुहिता दुहितृस्थानीया। तत उत्पद्यमानत्वात् दुहितेत्युपचर्य्यते। पुरस्तात् पूर्वस्यां दिशि प्रति प्रत्येकम् अदर्शि, दृश्यते, सर्वेषामपि प्राणिनामाभिमुख्येन प्रकाशते इत्यर्थः। कीदृशी सा। ज्योतिर्वसाना तेजोरूपं वस्त्रमाच्छादयन्ती तेजसा प्रकाशयन्ती। समना सम्यगानयित्री चेष्टयित्री। अन्तर्भावितण्यर्थोऽयम्। यद्वा। सह युगपदेव मन्यतेऽवबुध्यते प्राणिभिरिति समना। व्युत्पत्त्यनवधारणादनवग्रहः। सा तादृशी ऋतस्यादित्यस्य पन्थां पन्थानं मेरोः प्रान्तदेशम् अनुक्रमेण

साधु सम्यगेति गच्छति । सूर्यो यत्र यत्र गच्छति तत्र तत्र पुरस्तादुषा अपि गच्छतीत्यर्थः । सैव विशेष्यते । प्रजानतीव प्रियभूतस्य सूर्यस्य मार्गो मयापि गन्तव्य इति चेतयन्तीव । यथा लोके प्रियतमेऽनुरागयुक्ता काचिद्भर्तारं सर्वास्ववस्थासु न विमुञ्चति तथेयमपीत्यर्थः । किं च दिशः प्रागादिका न मिनाति न हिनस्ति । किन्तूषा यत्र गच्छति सा प्राचीत्येवं प्रागादिव्यवहारं करोतीत्यर्थः ।

अथ चतुर्थी—

म०—उपो अदर्शि शुन्ध्युवो न वक्षो नोधा इवाविरकृत प्रियाणि । अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम् ॥ ४ ॥

प०—उपो इति । अदर्शि । शुन्ध्युवः । न । वक्षः । नोधाःऽइव । आविः । अकृत । प्रियाणि । अद्मऽसत् । न । ससतः । बोधयन्ती । शश्वत्ऽतमा । आ । अगात् । पुनः । आऽईयुषीणाम् ॥ ४ ॥

एषोषाः । उपो इति निपातद्वयसमुदायात्मक एको निपातः । सर्वैः समीप एव अदर्शि दृश्यते । तत्र दृष्टान्तः-शुन्ध्युवो न वक्षः । अत्र नकार उपमार्थीयः उपरिष्टात्प्रयुज्यमानत्वात् । यत्र तु प्रतिषेधो विवक्षितः तत्र पुरस्तान्नकारः प्रयुज्यते ।

तथा च यास्कः—

'पुरस्तादुपचारस्तस्य यत्प्रतिषेधतीति । तस्योदाहरणम्—'नेन्द्रं देवममंसत' इति (ऋ० १० । ८६ । १)। उपरिष्टादुपचारस्तस्य येनोपमि-

मीते इति। तस्योदाहरणं 'दुर्मदासो न सुरायाम्' (ऋ० ८।२।१२) इति (नि० १।४)। शुन्ध्युरादित्यः सर्वेषां शोधकत्वात्। तस्य वक्षो वक्षःस्थानीयो रश्मिसमूहः। स यथा प्रकाशमानो दृश्यते तथेत्यर्थः। यद्वा। शुन्ध्युरिति जलचरः श्वेतवर्णः पक्षिविशेषः। स यथा स्वकीयं वक्षः प्रकाशयन् दृश्यते तद्वदित्यर्थः। किञ्च नोधा इव प्रियाण्याविरकृत। नवनं स्तोत्रं धारयतीति नोधाः। एतन्नामा महर्षिः देवतास्तुतिव्याजेन नानाविधैर्मन्त्रैः प्रियाणि स्वमनीषितान्याविष्कृतवान्। तथैषापि स्वकीयानि सर्वलोकप्रियाणि तेजांस्याविरकरोत्। किञ्च अद्मसन्न। अत्राप्युपमार्थीयो नकारः। अद्यत इत्यद्मान्नम्, तस्य पाकाय गृहे सीदतीत्यद्मसत्, पाचिका योषित्। ससतो बोधयन्ती, सा यथा स्वपतः पुत्रादीन् भोजनाय बोधयति तद्वत्। यद्वा। अद्मेति गृहनाम वरूथम् अद्मेति तन्नामसु पाठात्। तत्र सीदतीत्यद्मसत् जननी, सा यथा स्वपतः पुत्रादीनुषःकाले प्रबोधयति तथा भुवनाख्ये गृहे सीदन्ती तत्रत्यान् प्राणिनः प्रबोधयन्तीयमुषाः। आ ईयुषीणाम् आगमनशीलानां स्त्रीणां मध्ये शश्वत्तमा आगात् पुनःपुनरागच्छति। प्रातर्नियतमागच्छन्तीनां वारयोषितां मध्मे स्वयमेका सती नियतमागच्छतीत्यभिप्रायः।

अत्र निरुक्तम्—उपादर्शि शुन्ध्युवः शुन्ध्युरादित्यो भवति, शोधनात्तस्यैव वक्षो भासोऽध्यूढमिदमपीतरद्वक्ष एतस्मादेवाध्यूढं काये। शकुनिरपि शुन्ध्युरुच्यते, शोधनादेवोदकचरो भवति। आपोऽपि शुन्ध्युव उच्यन्ते, शोधनादेव। नोधा ऋषिर्भवति नवनं दधाति। स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपाणि आविष्कुरुते। अद्मसदद्मान्नं भवत्यद्मसादिनीति वान्नसानिनीति वा। ससतो बोधयन्ती शश्वत्तमागात्। पुनरेयुषीणां स्वपतो बोधयन्ती शाश्वतिकतमागात् पुनरागासिनीनाम् (नि० ४।१६) इति।

अथ पञ्चमी—

म०—पूर्वे अर्धे रजसो अप्त्यस्य गवां जनित्र्यकृत

प्र केतुम् । व्यु प्रथते वितरं वरीय ओभा पृणन्ती पित्रोरुपस्था ॥ ५ ॥

प०—पूर्वे । अर्धे । रजसः । अप्त्यस्य । गवाम् । जनित्री । अकृत । प्र । केतुम् । वि । ऊम् इति । प्रथते । विऽतरम् । वरीयः । आ । उभा । पृणन्ती । पित्रोः । उपऽस्था ॥ ५ ॥

अप्त्यस्य व्यापनशीलस्य विस्तृतस्य रजसो रञ्जकस्यान्तरिक्षलोकस्य। रजःशब्दोऽन्तरिक्षलोकवाची। 'लोका रजांस्युच्यन्ते' (नि० ४। १९) इति यास्केनोक्तत्वात्। तस्य पूर्वे अर्धे पूर्वस्मिन् भागे जनित्री उत्पन्ना सती गवां दिशां रश्मीनां वा केतुं प्रज्ञानं प्राकृत प्रकर्षेण करोति।

यद्वा। रजसो रंजकस्याह्नः, रजःशब्दोऽहर्वाची। 'असृगहनी रजसी उच्येते' (नि० ४। १९) इति यास्केनोक्तत्वात्। तस्य पूर्वेऽर्धे पूर्वस्मिन् भागे उषःकाले गवां वाचां जनित्री जनयित्री उत्पादयित्री। उषःकाले सर्वेषां प्राणिनां वाचः स्फुरन्तीति प्रसिद्धम्।

यद्वा। अप्त्यस्य कर्मसु स्थितस्य जन्तोः केतुं गमनागमनादिरूपं कर्म। केतुरिति कर्मनाम, केतः केतुरिति तन्नामसु पाठात्। प्राकृत, प्रकर्षेण करोति। किञ्च पित्रोः पालयित्र्योर्द्यावापृथिव्योः उपस्थोपस्थे उत्सङ्गे अन्तरालप्रदेशे स्थित्वा उभा उभे द्यावापृथिव्यौ पृणन्ती स्वतेजसा पूरयन्ती। यद्वा। उभा उभयोः पित्रोरिति सम्बन्धः। वितरं विशिष्टतरं वरीयः उरुतरम् अतिविस्तीर्णं यथा भवति, तथा व्यु प्रथते विशेषेणैव प्रख्याता भवति, प्रकाशत इत्यर्थः।

उशब्दोऽवधारणार्थः पादपूरणो वा मिताक्षरेष्वनर्थकाः कमी-मिद्विति ( नि० १ । ९ ) इति यास्केनोक्तत्वात् ।

अथ षष्ठी—

म०—एवेदेषा पुरुतमा दृशे कं नाजामिं न परि वृणक्ति जामिम् । अरेपसा तन्वा३ शाशदाना नार्भादीषते न महो विभाती ॥ ६ ॥

प०—एव । इत् । एषा । पुरुऽतमा । दृशे । कम् । न । अजामिम् । न । परि । वृणक्ति । जामिम् । अरेपसा । तन्वा । शाशदाना । न । अर्भात् । ईषते । न । महः । विऽभाती ॥६॥

एषोषा एवेत् । इच्छब्द एवकारार्थः । इवमेव इदानीं भासमानप्रकारेणैव पुरुतमा विपुलतमा अत्यन्तविस्तृता सती अजामिं विजातीयं मनुष्यादिजातिं न परि वृणक्ति परितः सर्वतो न वर्जयति । तथा जामिं सजातीयं देवजातिं न परि वृणक्ति न परिवर्जयति । मनुष्यादिकं देवादिकं च तदुपलक्षितं लोकद्वयं वा कात्स्न्र्येन प्रकाशयतीत्यर्थः । किमर्थमिति तदुच्यते—दृशे कं सुखेन सर्वेषां दर्शनाय । सुखं यथा भवति तथा सर्वान् दर्शयितुं वा । किञ्च अरेपसा अपापया निर्मलया तन्वा शरीरेण शाशदाना शाशद्यमाना । शाशदानः शाशद्यमानः ( नि० ६ । १६ ) इति यास्कः । स्पष्टतां गच्छन्तीत्यर्थः । विभाती विशेषेण प्रकाशयन्ती सा अर्भादल्पात् पुत्तिकादेः सकाशान्नेषते न गच्छति । तमपि प्रकाशति । तथा महो महतो मेर्वादेः सकाशान्नेषते न गच्छति । तमपि प्रकाशयति । पूर्वं लोकद्वयं प्रकाशते इत्युक्तम् । इदानीमस्मिँल्लोके परमाण्वादिपर्वतपर्यन्तं कृत्स्नं प्रकाशयतीत्यर्थः ।

अथ सप्तमी—

म०—अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम् । जायेव पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः ॥७॥

प०—अभ्राताऽइव । पुंसः । एति । प्रतीची । गर्तऽआरुगिव । सनाये । धनानाम् । जायाऽइव । पत्ये । उशती । सुऽवासाः । उषाः । हस्राऽइव । नि । रिणीते अप्सः ॥ ७ ॥

अभ्रातेव भ्रातृरहितेव पुंसः पित्रादीन् प्रति प्रतीची स्वकीयस्थानात् प्रतिनिवृत्तमुखी सती एति गच्छति । यथा लोके भ्रातृरहिता योषित्स्वोचितवासोऽलङ्कारादिलाभाय पितॄनेति । सति भ्रातरि स एवोचितप्रदानादिना सम्यक् तोषयति । तदभावात् पितरमेव प्राप्नोति । यद्वा । सति स्वभ्रातरि स एव पितुः पिण्डदानादिकं सन्तानकृत्यं करोति । तस्याभावात् स्वयमेव तत्कर्तुं पित्रादीन् गच्छति । तद्वदियमुषा अपि स्वोचितप्रकाशादिलाभाय स्वप्रकाशदानाय वा पितृभूतं सूर्यमाभिमुख्येन गच्छति । अयमेको दृष्टान्तः । तथा धनानां सनये गर्तारुगिवेत्यपरो दृष्टान्तः । गर्त इति गृहनाम 'कृदरो गर्तं' इति तन्नामसु पाठात् । अत्रौचित्येन राजपुरुषैः न्यायनिर्णेतृभिश्चाधिष्ठितं स्थानमुच्यते । तदारोहतीति गर्तारुक् । यथा लोके काचिद्गतभर्तृका योषिद्धनानां स्वकीयरिक्थानां सनये लाभाय गर्तमागच्छति । तां तु सभ्या विचार्य यदीयं रिक्थं लभते चेदत्तैः सन्ताड्य तदीयं धनं वितरन्ति । तथेयमपि धनानां प्रीणनसाधनानां प्रकाशानां सनये लाभाय गर्तमाकाशं सूर्यनिवास-

स्थानम् आरोहति । देशविशेषाचारमपेक्ष्यैवं दृष्टान्तितम् । किञ्च पत्ये उशती कामयमाना सुवासा जायेव। अयमपरो दृष्टान्तः। यथा च लोके सुवासा दुकूलादिशोभनवसना स्वलंकृता पूर्वं रजोदर्शनसमये मलिनवस्त्रा सती स्नानानन्तरं शोभनवस्त्राभरणादिना शोभमाना विशेषेण पतिं भोगाय कांक्षन्ती तेन सह संक्रीडते तथेयमुषाः अतिनैशेनान्धकारेणावृतत्वात् मलिनवसनापि प्रभाते स्वतेजसावृतत्वात् सुवसना सती पतिस्थानीयेन सूर्येण साकं संक्रीडमाना हस्रेव हसनेव अप्सः दन्तस्थानीयानि रूपाणि नीलपीतादीनि । यद्वा। निरूप्यमाणानि पदार्थजातानि नि रिणीते नितरां रिणीते गमयति प्रकाशयतीत्यर्थः । यथा लोके काचिद्रमणीया योषित्स्मितव्याजेन दन्तान् विवृणुते तथेयमपि सर्वाणि रूपाणि प्रकाशयतीत्यर्थः ।

अयं मन्त्रो निरुक्ते स्पष्टं व्याख्यातः ।

अभ्रातृकेव पुंसः पितॄनेत्यभिमुखी सन्तानकर्मणे पिण्डदानाय न पतिं गर्तारोहिणीव धनलाभाय दाक्षिणाजा गर्तः सभास्थाणुर्गृणातेः सत्यसंगरो भवति । तं तत्र यापुत्रा यापतिका सारोहति तां तत्राक्षैराघ्नन्ति सा रिक्थं लभते इति । जायेव पत्ये कामयमाना सुवासा ऋतुकालेषूषा हसनेव दन्तान् विवृणुते ( नि० ३ । ५ ) इति च ।

अथाष्टमी—

म०—स्वसा स्वस्रे ज्यायस्यै योनिमारैगपैत्यस्याः

प्रतिचक्ष्येव । व्युच्छन्ती रश्मिभिः सूर्यस्याञ्ज्यङ्क्ते समनगा इव व्राः ॥८॥

प०—स्वसा । स्वस्रे । ज्यायस्यै । योनिम् । अरैक् । अप ।

एति । अस्याः । प्रतिचक्ष्याऽइव । विऽउच्छन्ती । रश्मिऽभिः ।

सूर्यस्य । अञ्जि । अङ्क्ते । समनगाःऽइव । व्राः ॥८॥

[ स्वसा भगिनीरूपा रात्रिः स्वस्रे भगिन्यै उषसे कीदृश्यै ज्यायस्यै यद्वा वि ]–एकस्मादेवान्तरिक्षादुत्पन्नत्वात् परस्परं स्वसृभावः। तथाप्यह्नः प्राथम्यात्तेजस्वित्वाच्च [उषसो] ज्यायस्त्वम्। स्वयमेव सरतीति वा स्वसा। रात्रिः स्वस्रे ज्यायस्यै उक्तरीत्या ज्येष्ठायै योनिम् उत्पत्तिस्थानम् अपररात्ररूपम् अरैक् अरिचत्, प्रादात् प्ररेचयतीत्यर्थः। तथा च पूर्वत्राम्नातम् 'रात्र्युषसे योनिमारैक्' ( ऋ० १।११३।१ ) इति। दत्त्वा च अस्या उत्पन्नाया उषसः प्रतिचक्ष्येव ज्ञापयित्वेव स्वयमपसृत्यैव गच्छति। ज्यायस्यामागतायां तस्यै स्वस्थानं दत्त्वा स्वयं तत्सन्निधौ स्थातुमनुचितमिति विज्ञायैवापगच्छति इति भावः। एवमुत्पन्नैषा सूर्यस्य रश्मिभिर्व्युच्छन्ती तमो विवासयन्ती अञ्जि व्यंजकं तेजः। यद्वा। अञ्जि व्यक्तं जगत्। अङ्क्ते अनक्ति, प्रकाशयति। किमिव। समनगा इव, सम्यगननहेतव आपः समनाः। ताः गच्छन्तीति समनगा विद्युतः। व्रा व्राताः। विद्युत्संघा इव। यद्वा। सम्यगननाय गच्छन्तीति समनगाः सूर्यरश्मयः। त इव व्रा व्राताः संघीभूताः। ते यथा अञ्जते जगत्प्रकाशयन्ति तथेत्यर्थः।

व्रात इत्यत्र तकारलोपश्छान्दसः।

अथ नवमी—

म०—आसां पूर्वासामहसु स्वसॄणामपरा पूर्वामभ्येति पश्चात्। ताः प्रत्नवन्नव्यसीर्नूनमस्मे रेवदुच्छन्तु सुदिना उषासः ॥९॥

प०—आसाम्। पूर्वासाम्। अहऽसु। स्वसॄणाम्। अपरा। पूर्वाम्। अभि। एति। पश्चात्। ताः। प्रत्नऽवत्। नव्यसीः। नूनम्। अस्मे इति। रेवत्। उच्छन्तु। सुऽदिनाः। उषसः॥ ९ ॥

स्वसृणां परस्परं स्वसृभावमापन्नानां स्वयं सरन्तीनां वा पूर्वासां पुरातनीनाम् आसामुषसां मध्ये अहसु अहःसु प्रतिदिनम् अपरा अन्या अद्यतन्युषाः पूर्वाम् अतीतदिवससम्बन्धिनीमुषसं पश्चात् अनुसृत्य अभ्येति अभिमुखं गच्छति अव्यवधानेन गच्छतीत्यर्थः। सर्वेष्वहःसु एवमेवाभ्येति। नव्यसीः नवीयस्यः नवतरा आगामिन्यः ता उषासः उषसोऽपि नूनं निश्चयं प्रत्नवत् पुरातन्य इव सुदिनाः शोभनकर्मानुष्ठानसाधनदिवसाः शोभनदिनमुखा वा सत्यः अस्मे अस्माकं रेवत् बहुधनविशिष्टं यथा भवति तथा उच्छन्तु प्रकाशयन्तु पूर्वतन्यो यथोच्छन् तथा आगामिन्योऽपि उच्छन्त्वित्यर्थः।

अथ दशमी—

मं०—प्र बोधयोषः पृणतो मघोन्यबुध्यमानाः पणयः ससन्तु। रेवदुच्छ मघवद्भ्यो मघोनि रेवत्स्तोत्रे सूनृते जारयन्ती ॥१०॥

प०—प्र। बोधय। उषः। पृणतः। मघोनि। अबुध्यमानाः। पणयः। ससन्तु। रेवत्। उच्छ। मघवत्ऽभ्यः। मघोनि। रेवत्। स्तोत्रे। सूनृते। जरयन्ती ॥१०॥

हे मघोनि मघवति अस्मभ्यं दातव्यैर्बहुभिर्धनैस्तद्वति उषः हे उषोदेवि पृणतः हविष्प्रदानस्मान्यजमानान् प्रबोधय प्रज्ञापय प्रतिबुद्धान् कुरु। किञ्च। पणयः व्ययासहिष्णवो वणिजः। पणिर्वणिग्भवतीति ( नि० २।१७ ) यास्कः। पणय इव लुब्धका अबुध्यमाना यागादीनकुर्वाणा अदानशीला अस्मच्छत्रवः ससन्तु स्वपन्तु दीर्घनिद्रा भवन्तु म्रियन्तामित्यर्थः।

तथा च मन्त्रान्तर 'ससन्तु त्या अरातयो बोधन्तु शूर रातयः' ( ऋ० १ । २९ । ४ ) इति ।

किञ्च हे मघोनि अस्मद्दत्तहविर्भिस्तद्वति हे उषः मघवद्भ्यो हविर्लक्षणान्नवद्भ्यो यजमानेभ्यः तेषामर्थं रेवत् धनवत् समृद्धिमत् उच्छ विभाहि । किञ्च हे सूनृते सुष्ठु मनुष्याणां नेत्रि देवि जरयन्ती सर्वप्राणिनः क्षपयन्ती त्वं स्तोत्रे स्तुतिकर्त्रे यजमानाय तदर्थं रेवद्धनवत् समृद्ध्यर्थमुच्छेति शेषः ।

अथैकादशी—

म०—अवेयमश्वैद्युवतिः पुरस्ताद्युङ्क्ते गवामरुणानामनीकम् । वि नूनमुच्छादसति प्र केतुर्गृहंगृहमुप तिष्ठाते अग्निः ॥११॥

प०—अव । इयम् । अश्वैत् । युवतिः । पुरस्तात् । युङ्क्ते । गवाम् । अरुणानाम् । अनीकम् । वि । नूनम् । उच्छात् । असति । प्र । केतुः । गृहम्ऽगृहम् । उप । तिष्ठाते । अग्निः ॥ ११ ॥

इयमुषा युवतिः यौवनोपेतयोषित्स्थानीया । यद्वा सर्वेषु भावेषु मिश्रयन्ती । पुरस्तात् पूर्वस्यां दिशि अवाश्वैत् अत्यर्थमागच्छति वर्धते वा । अत्रावशब्दो विनिग्रहार्थीयः 'न्यवेति विनिग्रहार्थीयौ' ( नि० १ । ३ ) इति यास्केनोक्तत्वात् । तत्कथमवगम्यत इति तत्राह—इयम् अरुणानाम् अरुणवर्णानां गवां प्रसिद्धानामेतन्नामकानामश्वानां वा अनीकं समूहं युङ्क्ते रथे योजयति । अरुण्यो गाव उषसां श्यावाः सवितुः ( नै० १ । १५ ) इति । यथा लोके वाहनसन्नाहं दृष्ट्वा प्रयाणमनुमीयते तथात्राप्यरुणरश्मीनामश्वानां दर्शनादुषा आगच्छतीत्यध्यवसीयते । यद्वा । अरुणानां रश्मीनां समूहं युङ्क्ते

था नूनं निश्चयम् एषा व्युच्छात् तमो विवर्जयिष्यति, यत इयं ा युनक्ति अत एव कारणात्, यथा लोकेऽश्वसन्नाहं दृष्ट्वोदयोऽनु- ीयते तथात्रापीत्यर्थः । तादृशी सा असति असत्प्राये नीरूपे न्तरिक्षे तिरोधायकत्वादशोभने तमसि वा केतुः केतुस्थानीया ापयित्री प्रकर्षेण विविधं भासत इति शेषः । उपसर्गवशाद्योग्याक्रि- ाध्याहारः । यद्वा । असति तमोरूपेऽन्धकारे प्र केतुः प्रकर्षेण ापयित्री सती नूनं व्युच्छादिति पूर्वत्रान्वयः । तस्मिन् काले अग्निः ाहवनीयादिरूपो गृहं गृहं सर्वयजमानगृहम् अग्निहोत्राद्यर्थमुप ष्ठाते उपतिष्ठते दीप्यत इत्यर्थः ।

अथ द्वादशी—

०—उत्ते वयश्चिद्वसतेरपप्तन्नरश्च ये पितुभाजो व्युष्टौ । अमा सते वहसि भूरि वाममुषो देवि दाशुषे मर्त्याय ॥१२॥

—यत् । ते । वयः । चित् । वसतेः । अपप्तन् । नरः । च । ये । पितुऽभाजः । विऽउष्टौ । अमा । सते । वहसि । भूरि । वामम् । उषः । देवि । दाशुषे । मर्त्याय ॥१२॥

ते तव व्युष्टौ सत्यां वयश्चित् गमनवन्तः पक्षिणोऽपि । ित्येषाऽपिशब्दार्थः निपातानामनेकार्थत्वात् । 'उच्चावचेष्वर्थेषु तन्ति' (नि० १ । ४) इति यास्केनोक्तत्वात् । वसतेर्निवासस्था- ीडादेरुत् ऊर्ध्वम् अपप्तन् पतन्ति, पूर्ववाक्ये गृहं गृहमुप तिष्ठाते ्रिरित्युक्तत्वात्तदपेक्षयापिशब्दः । किञ्च नरश्च मनुष्याश्च पितुभाजः ्वन्तः अन्नार्थिनः कृषिवाणिज्यादिकर्तारः स्वस्वव्यापारार्थमुत् ुखाः अपप्तन् गच्छन्ति । तथा मन्त्रान्तरं—'पद्वदीयत उत्पात-

यत्ति पक्षिणः' ( ऋ० १।४८।५ ) इति । एवं सत्यां हे देवि देवनशीले उषोदेवते अमा गृहे देवयजनाख्ये सते तिष्ठते यजमानाय तदर्थम् । अमेति गृहनाम अमा दम इति तन्नामसु पठितत्वात्। यद्वा। अमा सह हूयमानेनाग्निना सह निवसते यजमानाय । अमा वसेता-मित्यादौ सहार्थे प्रयोगात् । मर्त्याय मनुष्याय दाशुषे हविर्दत्तवते यजमानाय भूरि वामं बहु शोभनं धनं वहसि प्रापयसि ।

अथ त्रयोदशी—

म०—अस्तोढ्वं स्तोम्या ब्रह्मणा मेऽवीवृधध्वमु-शतीरुषासः । युष्माकं देवीरवसा सनेम सहस्रिणं च शतिनं च वाजम् ॥१३॥

प०—अस्तोढ्वम् । स्तोम्याः । ब्रह्मणा । मे । अवीवृधध्वम् । उशतीः । उषसः । युष्माकम् । देवीः । अवसा । सनेम सहस्रिणम् । च । शतिनम् । च । वाजम् ॥१३॥

एवं सूक्तद्वयोक्तरीत्या बहुधा स्तुत्वा तां च स्तुतिं अनया निवेदयित्वा स्वाभीष्टं प्रार्थयते । हे स्तोम्याः, स्तोमः स्तो तदर्हन्तीति स्तोम्याः स्तुत्यर्हाः उषसः । यतो यूयं तादृश्यः अतो मत्स्वभूतेन ब्रह्मणा सूक्तद्वयगतमन्त्ररूपेण स्तोत्रेणास्तोढ्वं स्तु भवत । किं च हे उषासः, उशतीः स्तोतॄनस्मान् अस्मत्सम्पृ वा कामयमाना यूयमवीवृधध्वम् अस्मान् प्रवर्धयत । किं च हे दे देव्यो देवनशीलाः युष्माकम् अवसा युष्मत्सम्बन्धिना रक्षणेन व सहस्रिणं सहस्रसंख्याकम् अभीष्टं धनं सनेम लभेमहि । तथा शति च वाजं शतसंख्याकम् अपरिमितं धनं सनेम। युष्मत्कृतेन शतसह परिमितधनादिरूपरक्षणेन वयमपि अर्थिभ्यः शतसहस्रपरिमित धनस्य सनितारो भवेमेत्यर्थः ।

# पंचविंशत्युत्तरशततमं सूक्तम्

## ( संग्रहे एकादशं सूक्तम् )



प्राता रत्नमिति सप्तर्चं पञ्चमं सूक्तं काक्षीवतम् । दानस्य स्तूयमानत्वाद्दानदेवत्यं 'या तेनोच्यते सा देवता' ( अनु० २।५ ) इति परिभाषितत्वात् । त्रैष्टुभम् । उप इत्यादिके द्वे जगत्यौ । प्राता रत्नं सप्त स्वनयस्य दानस्तुतिरुप जगत्यावित्यनुक्रमणिका ।

तत्र प्रथमा—

म०—प्राता रत्नं प्रातरित्वा दधाति तं चिकित्वा-
न्प्रतिगृह्या नि धत्ते । तेन प्रजां वर्धयमान
आयू रायस्पोषेण सचते सुवीरः ॥ १ ॥

प०—प्रातरिति । रत्नम् । प्रातःऽइत्वा । दधाति । तम् । चिकि-
त्वान् । प्रतिऽगृह्य । नि । धत्ते । तेन । प्रऽजाम् । वर्धयमानः ।
आयुः । रायः । पोषेण । सचते । सुऽवीरः ॥ १ ॥

अत्रेतिहासमाचक्षते—

दैर्घतमसः कक्षीवान्नाम ऋषिः ब्रह्मचर्यं चरिष्यन् वेदाभ्यासाय गुरुकुले चिरकालमुषित्वा वेदान् सम्यगधीत्य व्रतानि च चरित्वा तेनानुज्ञातः पुनः स्वगृहं प्रति प्रयास्यन् मध्ये मार्गे रात्रौ विश्रान्तः । प्रभाते भावयव्यस्य पुत्रः स्वनयो नाम राजा अनुचरैः संक्रीडमानोऽकस्मात् कक्षीवतोऽन्तिकमाससाद । स च रभसा प्रतिबुद्धः सहसो-

त्तस्थौ। तं च राजा पाणिं गृहीत्वा स्वकीय आसन उपवेश्यास्य सौन्दर्य्यमवगत्य स्वकन्याप्रदानमनाः पप्रच्छ, भगवन् कस्य पुत्रः किंनामा त्वमिति। स च पृष्टो मातरं पितरं च स्ववृत्तान्तं चाचचक्षे। स च राजा संभाव्य इत्यवगत्य मुदितमनाः स्वगृहं प्राप्यास्मै मधुपर्कमारचय्य वस्त्रमाल्यादिभिः पूजयित्वा सरथा दश कन्याः शतनिष्कानश्वशतं पुंगवानां शतं गवां षष्ठ्युत्तरसहस्रं पुनरेकादश रथांश्च प्रादात्। स च सर्वमनुक्रमेण प्रतिगृह्य दीर्घतमसोऽन्तिकमागत्य तस्मै प्रादर्शयत्।

ननु कक्ष्या नामाश्वबन्धनी रज्जुः तद्वान् कक्षीवान्। अश्वबन्धनं च राज्ञ एवोचितं। अतोऽस्य राजान्यत्वात् प्रतिग्रहो नोपपद्यते।

"याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः" (मनु० १० । ७६ ) इत्युक्तत्वात्। तस्माद्ब्राह्मणस्यैवाधिकारो न तु क्षत्रियस्येति। नैष दोषः।

यद्यप्यसौ कलिङ्गाख्यस्य राज्ञः पुत्रः तथापि तेन कलिङ्गेन स्वयं वृद्धत्वादपत्योत्पादनाय सामर्थ्यमलभमानेन तदुत्पादनाय याचितो दीर्घतमा ऋषिः उशिग्नामिकाम् अपत्योत्पादनाय प्रेषितया राजमहिष्यातिजरठेन महर्षिणा सह रन्तुं लज्जमानया स्ववस्त्राभरणैरलंकृत्य स्वप्रतिनिधित्वेन प्रेषितामुशिग्नामिकां योषितं दासीमित्यवगत्य मन्त्रपूतेन जलेनाभिषिच्य ऋषिपुत्रीं कृत्वा तया सह रेमे। तदुत्पन्नः कक्षीवान्नाम ऋषिः। एतत्सर्वमस्माभिः पूर्वाध्याये 'नासत्याभ्याम्' ( ऋ० १।११६ ) इत्यत्र सूक्ते विस्तरेण प्रतिपादितम्। अतोऽस्य क्षत्रियसम्बन्धात् कक्षीवानिति नामोपपन्नम्। दीर्घतमसः परमर्षेरुत्पन्नत्वेन ब्राह्मणत्वात् प्रतिग्रहोप्युपपन्न एव।

इदमादि सूक्तद्वयं स्वनयस्य राज्ञो दानप्रशंसाख्यानप्रतिपादकम्।

नन्वनुक्रमण्यां स्वनयस्य दानस्तुतिरिति दानतुष्टो भावयव्यं तुष्टावेति चोभयत्र स्तोतव्यं भिन्नमेवानुगम्यत इति उच्यते—

उत्तरसूक्तस्य प्रथमायामृचि अधि क्षियतो भाव्यस्येति दातुर्भा-

वयव्यस्य श्रूयमाणत्वात् तत्प्राथम्यमुपजीव्य पृथगुपात्तम्। वस्तुतस्तु पितुर्नाम्ना पुत्रस्य व्यवहर्तव्यत्वात् तथा आ रुद्रास इत्यादौ बहुशः प्रयोगदर्शनात् स्वनयेन दत्ता इति तत्रैव सूक्ते स्वनयस्यापि श्रूयमाणत्वाच्चोभयत्रापि दातृप्रतिगृहीत्रोरेकत्वेनैकमेव दानप्रशंसारूपमाख्यानमिति प्रसिद्धम्।

स च कक्षीवानानीतं सर्वं पितुर्निवेदयन् परोक्षेणैव दानप्रकारं प्रशंसति।

स्वनयो नाम राजा प्रातरित्वा प्रातरेवात्मनः सकाशमागतः सन् रत्नं रमणायं निष्कादिकं प्रातः प्रभातकाले दधाति अस्मत्सन्निधौ स्थापयति ददाति। तं स्थापितं सर्वं चिकित्वांश्चेतनावान् अदुष्टमित्यवगतवान् प्रतिगृह्य स्वीकृत्य नि धत्ते पितुः समीपे स्थापयति। अनन्तरं तेन दत्तेन निष्कादिना प्रजां पुत्रभृत्यादिरूपां वर्धयमानाः पोषयन् आयुर्जीवितं च वर्धयन् सुवीरः शोभनैः वीरैः पुत्रभृत्यादिभिरुपेतः सन् रायस्पोषेण धनानां पुनः पुनर्वर्धनेन सचते असौ राजा संगच्छतमिति तव दातुराशिषं प्रार्थयते।

अथ द्वितीया—

म०—सुगुरसत्सुहिरण्यः स्वश्वो बृहदस्मै वय इन्द्रो दधाति। यस्त्वायन्तं वसुना प्रातरित्वो मुक्षीजयेव पदिमुत्सिनाति ॥२॥

प०—सुऽगुः। असत्। सुऽहिरण्यः। सुऽअश्वः। बृहत्। अस्मै। वयः। इन्द्रः। दधाति। यः। त्वा। आऽयन्तम्। वसुना। प्रातःऽइत्वः। मुक्षोजयाऽइव। पदिम्। उत्ऽसिनाति ॥२॥

अत्र कक्षीवतः पिता आनीतेन धनेन संतुष्टो राजानं

बहुप्रकारेणाशास्ते। असौ स्वनयो राजा सुगुरसत् शोभनैर्बहुभिर्गोभिः तद्वान् भवतु। तथा सुहिरण्यः सुष्ठुहितरमणीयैर्धनैस्तद्वान् भवतु। तथा स्वश्वः शोभनैरश्वैस्तद्वान् सन् अस्मै राज्ञे प्रदात्रे बृहत् प्रभूतं वयः अन्नमिन्द्रः परमेश्वरो धर्मदेवता दधाति दधातु ददातु। यतोऽयं राजा अस्मै गोहिरण्याश्वान्नानि बहुसंख्याकानि दत्तवान् अतस्तेषामभिवृद्धिप्रार्थनोचितैव। कस्यैवमाशीरिति स उच्यते। यः यो राजा प्रातरित्वः प्रातरागामिन्नतिथे पुत्र आयन्तं गुरुकुलादागतं पदिं पथिकं यदृच्छया गन्तारं त्वा त्वां वसुना अन्नसाधनेन गवादिधनेनोत्सिनाति गमनतः उत्कृष्टं बध्नाति गतिं निरुणद्धीत्यर्थः। प्रतिबन्धे दृष्टान्त उच्यते। मुक्षीजयेव पदिम्। मुच्यमाना सती बन्धनं जनयतीति मुक्षीजा मृगपक्ष्यादिबन्धनी रज्जुः। तया पाशको यथा पदिं गन्तारं मृगपक्ष्यादिकम् उत्सिनाति बध्नाति तथा मया अननुज्ञातमपि त्वां गमनं प्रतिबध्य गवादीष्टदानादिना यो राजा तोषयति स एवं भवत्विति।

पदिरिति पदं व्याचक्षाणेन यास्केन तदुदाहरणमयमन्त्रो व्याख्यातः। 'सुगुर्भवति * [सुहिरण्यः स्वश्वो महच्चास्मै वयम् इन्द्रो दधाति यस्त्वायन्तमन्नेन प्रातरागामिन्नतिथे 'मुक्षीजयेव पदिमुत्सिनाति' कुमारो मुक्षीजा मोचनाच्च शयनाच्च] ततनाच्च' इति (नि० ५।१९)।

अथ तृतीया—

म०—आयमद्य सुकृतं प्रातरिच्छन्निष्टेः पुत्रं वसुमता रथेन। अंशोः सुतं पायय मत्सरस्य क्षयद्वीरं वर्धय सूनृताभिः॥३॥

प०—आऽयम्। अद्य। सुऽकृतम्। प्रातः। इच्छन्। इष्टेः।

* सुहिरण्यः.......शयनाच्च इति पाठो मैक्समूलग्रंथे नास्ति।

पुत्रम् । वसुऽमता । रथेन । अंशोः । सुतम् । पायय । मत्सरस्य । क्षयत्ऽवीरम् । वर्धय । सूनृताभिः ॥३॥

प्रातः पूर्वेद्युः प्रभातकालेऽयं धनं दत्तवान्, तस्मिन्नेव काले सुकृतं शोभनस्य कर्तारं त्वाम् इच्छन् प्राप्तुमिच्छन् कदा द्रक्ष्यामीति कामयमानोऽहम् अद्यास्मिन् दिने इदानीम् आयं प्राप्तोऽस्मि। अत्र यद्यपि केवलं प्रातरित्येव श्रुतं न पूर्वेद्युरिति तथापि अद्यायमित्युक्तत्वादर्थात् पूर्वेद्युः प्रातरिति गम्यते । कीदृशम् । इष्टेः इष्टस्येष्टसाधनस्य यागस्य वा पुत्रं पुरु त्रातारम्। 'पुत्रः पुरु त्रायते' (नि० २।११) इति यास्कः। कर्तारमित्यर्थः। केन साधनेनेति तदुच्यते। वसुमता रथेन समृद्धधनवता रथेन साधनेन। यद्वा। तेन सहित इति सहार्थे तृतीया। किं च मदानीतेन समृद्धेन धनेनांशोः अंशुमतः वल्लीरूपस्य मत्सरस्य मादनसाधनस्य सोमस्य। 'मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः' (नि० २।५) इति निरुक्तम्। तस्य सुतमभिषुतं रसं पायय आत्मानं पायय। इष्टसाधनं सोमयागं कुर्वित्यर्थः। कृत्वा च क्षयद्वीरं क्षियन्तो निवसन्तो वीराः पुत्रभृत्यादयो यस्य तं तादृशं त्वदिष्टसाधनबहुधनप्रदातारं सूनृताभिः प्रियसत्यात्मिकाभिर्गीर्भिः वर्धय समृद्धं कुरु। पुत्रभृत्यादिवीरैः यथा प्रवृद्धो भवति तथा कामयेत्यर्थः।

अथ चतुर्थी—

म०—उप क्षरन्ति सिन्धवो मयोभुव ईजानं च यक्ष्यमाणं च धेनवः। पृणन्तं च पपुरिं च श्रवस्यवो घृतस्य धारा उप यन्ति विश्वतः॥४॥

प०—उप। क्षरन्ति। सिन्धवः। मयःऽभुवः। ईजानम्। च।

यक्ष्यमाणम् । च । धेनवः । पृणन्तम् । च । पपुरिम् । च ।
श्रवस्यवः । घृतस्य । धाराः । उप । यन्ति । विश्वतः ॥४॥

पूर्वस्यामृच्यानीतेन धनेन सोमयागं कुर्वित्युक्तम् । तमेव सोमयागं फलप्रदर्शनेन स्तौति । सिन्धवः स्यन्दनशीलाः प्रस्तुतपयोधाराः । सिन्धुः स्यन्दनात् ( नि० ९ । २६ ) इति यास्कः । मयोभुवः सुखभावयित्र्यः । मय इति सुखनाम मयः स्यूमकमिति तन्नामसु पाठात् । धेनवः प्रीणयित्र्यो गाव ईजानं सोमयागम् अनुतिष्ठन्तं तथा यक्ष्यमाणं यक्ष्य इति प्रणतिं कुर्वन्तं च । न केवलमीजानम् अपि तु यक्ष्य इत्यध्यवसितवन्तमपि उप उपेत्य क्षरन्ति स्रवन्ति प्रीणयन्तीत्यर्थः । न च पूर्वस्यामृचि सोमं पिबेत्युक्तत्वात् सर्वेषां सोमयागानाम् अग्निष्टोमात्मकज्योतिष्टोमस्य प्रकृतस्य ज्योतिष्टोमेन स्वर्गकामो यजेतेति स्वर्ग एव फलत्वेन श्रुतः न गवादिकमिति वाच्यम् । स्वर्गवद्गवादिकामनयापि सोमयागस्य कर्तुं शक्यत्वात् । न केवलं सोमयागमनुतिष्ठतामेव महत्फलम् अपि तु सुकृतसाधनानि कर्मान्तराणि अधितिष्ठतामपि महत्फलमस्त्येवेति दर्शयति । पृणन्तं पितॄन् प्रीणयन्तं पपुरिं प्रीणनशीलम् इष्टदातारं प्राणिनः सर्वदा प्रीणयन्तं च पुरुषं श्रवस्यवोऽन्नमिच्छन्त्यः अन्नसमृद्धिहेतवो घृतस्य धाराः । यद्वा । घृतकुल्या विश्वतः सर्वतः उप उपेत्य यन्ति प्राप्नुवन्ति प्रीणयन्तीत्यर्थः ।

अथ पञ्चमी—

म०—नाकस्य पृष्ठे अधि तिष्ठति श्रितो यः पृणाति
स ह देवेषु गच्छति । तस्मा आपो घृतम-

षन्ति सिन्धवस्तस्मा इयं दक्षिणा पिन्वते सदा ॥५॥

प०—नाकस्य । पृष्ठे । अधि । तिष्ठति । श्रितः । यः । पृणाति । सः । ह । देवेषु । गच्छति । तस्मै । आपः । घृतम् । अर्षन्ति । सिन्धवः । तस्मै । इयम् । दक्षिणा । पिन्वते । सदा ॥५॥

सोमयागप्रशंसाप्रसंगेन सामान्यतो दानमेतदादिभिस्त्रिभिः प्रशंसति । यद्वा । सोमस्यैव स्तुतत्वाद्दक्षिणाशब्दस्य याग एव प्रसिद्धत्वाच्च आ सूक्तपरिसमाप्तेः सोमयाग एव प्रस्तूयते । यः यो मर्त्यः पृणाति हविरादिदानेन देवादीन् प्रीणाति स नाकस्य । कमिति सुखनाम । तद्विरुद्धमकम् । न विद्यते अकं दुःखं तत्साधनं पापं वेति नाको द्युलोकः । तथा श्रूयते—'न वा अमु लोकं जग्मुषे किंचनाकमिति ( नि० २ । १४ ) । तस्य पृष्ठे उन्नते उपरिदेशे श्रितः सन्नध्यधिकम् आ कल्पान्तं तिष्ठति । यद्वा । अधितिष्ठति, अधिष्ठाय प्रमुखो भूत्वा तिष्ठति । न केवलं स्वर्गाश्रयणं किंतु देवेषु मध्ये गच्छति वर्तते, स्वयमेव देवो भवतीत्यर्थः । हेति प्रसिद्धौ । तस्मै प्रीणयित्रे पुरुषाय सिन्धवः स्यन्दनशीलाः आपः घृतं तेजोवत्सारम् अर्षन्ति गच्छन्ति रसवत्यो भवन्तीत्यर्थः । किं चेयं भूमिरपि दक्षिणा सस्यादिफलसम्पादनदक्षा सती सदा सर्वकालं पिन्वते सेचयति तोषयतीत्यर्थः । दातुः जीवनसाधकान्नोदकानि रुचिराणि समृद्धानि भवन्तीत्यर्थः ।

अथ षष्ठी—

म०—दक्षिणावतामिदिमानि चित्रा दक्षिणावतां दिवि सूर्यासः । दक्षिणावन्तो अमृतं भजन्ते

दक्षिणावन्तः प्र तिरन्त आयुः ॥६॥

प०—दक्षिणाऽवताम् । इत् । इमानि । चित्रा । दक्षिणाऽवताम् । दिवि । सूर्यासः । दक्षिणाऽवन्तः । अमृतम् । भजन्ते । दक्षिणाऽवन्तः । प्र । तिरन्ते । आयुः ॥६॥

दक्षिणावतां बहुविधगोहिरण्यादिरूपदक्षिणाप्रदातॄणाम्, इच्छब्द एवकारार्थः । तेषामेवार्थ इमानि भूमौ दृश्यमानानि चित्राणि चायनीयानि स्रक्चन्दनमणिमुक्तादिरूपाणि द्रव्याणि समृद्धाणि भवन्तीति शेषः । किं च दक्षिणावतामेव दिवि द्युलोके सूर्यासः सूर्यसम्बन्धिनो लोकाः तदनुगृहीता भोगा वा समृद्धा भवन्ति । किं च दक्षिणावन्त एव अमृतं जरामरणरहितं स्थानं भजन्ते सेवन्ते । यद्वा । दानेनापहतपाप्मान आत्मानं विदित्वा अमृतमविनाशं मोक्षं भजन्ते प्राप्नुवन्ति यज्ञेन दानेनेति श्रुतेः । किं च दक्षिणावन्त एव आयुः प्रतिरन्ते अतिदीर्घमेवमायुष्यं लभन्ते । प्रपूर्वस्तिरतिर्वर्धनार्थः । इदिति सर्वत्र सम्बध्यते ।

अथ सप्तमी—

म०—मा पृणन्तो दुरितमेन आरन्मा जारिषुः सूरयः सुव्रतासः । अन्यस्तेषां परिधिरस्तु कश्चिद-पृणन्तमभि सं यन्तु शोकाः ॥७॥

प०—मा । पृणन्तः । दुःऽइतम् । एनः । आ । अरन् । मा । जारिषुः । सूरयः । सुऽव्रतासः । अन्यः । तेषाम् । परिऽधिः ।

अ॒स्तु॒ । कः॒ । चि॒त् । अपृ॑णन्तम् । अ॒भि । सम् । य॒न्तु॒ । शोका॑ः ॥७॥

अन्वयव्यतिरेकाभ्यां दानं प्रशंसितुमाह—पृणन्तो देवादीन् हविरादिना प्रीणयन्तः सन्तः दुरितं दुष्टं यथा भवति तथा प्राप्तं दुःखम् एनः तत्साधनं पापं च मारन् मा प्राप्नुवन्। न केवलं दातार एव अपि तु सूरयः देवानां स्तोतारो विद्वांसो मा जारिषुः जरया न जीर्णा भवेयुः। तथा सुव्रतासः शोभनकृच्छ्रचान्द्रायणादिनियमवन्तोऽपि मा जारिषुः। तर्ह्येषामन्यो जनः क इति स उच्यते। तेषां दातॄणां स्तोतॄणां वान्यः तेभ्योऽन्यो यः कोऽपि पुरुषः परिधिः पापस्य परितो धारकोऽस्तु। यद्वा। अन्यो यः कश्चन पापदेवः तेषां परिधिस्थानीयो व्यवधायकोऽस्तु। यथाग्नेः परिधिः स्वयं रक्षःप्रभृतिभिर्बाध्यमानः स्वान्तर्हितमग्निं रक्षति तद्वत्। अथवा। अन्यो धर्मविशेषस्तेषां परिधिः परिधानमस्तु। कवचस्थानीयोऽस्तु। तर्हि किं प्राप्नुयुरिति उच्यते। अपृणन्तं देवादीनप्रीणयन्तम् अदातारं शोकाः चित्तपीडाः तत्साधना पाप्मानः अभि अभिमुखं सं यन्तु सम्यक् प्राप्नुवन्तु। वयं सुखिनो भवेमेत्यर्थः।

(*अत्र यद्यपि सामान्येन दानमात्रं स्तूयते तथाप्यस्य सूक्तस्य स्वनयदानस्तुतिरूपत्वाद् दुःखानि मा यन्त्वित्यर्थः।)

---

* (अत्र···यन्त्वित्यर्थः) इति मैक्समूलरग्रन्थे नास्ति।

# चतुःपंचाशदुत्तरशततमं सूक्तम्

## ( संग्रहे द्वादशं सूक्तम् )

विष्णोर्नु कमिति षड़ृचं पञ्चदशं सूक्तं दैर्घतमसं त्रैष्टुभं वैष्णवम् । अत्रानुक्रमणिका—'विष्णोः षड्वैष्णवं हीति । अभिप्लवषडहेषूक्थ्येषु तृतीयसवने स्तोमवृद्धावच्छावाकस्य स्तोमातिशंसनार्थम् इदमादिसूक्तद्वयं विनियुक्तम् । स्तोमे वर्धमान इति खण्डे सूत्रितम्-'विष्णोर्नु कमिति सूक्ते परो मात्रयेत्यच्छावाकः' ( आ० ७ । ९ ) इति।

तथा तृतीयसवने सोमातिरेक उत्तरोत्तरसंस्थोपगन्तव्या आतिरात्रात् ततोऽप्यतिरिक्ते तदर्थमेव शस्त्रमुपजनयितव्यम् । तत्रैतदेव सूक्तं सोमातिरेक इति खण्डे सूत्रितम्—'महाँ इन्द्रो नृवद्विष्णोर्नु कम्' ( आ० ६ । ७ ) इति ।

आग्निमारुतशस्त्रे आद्या विनियुक्ता । अथ यथेतमिति खण्डे सूत्रितम्-'विष्णोर्नु कं वीर्याणि प्र वोचं तन्तुं तन्वन्रजसो भानुमन्विहि' ( आ० ५ । २० ) इति ।

सैषा प्रथमा—

म०—विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि । यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥१॥

प०—विष्णोः । नु । कम् । वीर्याणि । प्र । वोचम् । यः । पार्थिवानि । विऽममे । रजांसि । यः । अस्कभायत् । उत्ऽतरम् । सधऽस्थम् । विऽचक्रमाणः । त्रेधा । उरुऽगायः ॥१॥

हे नराः विष्णोर्व्यापनशीलस्य देवस्य वीर्याणि वीरकर्माणि नु कम् अतिशीघ्रं प्र वोचं प्रब्रवीमि। अत्र यद्यपि नु कमिति पदद्वयं तथापि यास्केन नवोत्तराणि पदानि ( नै० ३ । १२ ) इत्युक्तत्वात् शाखान्तरे एकत्वेन पाठाच्च नु इत्येतस्मिन्नेवार्थे नु कमिति पदद्वयम् । कानि तानीति तत्राह—यो विष्णुः पार्थिवानि पृथिवीसम्बन्धीनि रजांसि रंजनात्मकानि क्षित्यादिलोकत्रयाभिमानीनि अग्निवाय्वादित्यरूपाणि रजांसि विममे विशेषेण निर्ममे । अत्र त्रयो लोका अपि पृथिवीशब्दवाच्याः । तथा च मन्त्रातरम्–'यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः' (ऋ० १ । १०८ । ९) इति। तैत्तिरीयेऽपि—'योऽस्यां पृथिव्यामस्यायुषेत्युपक्रम्य 'यो द्वितीयस्यां तृतीयस्यां पृथिव्यामिति ( तै० सं० १ । २ । १२ । १ ) । तस्माल्लोकत्रयस्य पृथिवीशब्दवाच्यत्वम्। किं च यश्च विष्णुरुत्तरम् उद्गततरम् अतिविस्तीर्णं सधस्थं सहस्थानं लोकत्रयाश्रयभूतम् अन्तरिक्षम् अस्कभायत् तेषामाधारत्वेन स्तम्भितवान् निर्मितवानित्यर्थः । अनेनान्तरिक्षाश्रितं लोकत्रयमपि सृष्टवानित्युक्तं भवति। यद्वा। यो विष्णुः पार्थिवानि पृथिवीसम्बन्धीनि रजांसि पृथिव्या अधस्तनसप्तलोकान् विममे विविधं निर्मितवान्। रजःशब्दो लोकवाची 'लोका रजांस्युच्यन्ते' इति यास्केनोक्तत्वात्। किं च यश्च उत्तरम् उद्गततरम् उत्तरभाविनं सधस्थं सहस्थानं पुण्यकृतां सहनिवासयोग्यं भूरादिलोकसप्तकम् अस्कभायत् स्कम्भितवान्, सृष्टवानित्यर्थः। स्कम्भेः स्तम्भुस्तुम्भ्विति विहितस्य श्नः छन्दसि शायजपीति व्यत्ययेन शायजादेशः । अथवा पार्थिवानि पृथिवीनिमित्तकानि रजांसि लोकान् विममे भूरादिलोकत्रयमित्यर्थः। भूम्यामुपार्जितकर्मभोगार्थत्वादितरलोकानां तत्कारणत्वम्। किं च यश्चोत्तरमुत्कृष्टं सर्वेषां लोकानामुपरिभूतम् । अपुनरावृत्तेस्तस्योत्कृष्टत्वम्। सधस्थम् उपासकानां सहस्थानं सत्यलोकम् अस्कभायत् स्कम्भितवान्। ध्रुवं स्थापितवानित्यर्थः। किं कुर्वन्। त्रेधा विचक्रमाणः त्रिप्रकारं स्वसृष्टान् लोकान् विविधं क्रममाणः । विष्णोस्त्रेधा क्रमणम् 'इदं विष्णुर्वि चक्रमे' ( ऋ० १ । २२ । १७ ) इत्यादिश्रुतिषु

प्रसिद्धम्। अत एवोरुगायः उरुभिर्महद्भिर्गीयमानः अतिप्रभूतं गीयमानो वा। य एवं कृतवान् तादृशस्य विष्णोर्वीर्याणि प्र वोचम्॥ ॥

तृतीयसवने सोमातिरेक एव शस्त्रमुपजनयितव्यम्। तत्र प्र तदित्ययमनुरूपस्तृचः। सोमातिरेक इति खण्डे सूत्रितम्—'प्र तद्विष्णुः स्तवते वीर्येणेति स्तोत्रियानुरूपौ' (आ० ६।७) इति।

वाजपेयेनाधिपत्यकाम इति खण्डे सूत्रितम्—'प्र तत्ते अद्य शिपिविष्ट नाम प्र तद्विष्णुः स्तवते वीर्येण' (आ० ९।९) इति।

तत्र प्रथमा सूक्ते द्वितीयैषा—

**म०—प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा॥२॥**

प०—प्र। तत्। विष्णुः। स्तवते। वीर्येण। मृगः। न। भीमः। कुचरः। गिरिऽस्थाः। यस्य। उरुषु त्रिषु। विऽक्रमणेषु। अधिऽक्षियन्ति। भुवनानि। विश्वा॥२॥

यस्येति वक्ष्यमाणत्वात् स इति अवगम्यते। स महानुभावो वीर्येण स्वकीयेन वीरकर्मणा पूर्वोक्तरूपेण प्र स्तवते प्रकर्षेण स्तूयते सर्वैः। कर्मणि व्यत्ययेन शप्। वीर्येण स्तूयमानत्वे दृष्टान्तः—मृगो न सिंहादिरिव। यथा स्वविरोधिनो मृगयिता सिंहो भीमो भीतिजनकः कुचरः कुत्सितहिंसादिकर्ता दुर्गमप्रदेशगन्ता वा गिरिष्ठाः पर्वताद्युन्नतप्रदेशस्थायी सर्वैः स्तूयते।

अस्मिन्नर्थे निरुक्तं 'मृगो न भीमः कुचरो गिरिष्ठाः। मृग इव भीमः कुचरो गिरिष्ठा मृगो मार्ष्टेर्गतिकर्मणो। भीमो बिभ्यत्यस्माद्भीष्मोऽप्येतस्मादेव। कुचर इति चरतिकर्म कुत्सितम्। अथ चेद्देवताभिधानम्

…यं न चरतीति वा । गिरिष्ठा गिरिस्थायी। गिरिः पर्वतः समुद्गीर्णो भवति। पर्ववान् पर्वतः। पर्व पुनः पृणातेः प्रीणातेर्वा ( नि० १।२०) इति ।

तद्वद्यमपि मृगः अन्वेष्टा शत्रूणां भीमः भयानकः सर्वेषां भीत्यपादानभूतः । परमेश्वराद्भीतिः 'भीषास्माद्वातः पवते' ( तै० आ० ८। ८। १) इत्यादिश्रुतिषु प्रसिद्धा । किं च कुचरः शत्रुवधादिकुत्सितकर्मकर्ता कुषु सर्वासु भूमिषु लोकत्रये संचारी वा तथा गिरिष्ठा गिरिवदुच्छ्रितलोकस्थायी । यद्वा गिरि मन्त्रादिरूपायां वाचि सर्वदा वर्तमानः । ईदृशोऽयं स्वमहिम्ना स्तूयते । किं च यस्य विष्णोरुरुषु विस्तीर्णेषु त्रिषु त्रिसंख्याकेषु विक्रमणेषु पादप्रक्षेपेषु विश्वा सर्वाणि भुवनानि भूतजातानि अधिक्षियन्ति आश्रित्य निवसन्ति स विष्णुः स्तूयते ।

अथ तृतीया—

म०—प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे । य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥३॥

प०—प्र । विष्णवे । शूषम् । एतु । मन्म । गिरिऽक्षिते । उरुऽगायाय । वृष्णे । यः । इदम् । दीर्घम् । प्रऽयतम् । सधऽस्थम् । एकः । विऽममे । त्रिऽभिः । इत् । पदेभिः ॥३॥

विष्णवे सर्वव्यापकाय शूषम् अस्मत्कृत्यादिजन्यं बलं महत्त्वं मन्म मननं स्तोत्रं मननीयं शूषं बलं वा विष्णुमेतु प्राप्नोतु कर्मणः सम्प्रदानत्वाच्चतुर्थी । कीदृशाय । गिरिक्षिते वाचि गिरिवदु-*

---

* मैक्सपुस्तकस्थस्य 'उन्नत' इत्यस्यार्थं त एव प्रष्टव्याः ।

न्नतप्रदेशे वा तिष्ठते उरुगायाय बहुभिर्गीयमानाय वृष्णे वर्षित्रे कामानाम् एवं महानुभावं शूषं प्राप्नोतु। कोऽस्य विशेष इति उच्यते—यो विष्णुरिदं प्रसिद्धं दृश्यमानं दीर्घम् अतिविस्तृतं प्रयतं नियतं सधिस्थं सहस्थानं लोकत्रयम् एकः इत् एक एव अद्वितीयः सन् त्रिभिः पदैर्मि पादैर्विममे विशेषेण निर्मितवान् ।

अथ चतुर्थी—

म०—यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति । य ऊं त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥४॥

प०—यस्य । त्री । पूर्णा । मधुना । पदानि । अक्षीयमाणा । स्वधया । मदन्ति । यः । ऊँऽइति । त्रिऽधातु । पृथिवीम् । उत । द्याम् । एकः । दाधार । भुवनानि । विश्वा ॥४॥

यस्य विष्णोः मधुना मधुरेण दिव्येनामृतेन पूर्णा पूर्णानि त्री त्रीणि पदानि पादप्रक्षेपणानि अक्षीयमाणा अक्षीयमाणानि स्वधया अन्नेन मदन्ति मादयन्ति तदाश्रितजनान् । य उ य एव पृथिवीं प्रख्यातां भूमिं द्यामुत द्योतनात्मकमन्तरिक्षं च विश्वा भुवनानि सर्वाणि भूतजातानि चतुर्दश लोकांश्च । यद्वा । पृथिवीशब्देन अधोवर्तीनि अतलवितलादिसप्तभुवनान्युपात्तानि । द्युशब्देन तदवान्तररूपाणि भूरादिसप्तभुवनानि । एवं चतुर्दश लोकान् विश्वा भुवनानि सर्वाण्यपि तत्रत्यानि भूतजातानि । त्रिधातु त्रयाणां धातूनां समाहारः त्रिधातु । पृथिव्यप्तेजोरूपधातुत्रयविशिष्टं यथा भवति तथा दाधार धृतवान् । तुजादित्वादभ्यासस्य दीर्घत्वम् । उत्पादितवानित्यर्थः । छन्दोगारण्यके

तत्तेजोऽसृजत, तदन्नमसृजत, ता आप ऐक्षन्तेति भूतत्रयसृष्टिमुक्त्वा न्ताहमिमास्तिस्रो देवतास्तासां त्रिवृतं त्रिवृतमेकैकां करवाणीत्यादिना त्रिवृत्करणसृष्टिरुपपादिता" ( छां० उ० ६ । २ । ३-३ । ३ ) । यद्वा । त्रिधातु कालत्रयं गुणत्रयं वा दाधारेत्यन्वयः ।

आतिथ्यायां तदस्येत्येषा प्रधानस्य याज्या । अथातिथ्येतिखण्डे सूत्रितम्—"इदं विष्णुर्वि चक्रमे तदस्य प्रियमभि पाथो अश्याम्" आ० ४ । ५ ) इति ।

सैषा पञ्चमी—

म०—तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति । उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥५॥

प०—तत् । अस्य । प्रियम् । अभि । पाथः । अश्याम् । नरः । यत्र । देवऽयवः । मदन्ति । उरुऽक्रमस्य । सः । हि । बन्धुः । इत्था । विष्णोः । पदे । परमे । मध्वः । उत्सः ॥५॥

अस्य महतो विष्णोः प्रियं प्रियभूतं तत्सर्वैः सेव्यत्वेन प्रसिद्धं पाथः । अन्तरिक्षनामैतत् 'पाथोऽन्तरिक्षं पथा व्याख्यातम् ( नि० ६ । ७ ) इति यास्केनोक्तत्वात् । [ अन्तरिक्षलोकाख्यं स्थानम् ] अविनश्वरं ब्रह्मलोकमित्यर्थः । अश्यां व्याप्नुयाम् । तदेव विशेष्यते । यत्र स्थाने देवयवः देवं द्योतनस्वभावं विष्णुम् आत्मन इच्छन्तः यज्ञदानादिभिः प्राप्तुमिच्छन्तो नरः मदन्ति तृप्तिमनुभवन्ति, तदश्यामित्यन्वयः । पुनरपि तदेव विशेष्यते । उरुक्रमस्य अत्यधिकं

"मैक्सम्ग्रंथे 'अन्तरिक्षलोकाख्यं स्थानम्' इति पाठो नास्ति ।

सर्वं जगदाक्रममाणस्य तत्तदात्मना अत एव विष्णोर्व्यापकस्य परमेश्वरस्य परमे उत्कृष्टे निरतिशये केवलसुखात्मके पदे स्थाने मध्वः मधुरस्य उत्सः निष्यन्दो वर्तते । तद्स्याम्, यत्र क्षुत्तृष्णा-जरामरणपुनरावृत्त्यादिभयं नास्ति संकल्पमात्रेणामृतकुल्यादिभोगाः प्राप्यन्ते तादृशमित्यर्थः । ततोऽधिकं नास्तीत्याह । इत्था इत्थम् उक्तप्रकारेण स हि बन्धुः स खलु सर्वेषां सुकृतिनां बन्धुभूतः हितकरो वा तस्य पदं प्राप्तवतां न पुनरावृत्तेः । 'न च पुनरावर्तते' इति श्रुतेस्तस्य बन्धुत्वम् । हिशब्दः सर्वश्रुतिस्मृतिपुराणादिप्रसिद्धि-द्योतनार्थः ।

अथ षष्ठी—

म०—ता वां वास्तून्युश्मसि गमध्यै यत्र गावो
भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य
वृष्णः परमं पदमव भाति भूरि ॥६॥

प०—ता । वाम् । वास्तूनि । उश्मसि । गमध्यै । यत्र । गावः ।
भूरिऽशृङ्गाः । अयासः । अत्र । अह । तत् । उरुऽगायस्य ।
वृष्णः । परमम् । पदम् । अव । भाति । भूरि ॥६॥

हे पत्नीयजमानौ वां युष्मदर्थं ता तानि गन्तव्यत्वेन प्रसिद्धानि वास्तूनि सुखनिवासयोग्यानि स्थानानि गमध्यै युवयोर्गमनाय उश्मसि कामयामहे । तदर्थं विष्णुं प्रार्थयाम इत्यर्थः । तानीत्युक्तं कानीत्याह । यत्र येषु वास्तुषु गावो रश्मयो भूरिशृङ्गाः अत्यन्तोन्नत्युपेताः बहुभिराश्रयणीया वा अयासः अयना गन्तारः

अतिविस्तृताः । यद्वा । यासो गन्तारः अतादृशः । अत्यन्तप्रकाशयुक्ता इत्यर्थः । अत्राह—अत्र खलु वास्त्वाधारभूते द्युलोके उरुगायस्य बहुभिर्महात्मभिर्गातव्यस्य स्तुत्यस्य वृष्णः कामनां वर्षितुः विष्णोः तत् तादृशं सर्वत्र पुराणादिषु गन्तव्यत्वेन प्रसिद्धं परमं निरतिशयं पदं स्थानं भूरि अति प्रभूतम् अव भाति स्वमहिम्ना स्फुरति ।

अयं मन्त्रो यास्केन गोशब्दो रश्मिवाचक इति व्याचक्षाणेन व्याख्यातः ।

'तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो भूरिशृङ्गा बहुशृङ्गा भूरीति बहुनो नामधेयं प्रभवतीति शृङ्गा श्रयतेर्वा शृणातेर्वा शम्नातेर्वा शरणायोद्गतमिति वा शिरसो निर्गतमिति वायासोऽयनाः । तत्र तदुरुगायस्य विष्णोर्महागतेः परमं पदं परार्ध्यस्थमवभाति भूरि । पादः पद्यतेः' ( नि० २ । ७ ) इति ।

---

# पंचाशीत्युत्तरशततमं सूक्तम्

## ( संग्रहे त्रयोदशं सूक्तम् )

कतरा पूर्वेति एकादशर्चं षष्ठं सूक्तम् [द्यावापृथिवीदेवताकम्] आगस्त्यं त्रैष्टुभम् 'कतरैकादश द्यावापृथिवीयम्' इत्यनुक्रान्तम्। आभिप्लविके षष्ठेऽहनि वैश्वदेवशस्त्रे द्यावापृथिव्यनिविद्धानमिदम् तृतीयस्येतिखण्डे सूत्रितम्—कतरा पूर्वोषासानक्तेति वैश्वदेवम् (आ० ७।७) इति। महाव्रतेऽपि वैश्वदेवशस्त्रे इदमेव द्यावापृथिव्यनिविद्धानम्। उत्तमादाभिप्लविकात्तृतीयसवनम् (ऐ० आ० ५।३।२) इत्यतिदेशात्।

तत्र प्रथमा—

म०—कतरा पूर्वा कतरापरायोः कथा जाते कवयः

को वि वेद। विश्वं त्मना बिभृतो यद्ध नाम

वि वर्तेते अहनी चक्रियेव ॥१॥

प०—कतरा। पूर्वा। कतरा। अपरा। अयोः। कथा। जाते इति।

कवयः। कः। वि। वेद। विश्वम्। त्मना। बिभृतः। यत्।

ह। नाम। वि। वर्तेते इति। अहनी इति। चक्रियाऽइव ॥१॥

अयोरेनयोर्द्यावापृथिव्योर्मध्ये कतरा पूर्वा पूर्वमुत्पन्ना। कतरा वा अपरा पश्चाद्भाविनी। एवं पौर्वापर्यप्रश्नः। उभयोरविनाभावेन सहैव वर्तमानत्वादिति भावः। तथा कथा केन हेतुना जाते

किमनयोरुत्पादनमित्यर्थः । हे कवयः क्रान्तदर्शिनः अतीन्द्रियज्ञाः यूयं वदत को वि वेद पौर्वापर्यं कारणं च विशेषेण विविच्य वा जानाति, न केनापि ज्ञायत इत्यर्थः । अज्ञाने कारणमाह—यद्ध यस्मात् खलु हेतोर्नाम प्रसिद्धं विश्वं कृत्स्नमपि जगदविशेषेण त्मना आत्मनैव अन्यनैरपेक्ष्येणैव बिभृतो धारयतः । यद्वा । यद्ध नाम यत्किंचित् पदार्थजातमस्ति विश्वं तत्सर्वमात्मना बिभृतः । अनेन यत्किंकारणं ब्रूमः तदप्याभ्यामेव भ्रियत इति कारणाभावः प्रतिपादितः । उत्तरेण पौर्वापर्याभाव उच्यते । * अहनी अहोरात्रे एतयोः द्यावापृथिव्योः चक्रियेव चक्रयुक्ते इव वि वर्तेते ।

अत्र कतरा पूर्वा कतरापरैनयोरित्यादि निरुक्तं (नि० ३ । २२) द्रष्टव्यम् ।

अथ द्वितीया—

म०—भूरिं द्वे अचरन्ती चरन्तं पद्वन्तं गर्भमपदी दधाते । नित्यं न सूनुं पित्रोरुपस्थे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥२॥

1952

प०—भूरिम् । द्वे इति । अचरन्ती इति । चरन्तम् । पत्ऽवन्तम् । गर्भम् । अपदी इति । दधाते इति । नित्यम् । न । सूनुम् । पित्रोः । उपऽस्थे । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥२॥

अचरन्ती अविचले द्वे एवैते द्यावापृथिव्यौ भूरिं बहुतरं चरन्तं पद्वन्तं पादयुक्तं गर्भं गर्भवदाश्रितं कृत्स्नं प्राणिजातम्

* मैक्सपुस्तके 'अहनी एते द्यावापृथिव्यौ चक्रियेव' इति पाठः ।

अपदी स्वयं पादरहिते दधाते धारयतः । अनयोर्मध्ये खलु सर्वं जगत् क्षेमेण वर्तते । धारणे दृष्टान्तः—पित्रोर्मातापित्रोरुपस्थे उत्संगे वर्तमानं नित्यं ध्रुवम् आत्मजं सूनुं न पुत्रमिव यथा स्नेहेन वर्धयन्तौ धारयन्तौ मातापितरौ तद्वत् । अथ प्रत्यक्षेणाह—हे द्यावा पृथिवी द्यावापृथिव्यौ । इतरेतरापेक्षया द्वित्वमुभयोः । नोऽस्मानभ्वात् महतो भयहेतोः पापाद्रक्षतं पालयतम् । यद्वा । अभ्वात् अभ्वं महत्, अत्यर्थमित्यर्थः । अभ्वेति महन्नाम ।

द्वन्द्वे कृतद्यावादेशस्य द्यावापृथिवीशब्दस्य मध्ये रक्षतमिति पदप्रयोगश्छन्दासः । आमन्त्रितस्याविद्यमानत्वेन निघाताभावः ।

अथ तृतीया—

**म०—अनेहो दात्रमदितेरनर्वं हुवे स्वर्वदवधं नमस्वत् । तद्रोदसी जनयतं जरित्रे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥३॥**

प०—अनेहः । दात्रम् । अदितेः । अनर्वम् । हुवे । स्वःऽवत् । अवधम् । नमस्वत् । तत् । रोदसी इति । जनयतम् । जरित्रे । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥३॥

अदितेः एतदन्तरिक्षस्याप्युपलक्षणम् । अखण्डनीयायाः पृथिव्यास्तादृशस्यान्तरिक्षस्य च संबन्धि दात्रं धनं हुवे आह्वयामि, स्पृहयामीत्यर्थः । कीदृशं तद्धनम् । अनेहः अपापं दुःखरहितं सुखात्मकं अनर्वम् अनरणम् अक्षीणमित्यर्थः । स्वर्वत् सर्वतः फलभूतेन स्वर्गेण तद्वत् अवधम् अहिंसितम् । नमस्वत् अन्नवत् । ईदृशं धनं हुवे । तदस्माभिः काङ्क्षितम् उत्कलक्षणं धनं हे रोदसी द्यावापृथिव्यौ

रित्रे स्तोत्रे यजमानाय जनयतम् उत्पादयतम् । द्यावेत्यादि ाख्यातम् ।

अथ चतुर्थी—

म०—अतप्यमाने अवसावन्ती अनु ष्याम रोदसी देवपुत्रे । उभे देवानामुभयेभिरह्नां द्यावा रक्षतं पृथिवी नो अभ्वात् ॥४॥

प०—अतप्यमाने इति । अवसा । अवन्ती इति । अनु । स्याम । रोदसी इति । देवपुत्रे इति देवऽपुत्रे । उभे इति । देवानाम् । उभयेभिः । अह्नाम् । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥४॥

अवसा स्वतोऽधिकेन केनचित् कृतेन अवनेन समृद्ध्या अतप्यमाने अनीश्वरे । तप ऐश्वर्यकर्मण इदं रूपम् । अतप्यमाने अन्यैरपीड्यमाने अवसा अन्नेन अवन्ती तर्पयन्त्यौ देवपुत्रे देवा हविः हर्तारो मनुष्याः पुत्रस्थानीया ययोस्तादृशौ । लोकद्वयस्था मनुष्याश्च देवाश्च तदुपजीव्यत्वात् पुत्रा इत्युच्यन्ते । दृश्यौ उभे रोदसी द्यावापृथिव्यौ देवानामह्नाम् । एतद्रात्रेरप्युपलक्षणम् । द्योतमानानामह्नां रात्रीणां च सम्बन्धिभिः उभयेभिरुभयविधैः शीतोष्णादिरूपैर्विलक्षणैर्धनैर्निमित्तभूतैः तेषां लाभायेत्यर्थः । तदर्थं युवाम् अनु स्याम अनुभवेम । शिष्टो व्याख्यातः ।

अथ पञ्चमी—

म०—संगच्छमाने युवती समन्ते स्वसारा जामी

पित्रोरुपस्थे । अभिजिघ्रन्ती भुवनस्य नाभिं
द्यावा रक्षतं पृथिवी नो अभ्वात् ॥५॥

प०—संगच्छमाने इति सम्ऽगच्छमाने । युवती इति । समन्ते इति सम्ऽअन्ते । स्वसारा । जामी इति । पित्रोः । उपऽस्थे । अभिजिघ्रन्ती इत्यभिऽजिघ्रन्ती । भुवनस्य । नाभिम् । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥५॥

सङ्गच्छमाने परस्परमुपकारित्वेन सह युज्यमाने वृष्टिहविर्भ्यां परस्परम् उपकार्योपकारकभावः । यद्वा । पूर्वं संश्लिष्टे एव सत्यौ पश्चाद्वियुज्य वृष्टिहविषी अकुर्वन्त्यौ पश्चान्मनुष्यैः प्रार्थितैर्देवैर्विवाहिते सत्यौ संगते अभूतामित्याहुः । अयमर्थः द्यावापृथिवी सहास्ताम् ( तै० ब्रा० १ । १ । ३ । २ ) इत्यादिब्राह्मणे समाम्नातः । युवती नित्यतरुण्यौ मिश्रयन्त्यौ वा सर्वेषु भावेषु समन्ते समानान्तिके समानपर्यन्ते वा स्वसारा परस्परं स्वसृभूते जामी बन्धुभूते । प्रजापतेः सकाशात् सहोत्पन्नत्वात् परस्परं जामित्वम् । तथा च निगमौ—'दिवञ्च पृथिवीं चान्तरिक्षमथो स्वः' ( ऋ० १० । १९० । ३ ) । 'यतो द्यावापृथिवी निष्टतक्षुः' ( ऋ० १० । ३१ । ७ ) इति । पित्रोः सर्वस्य पितृस्थानीययोः पालकयोः तयोरुपस्थे उत्संगे स्थितं भुवनस्य भूतजातस्य नाभिं बन्धकमुदकम् अभिजिघ्रन्ती अभिघ्राणं कुर्वन्त्यौ स्पृशन्त्यौ । 'समानमेतदुदकम्' ( ऋ० १ । १६४ । ५१ ) इत्यादिमन्त्रवर्णादुभयोरुदकप्रदत्वं प्रसिद्धम् । ईदृश्यौ नो रक्षतम् ।

अथ षष्ठी—

म०—उर्वी सद्मनी बृहती ऋतेन हुवे देवानामवसा जनित्री। दधाते ये अमृतं सुप्रतीके द्यावा रक्षतं पृथिवी नो अभ्वात् ॥६॥

प०—उर्वी इति। सद्मनी इति। बृहती इति। ऋतेन। हुवे। देवानाम्। अवसा। जनित्री इति। दधाते इति। ये इति। अमृतम्। सुप्रतीके इति सुऽप्रतीके। द्यावा। रक्षतम्। पृथिवी इति। नः। अभ्वात् ॥६॥

उर्वी विस्तीर्णे सद्मनी सदनाधारभूते बृहती महत्यौ महानुभावे देवानाम्। उपलक्षणमेतत्। देवमनुष्यादीनाम्। अवसा प्रीत्या निमित्तेन जनित्री वृष्टि सस्ययोर्जनित्र्यौ, वृष्ट्यादेः देवानामवसा तर्पणेन निमित्तेन ऋतेन यज्ञेन च निमित्तभूतेन हुवे आह्वयामि। देवानां हविरर्थमस्मद्यज्ञायेत्यर्थः। ये सुप्रतीके शोभनरूपे अमृतमुदकं दधाते धारयतः ते युवामाह्वयामि। शिष्टं स्पष्टम्।

अथ सप्तमी—

म०—उर्वी पृथ्वी बहुले दूरेअन्ते उप ब्रुवे नमसा यज्ञे अस्मिन्। दधाते ये सुभगे सुप्रतूर्ती द्यावा रक्षतं पृथिवी नो अभ्वात् ॥७॥

प०—उर्वी इति। पृथ्वी इति। बहुले इति। दूरेअन्ते इति दूरेऽअन्ते।

उप । ब्रुवे । नमसा । यज्ञे । अस्मिन् । दधाते इति । ये इति । सुभगे इति सुऽभगे । सुप्रतूर्ती इति सुऽप्रतूर्ती । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥७॥

उर्वी उर्व्यौ महत्यौ पृथिवी पृथिव्यौ बहुले अनेकप्रकारेण प्रथमाने बह्वाकारे दूरेअन्ते विप्रकृष्टान्तदेशे अपारे इत्यर्थः । ईदृश्यौ युवामस्मिन् यज्ञे नमसा नमःसाधनेन स्तोत्रेण उप ब्रुवे उपेत्य ब्रवीमि स्तौमीत्यर्थः । पुनः कीदृश्यौ । ये सुभगे शोभनभाग्ये सुप्रतूर्ती सुप्रतरणे शोभनदाने दधाते विश्वं जगत् ते युवामुप ब्रुवे स्तौमि ।

अथाष्टमी—

**म०—देवान्वा यच्चकृमा कच्चिदागः सखायं वा सदमिज्जास्पतिं वा । इयं धीर्भूया अवयानमेषां द्यावा रक्षतं पृथिवी नो अभ्वात् ॥८॥**

प० — देवान् । वा । यत् । चकृम । कत् । चित् । आगः । सखायम् । वा । सदम् । इत् । जाःपतिम् । वा । इयम् । धीः । भूयाः । अवऽयानम् । एषाम् । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥८॥

हे द्यावापृथिव्यौ ! वयं देवान् देवान्प्रति यत्कच्चिदागोऽपराधं तत्तद्यागकाले तेषां तेषामयागलक्षणं सदमित् सर्वदैव चकृम कृतवन्तो वयम् । सखायं वा प्रियं मित्रं वा प्रति यच्चकृम ।

जास्पतिं जाः पुत्र्यः तासां पतिं जामातरं वा जायापतिं प्रति दोषा-रोपणकलहोत्पादनादिरूपं यत्सर्वदेव चकृम । एषाम् उक्तरूपाणां पापानाम् अपगमं कर्तुम् इयं धीर्युष्मत्स्तुतिरूपमिदं कर्म भूयाः भूयात् भवतु । द्यावेत्यादि गतम् । अत्र सर्वत्र प्रकारान्तरेण मन्त्रमन्तरेण रक्षतं रक्षतमिति प्रार्थनं तयोरश्विन्यादिबहुमननासम्भवादुचितमेव । तस्मात् स्वस्थान एव स्थिते अनुकूले भवतमित्येवं प्रार्थ्यते ।

अथ नवमी—

म०—उभा शंसा नर्या मामविष्टामुभे मामूती अवसा सचेताम् । भूरि चिदर्यः सुदास्तराये़षा मदन्त इषयेम देवाः ॥९॥

प०—उभा । शंसा । नर्या । माम् । अविष्टाम् । उभेइति । माम् । ऊती इति । अवसा । सचेताम् । भूरि । चित् । अर्यः । सुदाःऽतराय । इषा । मदन्तः । इषयेम । देवाः ॥९॥

उभा शंसा द्यावापृथिव्योरुभयोर्विषयावुभावपि शंसौ नर्या नरेभ्यो हितावीदृश्यावुभयाश्रये स्तुती मामविष्टां रक्षताम् । यद्वा । द्यावापृथिव्यभिमानिदेवयोरेव शंसशब्देनाभिधानात् पुंल्लिङ्गता । तथोभे ऊती रक्षिके द्यावापृथिव्यौ मामवसा रक्षणेन सचेताम् । यद्वा । प्राणिभ्यो हितकरावुभावैहिकामुष्मिकविषयौ शंसौ मामविष्टां प्राप्नुताम् । तथोभे अप्यूती तयोः सम्बन्धिन्योरभिमानिदेवतयोर-वसास्मत्तर्पणेन निमित्तेन सचेताम् । हे देवाः ! द्यावापृथिव्योरन्त-र्भूताः सर्वेऽपि देवाः अर्यः स्तोतारो वयं सुदास्तरायातिशयेन शोभनदातृत्वायेषान्नेन सोमलक्षणेन मदन्तो मादयन्तः सन्तो भूरि

चित् । चित् पूजायाम् । अभिपूजितं धनमिषयेम इच्छेम । यद्वा । अर्य इति षष्ठ्या रूपम् । ईश्वराद्राजादेरपि सुदास्तरायेत्यर्थः । शिष्टं समानम् ।

ऋतं दिव इति द्वे द्यावापृथिवीये पशौ पुरोडाशहविषोरनुवाक्ये । अग्नीषोमाविति खण्डे सूत्रितम्—'ऋतं दिवे तदवोचं पृथिव्या इति द्वे' ( आ० ३ । ८ ) इति ।

अथ दशमी—

म०—ऋतं दिवे तदवोचं पृथिव्या अभिश्रावाय प्रथमं सुमेधाः । पातामवद्याद् दुरितादभीके पिता माता च रक्षतामवोभिः ॥१०॥

प०—ऋतम् । दिवे । तत् । अवोचम् । पृथिव्यै । अभिऽश्रावाय । प्रथमम् । सुऽमेधाः । पाताम् । अवद्यात् । दुःऽइतात् । अभीके । पिता । माता । च । रक्षताम् । अवःऽभिः ॥१०॥

सुमेधाः शोभनप्रज्ञोऽहं दिवे द्युदेवतायै पृथिव्यै पृथिवीदेवतायै तत्तत्प्रीतिकरमृतं स्तोत्रं प्रथमम् । मुख्यनामैतत् । प्रतमं प्रकृष्टतममवोचं ब्रवीमि । किमर्थम् । अभिश्रावायाभितः सर्वतः श्रवणाय । किं च पिता पालको द्युलोको माता सस्यादेर्निर्मात्री पृथिवी चोभे अवद्यान्निन्दिताद् दुःखप्रापकादंहसः सकाशात् पातां रक्षताम् । तथाभीके अन्तिकनामैतत् । समीप एवावोभिरभिमततर्पणैः रक्षतां पालयताम् ।

अथैकादशी—

म०—इदं द्यावापृथिवी सत्यमस्तु पितर्मातर्यदिहोप-

ब्रुवे वाम्। भूतं देवानामवमे अवोभिर्विद्या-
मेषं वृजनं जीरदानुम् ॥११॥

प०—इदम्। द्यावापृथिवी इति। सत्यम्। अस्तु। पितः। मातः।
यत्। इह। उपऽब्रुवे। वाम्। भूतम्। देवानाम्। अवमे इति।
अवःऽभिः। विद्याम्। इषम्। वृजनम्। जीरऽदानुम् ॥११॥

हे द्यावापृथिवी द्यावापृथिव्यौ इदमस्माभिः क्रियमाणं स्तोत्रं सत्यमस्तु अवितथं भवतु फलवद्भवत्वित्यर्थः। इदमित्युक्तम्, किं तदित्याह—हे पितर्द्यौः हे मातः पृथिवि वां युवां प्रतीहास्मिन् यज्ञे यत्स्तोत्रमुपब्रुवे उपेत्य ब्रवीमि तत्सत्यमस्तु। देवानां स्तोतृणामस्माकमवमे। अन्तिकनामैतत्। नित्यसन्निहिते युवामवोभिस्तर्पणैर्युक्ते भूतं भवतम्। अवशिष्टं गतम् ॥



# अस्यवामीयं सूक्तम् ।

अस्य वामस्येति द्विपञ्चाशदृचमष्टमं सूक्तं दैर्घतमसम् । अत्रेयमनुक्रमणिका । अस्य द्विपञ्चाशदल्पस्तवं त्वेतरसंशयोत्थापनप्रश्नप्रतिवाक्यान्यत्र प्रायेण ज्ञानमोक्षाक्षरप्रशंसा च पञ्चपादं साकञ्जानां यद्रायत्रेऽयं स शिङ्क्ते सप्तार्धगर्भा गौरीरिति जगत्यः । एतदन्तं तु वैश्वदेवं तस्याः समुद्रा इति वाचः समुद्रा आपोऽक्षरं सा प्रस्तारपङ्क्तिः शकमयमिति शकधूम उक्षाणं पृश्निमिति सोमस्त्रयः केशिन इत्यग्निः सूर्यो वायुश्च केशिनश्चत्वारि वाग्वाच इन्द्रं मित्रं सौर्यौ द्वादशेति संवत्सरसंस्थं कालचक्रवर्णनं यस्ते सरस्वते यज्ञेन साध्येभ्यः परानुष्टुप्सौरी पर्जन्याग्निदेवते वान्त्या सरस्वते सूर्याय वेति । अत्र स्तुत्याबहुत्वेन स्तुतिभागस्याल्पीयस्त्वादिदं सूक्तमल्पस्तवनम् । न सूक्तान्तरवद्बहुस्तवम् । इदमेव वैलक्षण्यं तुशब्देन द्योत्यते । अस्मिन् सूक्ते प्रायेण संशयोत्थापनादयो बहवोऽर्थाः प्रतिपाद्यन्ते । अचिकित्वाञ्चिकितुष इत्यनया संशय उत्थाप्यते । पृच्छामि त्वेत्यत्र प्रश्नः प्रतीयते । इयं वेदिरित्यत्र प्रतिवचनम् । य ईं चकारेत्यादिना ज्ञानप्रशंसा प्रतिपाद्यते । अपश्यं गोपामित्यादिना ब्रह्मसाक्षात्काररूपस्य प्रशंसा । न क्षरतीत्यक्षरं ब्रह्म । द्वा सुपर्णेत्यादिना तस्य प्रशंसा । पञ्चपादं पितरं साकञ्जानां सप्तथं यद्गायत्रे अधि अयं स शिङ्क्ते सप्तार्धगर्भा गौरीर्मिमायेति षड्जगत्यः । समानमेतदित्यनुष्टुप् । तस्याः समुद्रा इति प्रस्तारपङ्क्तिः । तल्लक्षणं छन्दोग्रन्थे सूत्रितम् । प्रस्तारपङ्क्तिः पुरतः ( पिं० ३ । ४० ) इति । पुरतः पूर्वार्धे द्वादशाक्षरौ जागतौ पादौ ततो द्वावष्टाक्षरौ गायत्रौ सा प्रस्तारपङ्क्तिरिति सूत्रार्थः । अनुक्रमण्यामप्युक्तम् । आद्यौ चेत् प्रस्तारपङ्क्तिः ( अनु० ८ । ६ ) इति । शिष्टा अतादेशपरिभाषया त्रिष्टुभः । गौरीर्मिमायेत्येतदन्तानां विश्वे देवा देवता । तस्याः समुद्रा इत्यस्याः पूर्वार्धस्य वाग्देवता । उत्तरार्धस्यापः । शकमयमित्यस्याः पूर्वार्धस्य शकधूमः । उक्षाणं पृश्निमित्युत्तरार्धस्य सोमो देवता । त्रयः केशिन इत्यस्या अग्निसूर्यवायवः । चत्वारि वागित्येषा वाग्देवताका ।

इन्द्रं मित्रं वरुणं कृष्णं नियानमित्येते सूर्यदेवत्ये । द्वादश प्रधय इत्यस्याः संवत्सरात्मा कालो देवता । यस्ते स्तन इत्यस्याः सरस्वती । यज्ञेनेत्यस्याः साध्या देवता । समानमेतदित्यस्याः सूर्यः पर्जन्यो ग्राग्नयो वा देवता । दिव्यं सुपर्णमित्यस्याः सरस्वान् सूर्यो वा देवता ।

कृत्स्नसूक्तस्य विनियोगं शौनक आह ।

स्तेयं कृत्वा द्विजो मोहात् त्रिरात्रोपोषितः शुचिः ।

सूक्तं जप्त्वास्यवामीयं क्षिप्रं मुच्येत किल्बिशात् ।

( ऋग्वि० १ । २६ ) इति ।

महाव्रते वैश्वदेवशस्त्रे वैश्वदेवं निविद्धानं द्विप्रतीकम् । तत्रास्य वामस्येत्यादिकमेकचत्वारिंशदृचं प्रथमं प्रतीकम् । पञ्चमारण्यके सूत्रितम् । अस्य वामस्य पलितस्य होतुरिति सलिलस्य दैर्घतमस एकचत्वारिंशतम् । ( ऐ० आ० ५ । ३ । २ ) इति ।

म०—अस्य वामस्य पलितस्य होतु-

स्तस्य भ्राता मध्यमो अस्त्यश्नः ।

तृतीयो भ्राता घृतपृष्ठो अस्या-

त्रापश्यं विश्पतिं सप्तपुत्रम् ॥ १ ॥

प०—अस्य । वामस्य । पलितस्य । होतुः ।

तस्य । भ्राता । मध्यमः । अस्ति । अश्नः ।

तृतीयः । भ्राता । घृतऽपृष्ठः । अस्य ।

अत्र । अपश्यम् । विश्पतिम् । सप्तऽपुत्रम् ॥ १ ॥

भा०—अत्र द्वितीयपादे तच्छब्दश्रुतेः प्रथमपादे प्रतिविशेषणं योग्यक्रियार्थसम्बद्धो यच्छब्दोऽध्याहार्यः। योऽयं दिवि द्योतते तस्यास्य

वामस्य वननीयस्य सम्भजनीयस्यारोग्यार्थिभिः सर्वैः सेवनीयस्य पलितस्य पालयितुः प्रकाशवृष्ट्यादिप्रदानेन पालकस्य तथा योऽयं दिवि द्योतते तस्यास्य होतुर्ह्वातव्यस्याह्वानार्हस्यादित्यस्य मध्यमो मध्यमस्थानः । मध्ये भवो वायुरुच्यते । आदित्याग्नी अपेक्ष्यास्य मध्यमत्वम् । स चाश्नः सर्वत्र व्याप्तः । न हि वायुरहितः कश्चित्प्रदेशोऽस्ति । तादृशो भ्रातास्ति, भ्रातृस्थानीयो भवति । यथा लोके भ्राता पितृधनस्य भागं हरति तद्वत् । मध्यस्थानमन्तरिक्षलोकं हरतीति वा । वृष्ट्यर्थं रश्मिभिराहृतानां भौमानां रसानां हरणाद्वा भ्रातेत्युच्यते । पित्र्येण धनेन स्वार्जितेन वा भर्तव्यो भवतीति भ्राता । मध्यमो वायुरपि वृष्ट्यर्थं रसैर्भक्तव्यो भवति। किञ्च घृतपृष्ठः घृतमाहुतिलक्षणं पृष्ठे यस्य तादृशो भ्राता तस्य तृतीयोऽस्ति, भवति । त्रयाणां पूरणस्तृतीयः । उक्तोभयापेक्षया तृतीयत्वम् । भ्रातृत्वं प्रतिपादितप्रकारेणात्रापि द्रष्टव्यम् । रात्रौ सवितुस्तेजोभागस्य हरणात् । दिवा स्वकीयतेजसो भागस्य तदर्थमेव भक्तव्यत्वाद्वा भ्रातृत्वम् । अत्रैषु भ्रातृषु मध्ये पुरोदेशे वा विश्पतिं विशां प्रजानां पालयितारं सप्तपुत्रं सप्तरश्मिपुत्रोपेतम् । ऐतिहासिकपक्षेऽदितिः पुत्रकामेति प्रस्तुते मित्रवरुणादिष्वदितिपुत्रेष्वस्यादित्यस्य सप्तमपुत्रत्वम् । ईदृशं महानुभावमादित्यमपश्यम्, अद्राक्षम् । भावनयात्मत्वेन साक्षात्करोमीत्यर्थः । तद्योऽहं सोऽसौ योऽसौ सोऽहमिति श्रुतिः । एवं वा । अस्य वामस्य विश्वस्योद्गरितुः स्रष्टुरित्यर्थः । पलितस्य पालयितुः स्वसृष्टजगत्पालनशीलस्य होतुरादातुः स्वस्मिन् संहर्तुरित्यर्थः । परमेश्वरस्य स्रष्ट्यादिकर्तृत्वं श्रुतिस्मृतिपुराणादिषु प्रसिद्धम् । तस्य तादृशस्य परमेश्वरस्य भ्राता तद्भागहारी तदंशभूतः सूत्रात्मा मध्यमः सर्वत्र मध्ये वर्तमानोऽस्ति जगद्धारकत्वेन वर्तते । स चाश्नो व्यापनशीलः । वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि ( बृ० उप० ३ । ७ । २ ) इति श्रुतेः । वक्ष्यमाणविराडपेक्षया वा मध्यमत्वम् । किञ्चास्य परमेश्वरस्य तृतीयो घृतपृष्ठः । घृतमित्युदकनाम । तेन तत्कार्यं शरीरमुच्यते । तदेव पृष्ठं स्पर्शकं वा यस्य स तादृशः । पृष्ठं स्पृशतेरिति निरुक्तम् ( नि० ४ । ३ ) । यद्वा । प्रदीप्तपृष्ठः । पृष्ठशब्दः

कृत्स्नशरीरोपलक्षकः । प्रकाशितशरीराभिमानीत्यर्थः । न त्वयं सूक्ष्मशरीराभिमानिसूत्रात्मवत्स्पर्शनाविषयो भवति । अत्रैषु मध्ये विश्पतिं विशां प्रजानां पतिम् । उपलक्षणमेतत् । सर्वस्य पतिमित्यर्थः । सर्वस्य पतिः सर्वस्येशान इति श्रुतेः । सप्तपुत्रं सप्त लोकाः पुत्रा यस्य तादृशम् । स्वमायया सृष्टसर्वलोकमित्यर्थः । अपश्यम् पश्येयम् साक्षात्करोमीत्यर्थः ।

अयमार्थः । स्वाधीनमायाजगत्कारणभूतः परमेश्वर एकः । तत उत्पन्नौ स्थूलसूक्ष्मशरीराभिमानिनौ द्वौ विराट्सूत्रात्मानौ । तेषु मध्ये द्वयोः साक्षात्कारेण मोक्षाभावात् सृष्ट्यादिकारणं परमेश्वरं ज्ञेयत्वेन प्रसिद्धं श्रवणमननादिसाधनेन साक्षात्करोमीत्यर्थः ।

एवमुत्तरत्राप्यध्यात्मपरतया योजयितुं शक्यम् । तथापि स्वरसत्वाभावाद्ग्रन्थविस्तरभयाच्च न लिख्यते । यत्र द्वा सुपर्णेत्यादौ स्फुटमाध्यत्मिको ह्यर्थः प्रतीयते तत्र तत्र प्रतिपादयामः । अयं मन्त्रो यास्केन व्याख्यातः । अस्य वामस्य वननीयस्य पलितस्य पालयितुरित्यादिना ( नि० ४ । २६ ) । तच्च व्याख्यानमत्रानुसन्धेयम् ।

म—सप्त युञ्जन्ति रथमेकचक्र-

मेको अश्वो वहति सप्तनामा ।

त्रिनाभि चक्रमजरमनर्वं

यत्रेमा विश्वा भुवनाधि तस्थुः ॥२॥

प०—सप्त । युञ्जन्ति । रथम् । एकऽचक्रम् ।

एकः । अश्वः । वहति । सप्तऽनामा ।

त्रिऽनाभि । चक्रम् । अजरम् । अनर्वम् ।
यत्र । इमा । विश्वा । भुवना । अधि । तस्थुः ॥२॥

भा०—एकचक्रमेकरथाङ्गोपेतम् । यद्यपि त्रीणि चक्राणि तथापि तेषामेकरूपत्वादेकचक्रमित्युच्यते । रथं रंहणस्वभावं सूर्यस्य सम्बन्धिनं सप्तैतत्संख्याका अश्वा युञ्जन्ति अनुबध्नन्ति वहन्त्यहोरात्र-निर्वाहाय । किं वस्तुतः सप्त नेत्याह । एकोऽश्वः सप्तनामैक एव सप्ता-भिधानः सप्तधा नमनप्रकारो वा । एक एव वायुः सप्तरूपं धृत्वा वह-तीत्यर्थः । वाय्वधीनत्वादन्तरिक्षसंचारस्य । एकचक्रमित्युक्तम् कीदृशं तदित्यत आह । त्रिनाभि वलयत्रयमध्यस्थितनाभिस्थानीयच्छिद्रत्रयो-पेतम् अजरममरणधर्मकमनर्वमशिथिलम् । पुनस्तदेव विशेष्यते । यत्र यस्मिश्चक्र इमा विश्वा भुवनेमानि प्रसिद्धानि सर्वाणि भूतजा-तान्यध्याश्रित्य तस्थुः तिष्ठन्ति । यद्वा । एकचक्रमेकचारिणमसहा-य्येन सञ्चरन्तं रथमादित्यमण्डलं सप्त युञ्जन्ति । सर्पणस्वभावाः सप्त-सङ्ख्या वा रश्मयः सप्तप्रकारकार्या असाधारणाः परस्परविलक्षणाः षडृतवः । एकः साधारण इत्येवम् । अथवा मासद्वयात्मकाः षट् अप-तोऽधिकमासात्मक इत्येवं सप्तर्वतो युञ्जन्ति । एतस्य कार्यं निर्वह-न्तीत्यर्थः । स चैकोऽसहायोऽश्वो व्यापनशील आदित्यः सप्तनामा सप्त रसानां सन्नमयितारो रश्मयो यस्य तादृशः सप्तर्षिभिः स्तूयमानो वादित्यो वहति धारयति भ्रमयतीत्यर्थः । किम् ? त्रिनाभि चक्रम् । तिस्रो नाभिस्थानीयाः सन्ध्याः सम्बद्धा वा त्रय ऋतवो यस्य तत्ता-दृशम् । के ते ? ग्रीष्मवर्षाहेमन्ताख्याः । यद्वा । भूतभविष्यद्वर्तमाना-ख्यास्त्रयः कालास्त्रिनाभयः । तद्विशिष्टं चक्रं चक्रवत्पुनःपुनः परिभ्र-ममाणं संवत्सराख्यं चक्रमजरं मरणरहितम् । न हि कदाचिदपि कालो म्रियते ।

अनादिनिधनः कालः

इति स्मृतेः । अनर्वमप्रतिहतम् । ईदृशं संवत्सराख्यं चक्रं नाना-कालावयवोपेतमयमादित्यः पुनरावर्तयति । संवत्सरादर्वाचीनानां

तत्रैवान्तर्भावात्ततो युगादीनां तदावृत्तिसाध्यत्वात् संवत्सरस्य चक्रत्वेन निरूपणम् । पुनः कीदृशं तत् ? यत्र यस्मिंश्चक्र इमा विश्वा भुवनेमानि सर्वाणि भूतान्यधि तस्थुः आश्रित्य तिष्ठन्ति कालाधीनत्वात् सर्वस्य स्थितेः । ईदृशस्य कालस्य कारणभूतपरमेश्वरज्ञानेन मोक्षसद्भावात् ज्ञानमोक्षात्तरप्रशंसा चेत्यनुक्रमण्यामुक्तम् । अयमपि मन्त्रो यास्केण सप्त युञ्जन्ति रथमेकचक्रमेकचारिणमित्यादिना व्याख्यातः ( नि० ४ । २७ ) । तदत्राप्यनुसन्धेयम् ।

म—इमं रथमधि ये सप्त तस्थुः

सप्तचक्रं सप्त वहन्त्यश्वाः ।

सप्त स्वसारो अभि सं नवन्ते

यत्र गवां निहिता सप्त नाम ॥ ३ ॥

प०—इमम् । रथम् । अधि । ये । सप्त । तस्थुः ।

सप्तऽचक्रम् । सप्त । वहन्ति । अश्वाः ।

सप्त । स्वसारः । अभि । सं । नवन्ते ।

यत्र । गवाम् । निऽहिता । सप्त । नाम ॥ ३ ॥

भा०—इममुक्तस्वरूपमादित्यमण्डलाख्यं संवत्सराख्यं वा रथं ये सप्त रश्मयोऽधि तस्थुः अधिष्ठिताः । संवत्सरपक्षेऽयनर्तुमासपक्षदिवसरात्रिमुहूर्ताख्याः सप्तावयवा अधितिष्ठन्ति । कीदृशं रथम् ? सप्तचक्रम् । चकनाच्चरणात् क्रमणाद्वा चक्राणि रश्मयः । ते सप्त यस्य रथस्य तादृशमुभयविधं रथं पूर्वोक्ता अधिष्ठिता अश्वा व्यापनशीलाः सप्त वहन्ति निर्वहन्ति च । तादृशं रथं सप्त स्वसारः स्वयंसरणाः । स्वरादित्यः तेन सारिताः परस्परं स्वसृभूता वा सप्त संख्याका

त्मय ऋतवश्चाभि सं नवन्ते, आभिमुख्येन सङ्गच्छन्ते । असाधा-
णाः परस्परविलक्षणकार्याः षडृतवः सर्वसाधारण एक इति सप्तत्वम्।
द्वा । उक्तरूपा मासद्वयात्मकाः षट् त्रयोदशमासात्मकः सप्तम इति
प्ततत्वम् । कीदृशो रथ इति ? तदुच्यते। यत्र यस्मिन्रथ उभयविधे
वां वाचां स्तुतिरूपाणां सप्त सप्तविधानि नाम नमनानि सप्तस्वरू-
ाणि निहितानि । सप्तस्वरोपेतैः सामभिः स्तुत्यं रथमित्यर्थः । यद्वा ।
वामुदकानां सप्त सर्पणस्वभावानि नाम नमनानि यत्र यासु स्वसृषु
ाहिता स्वसारः परस्परस्वसृभूता देवनद्योऽभि सं नवन्ते ।

म—को ददर्श प्रथमं जायमान-

मस्थन्वन्तं यदनस्था बिभर्ति ।

भूम्या असुरसृगात्मा क्व स्वित्

को विद्वांसमुप गात्प्रष्टुमेतत् ॥ ४ ॥

प०—कः । ददर्श । प्रथमम् । जायमानम् ।

अस्थन्ऽवन्तम् । यत् । अनस्था । बिभर्ति ।

भूम्याः । असुः । असृक् । आत्मा । क्व । स्वित् ।

कः । विद्वांसम् । उप । गात् । प्रष्टुम् । एतत् ॥४॥

भा० – एवं प्रपञ्चस्य कालायत्ततां प्रतिपाद्य तस्य कारणभू-
स्य परमेश्वरस्याविषयत्वमाह । को ददर्श ? को द्रष्टुं शक्नुयात् ?
ता ? प्रथमम् । सृष्टेः पूर्वम् । अव्याकृतावस्थायामित्यर्थः । किम् ?
यमानम् । प्रथमभावविकारमापन्नम् । उत्पद्यमानं प्रपञ्चमित्यर्थः ।
यत्वे हेतुमाह । यद्यस्मादस्थन्वन्तमस्थिमन्तं सशरीरम् । उपलक्ष-

णमेतत् । कार्यभावमापन्नमित्यर्थः । अनस्थास्थिरहिताशरीरा सांख्य-प्रसिद्धा प्रकृतिर्वेदान्तप्रसिद्धेश्वरायत्ता माया बिभर्ति गर्भवदन्तर्धा-रयति । अव्याकृतावस्थायामनस्थोऽशरीरः परमेश्वरो बिभर्ति । यद्वा केवलः परमेश्वरो मायाशबलितः सन्निदं जगन्निर्मितवानुत्पत्तिसमये देहादिसहितस्य कस्यचिदभावात् को ददर्श ? तदानीं मनो नित्य-मात्मा च नित्यः तत्संयोगात् कश्चिदात्मा जानातीति चेत् सोऽपि न सम्भवतीत्यत आह । भूम्याः सम्बन्धि पार्थिवं स्थूलशरीरम् असुः प्राणः तदुपलक्षितं सूक्ष्मशरीरम् असृक् शोणितम् । एतत् सप्त धातू-पलक्षकम् । यद्यपि शरीरं पञ्चभूतात्मकं तथापि भूतद्वयप्रत्यक्षत्वात्त-दपेक्षयोक्तम् । आत्मा तैः सम्बद्धश्चेतनः क स्वित् ? कुत्रास्ते ? न कश्चि दस्तीत्यर्थः । नान्यत् किञ्चन मिषत् ( ऐ० आ० २ । ४ । १ ) इति श्रुतेः । विद्वांसं जगत्कारणविषयज्ञानवन्तमन्यं गुर्वादिकमेतत् कारणं प्रष्टुं कः शिष्योऽल्पमतिरुप गात्, उपगच्छति । तादृशो देहेन्द्रियस-ङ्घात रूप आत्मा तस्मिन् समये कुत्रास्ति ? प्रष्टा प्रतिवक्ता चोभा-वपि नास्तीत्यर्थः । न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदिति श्रुतेः । यद्वा । प्रथमं प्रथमभाविनं जगतः कारणभूतं को ददर्श ? कः साक्षात्करोति ? जायमानमस्थन्वतं मनुष्यमनस्थिकः परमेश्वरः स-शरीरमशरीरो यद्यस्माद्बिभर्ति । द्रष्टुरपि तत्कार्यत्वादिति भावः । शिष्टं समानम् ।

म—पाकः पृच्छामि मनसा विजानन्

देवानामेना निहिता पदानि ।

वत्से बष्कयेऽधि सप्त तन्तून्

वि तत्निरे कवय ओतवा उ ॥ ५ ॥

प०—पाकः । पृच्छामि । मनसा । अविऽजानन् ।

देवानाम् । एना । निऽहिता । पदानि ।

वत्से । बष्कये । अधि । सप्त । तन्तून् ।

वि । तत्निरे । कवयः । ओतवै । ऊं इति ॥५॥

भा०—पाकः पक्कव्योऽपक्कमतिरहं मनसा संस्कृतेनाविजानन्नतिगहनं तत्त्वं विशेषेण ज्ञातुमशक्नुवन् पृच्छामि, प्रश्नं करोमि । अज्ञाने कारणमाह । एनैनानि पदानि सन्देहास्पदानि तत्त्वानि देवानां निहितानि देवानामपि गूढानीत्यर्थः । यद्वा । देवानां पदानि तत्त्वानि निधिवद्गोपयित्वा स्थापितानि । अतः पृच्छामि तत्त्वज्ञानोपयोगायेति शेषः । तानि कानीति ? उच्यते । वत्से सर्वस्य निवासभूते बष्कये । बडिति सत्यनाम । तत्कषतीति बष्कय आदित्यः । यद्वा । बष्कयो नामैकहायनो वत्सः । पुनरपि वत्सशब्दस्य पृथङ्निर्देशाद्बष्कयशब्देन तत्कालमात्रं लक्ष्यते । तस्मिन्नादित्येऽध्यधिकं सप्त तन्तूंस्तायमानान् सप्त सोमसंस्थान् कवयो मेधाविनो यजमाना ओतवै जगद्रूपतिर्यक्तन्तून् वेतु वि तत्निरे, वितन्वन्ति । यद्वा सप्त तन्तवः सप्त छन्दांसि । तानि वितन्वन्ति । किमर्थम् ? ओतवै सप्तसोमसंस्थारूपतिर्यक्तन्तुसन्तानाय, यज्ञनिर्माणायेत्यर्थः । यज्ञानां स्थितेः सूर्याधीनत्वादिति भावः । ईदृशं तत्त्वं पृच्छामीत्यर्थः ।

म०—अचिकित्वाञ्चिकितुषश्चिदत्र

कवीन् पृच्छामि विद्मने न विद्वान् ।

वि यस्तस्तम्भ षळिमा रजांस्य-

जस्य रूपे किमपि स्विदेकम् ॥६॥

प०—अचिकित्वान् । चिकितुषः । चित् । अत्र ।
कवीन् । पृच्छामि । विद्मने । न । विद्वान् ।
वि । यः । तस्तम्भ । षट् । इमा । रजांसि ।
अजस्य । रूपे । किम् । अपि । स्वित् । एकम् ॥६॥

भा०—अचिकित्वान् देवतातत्त्वमजानन्नहं चिकितुषो विशेषेण तत्त्वं जानतः कवीन् क्रान्तदर्शिनोऽधिगतपरमार्थानत्रास्मिंस्तत्त्वविषये पृच्छामि । किमर्थम् ? विद्मने वेदनाय परमार्थज्ञानाय । किं जानन्नेव पराभवाद्यर्थं नेत्याह । विद्वान्न पृच्छामि अपि त्वज्ञानादेव । यः परमेश्वरस्तस्तम्भ स्तम्भितवान् नियमितवान् । अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय (छा० उ० ८ । ४ । १) इति श्रुतेः। किम् ? इमेमानि षड्रजांसि लोकान् रञ्जनात्मकान् । लोका रजांस्युच्यन्त इति निरुक्तम् । यद्यपि लोकाः सप्त तथापि सत्यलोकस्य कर्मिणां सर्वेषां साधारणत्वाभावात् षडित्युक्तम् । ननु षडेवोक्ताः सप्तमः किमिति न निर्दिष्ट इति ? उच्यते । अजस्य जननादिरहितस्य चतुर्मुखस्य ब्रह्मणो रूपे स्वरूप एकं सत्यलोकाख्यं पुनरावृत्तिरहितं स्थानं किमपि स्वित् ? किं स्विदेव ? तन्न केनाप्यधिगन्तुं शक्यमित्यर्थः । कैश्चिदेवोपासकैरर्चिरादिमार्गेण गन्तव्यत्वादिति भावः । यद्वा । षड्रजांसि विलक्षणाः षडृतवः । तान्यस्तम्भयत्तत्त्वम् । अजस्य गमनशीलस्य जन्मरहितस्य वादित्यस्य रूपे रूप्यमाणे दृश्यमाने मण्डलमेकमद्वितीयं किमपिस्वित् । यत्किञ्चिद्वाङ्मनसगम्यं तत्त्वमसि तत् पृच्छामि । अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते ( मै० उ० ६ । १ ) इत्यादिश्रुतिप्रतिपादितं तत्त्वमित्यर्थः । अथवा षडिमानि रजांसि त्रिविधान् भूलोकांश्च यस्तस्तम्भ 'त्रिसो भूमीर्धारयन्त्रीरुँत द्यून्' ( ऋ० २ । २७ । ८ ) इति निगमः । तस्याजस्य परब्रह्मणो रूपे नानाविकारभाजि जगति किमपि स्विदेकमेकात्मकमस्तीति प्रश्नः । अविशेषमस्तिनाममात्रमेकरूपमस्तीत्युत्तरविवक्षया प्रश्नः । अस्तीत्येवोपलब्धव्यमिति श्रुतेः ।

म०—इह ब्रवीतु य ईमङ्ग वेदा-

स्य वामस्य निहितं पदं वेः ।

शीर्ष्णः क्षीरं दुह्रते गावो अस्य

वव्रिं वसाना उदकं पदापुः ॥ ७ ॥

प० – इह । ब्रवीतु । यः । ईम् । अङ्ग । वेद ।

अस्य । वामस्य । निऽहितम् । पदम् । वेरिति वेः ।

शीर्ष्णः । क्षीरम् । दुह्रते । गावः । अस्य ।

वव्रिम् । वसानाः । उदकम् । पदा । अपुः ॥७॥

भा०—इहेदानीमीमेतद्वक्ष्यमाणं तत्त्वमङ्ग क्षिप्रमविचारेण ब्रवीतु । कः ? यो वेद सः । कीदृशं तत् ? अस्य पुरतो दृश्यमानस्य वामस्य वननीयस्य वेर्गन्तुरादित्यस्य पदं सर्वैर्गन्तव्यं स्वरूपं निहितं गूढं वर्तते । किञ्चास्यादित्यस्य शीर्ष्णः शिरोवदुन्नतस्य सर्वेषामुत्कृष्टस्य वा गावः केचन वर्षकालीना रश्मयः क्षीरमुदकं दुह्रते क्षरन्ति । वव्रिम् । रूपनामैतत् । रूपं वसाना आच्छादयन्तोऽतिविस्तरेण तेजसा तपन्तः केचनास्य गावो रश्मय उदकं स्वसृष्टं पदा सृष्टेनैव मार्गेणापुः । पिबन्ति, भूमिं निरुदकां कुर्वन्तीत्यर्थः । तस्य स्वरूपं ब्रवीत्वित्यन्वयः ।

म०—माता पितरमृत आ बभाज

धीत्यग्रे मनसा सं हि जग्मे ।

सा बीभत्सुर्गर्भरसा निविद्धा

नमस्वन्त इदुपवाकमीयुः ॥ ८ ॥

प०—माता । पितरम् । ऋते । आ । बभाज ।

धीती । अग्रे । मनसा । सम् । हि । जग्मे

सा । बीभत्सुः । गर्भऽरसा । निऽविद्धा ।

नमस्वन्तः । इत । उपऽवाकम् । ईयुः ॥ ८ ॥

भा०-माता सर्वस्य निर्मात्री पृथिवी पितरं पालकं द्युलोकं तत्स्थम्, द्युलोकस्थमादित्यमित्यर्थः । तमा बभाज,आभजते । किमर्थम् ? ऋत उदके यज्ञे वा निमित्तभूते सति । केन द्वारेण? धीती धीत्या कर्मणा यागादिरूपेण । स्वकीयेनाज्यसोमादिहविषा तर्पयतीत्यर्थः । अग्रे ततः पूर्वं पिता च मनसास्यामभिप्रायवता चेतसा सं जग्मे हि,संश्लिष्टो वर्तते खलु, वृष्टिमकरोदित्यर्थः । अनन्तरं सा माता बीभत्सुर्गर्भबन्धनेच्छावती गर्भरसा गर्भरसेन गर्भोत्पत्तिनिमित्तेन रसेन निविद्धा नितरां विद्धासीत् । यद्वा । गर्भे रस ओषध्याद्युत्पादनसमर्थमुदकं यस्याः सा तादृश्युदकेनात्यन्तं क्लिन्ना निविद्धा कृषीवलैर्हलमुखेन नितरां विदारिता भवति बीजावापार्थम् । अत्रायं समाधिः । या काचन योषिदपत्यार्थं स्वपतिं युवानं यौति स च तस्यामनुरागयुक्तः सङ्गतो भवति सा चान्तर्वती सती पुत्राञ्जनयतीति तद्वदत्रापि । अनन्तरं नमस्वन्त इन्द्राविव्रीहिप्रियङ्ग्वाद्यन्नवन्त एवोपवाकमुपेत्य वचनं परस्परं सम्यगभिवृद्धानि सस्यानीति वचनमीयुः, प्राप्नुवन्ति । यद्वा । हविर्लक्षणान्नवन्त उपेत्य वचनं प्रैषादिरूपमीयुः । वृष्टौ सत्यां सस्यादिद्वारा यागमनुतिष्ठेयुरित्यर्थः ।

म०—युक्ता मातासीद्धुरि दक्षिणाया

अतिष्ठद्गर्भो वृजनीष्वन्तः ।

अमीमेद्वत्सो अनु गामपश्यद्-

विश्वरूप्यं त्रिषु योजनेषु ॥ ९ ॥

प०—युक्ता । माता । आसीत् । धुरि । दक्षिणायाः ।

अतिष्ठत् । गर्भः । वृजनीषु । अन्तरिति ।

अमीमेत् । वत्सः । अनु । गाम् । अपश्यत् ।

विश्वऽरूप्यम् । त्रिषु । योजनेषु ॥ ९ ॥

भा०—माता निर्मीयन्तेऽस्मिन् भूतानीति माता द्यौः । दक्षिणाया अभिमतपूरणसमर्थायाः पृथिव्या धुरि निर्वहणे युक्तासीत् । वर्षणाय समर्थाभूदित्यर्थः । कथमिति ? तदुच्यते । गर्भो गर्भस्थानीय उदकसङ्घो वृजनीषूदकवत्सु मेघपङ्क्तिष्वन्तर्मध्येऽतिष्ठत्, तिष्ठति । अनन्तरं वत्सः पुत्रस्थानीय उदकसङ्घस्त्रिषु योजनेषु मेघरश्मिवायुषु संयुक्तेषु सत्स्वमीमेत्, वर्षणसमये शब्दयति । अनन्तरं विश्वरूप्यं विश्वरूपवतीं गामन्वपश्यत्, अनुक्रमेण पश्यति, वर्षतीत्यर्थः । यद्वा । त्रिषु योजनेषु सत्सु वत्सो मेघो वर्षणाय गां भूमिं प्रत्यमीमेत् । अनन्तरं सर्वो जनोऽनुक्रमेण विश्वरूप्यं सस्यादिभिर्नानारूपवतीं भूमिमपश्यत् पश्यति ।

म०—तिस्रो मातॄस्त्रीन् पितॄन् बिभ्रदेक

ऊर्ध्वस्तस्थौ नेमव ग्लापयन्ति ।

मन्त्रयन्ते दिवो अमुष्य पृष्ठे

विश्वविदं वाचमविश्वमिन्वा ॥ १० ॥

प०—तिस्रः । मातॄः । त्रीन् । पितॄन् । बिभ्रत् । एकः ।

ऊर्ध्वः । तस्थौ । न । ईम् । अव । ग्लपयन्ति ।

मन्त्रयन्ते । दिवः । अमुष्य । पृष्ठे ।

विश्वऽविदम् । वाचम् । अविश्वऽमिन्वाम् ॥१०॥

भा०—एकः प्रधानभूतोऽसहायो वा पुत्रस्थानीय आदित्यः संवत्सराख्यः कालो वा तिस्रो मातॄः सस्यवृष्ट्याद्युत्पादयित्रीः । क्षित्यादिलोकत्रयमित्यर्थः । तथा त्रीन् पितॄञ्जगतां पालयितॄँल्लोकत्रयाभिमानिनोऽग्निवायुसूर्याख्यान् बिभ्रत् सन्नूर्ध्वस्तस्थौ । उन्नतोऽत्यन्तदीर्घस्तिष्ठति भूतभविष्यदाद्यात्मना । सूर्यपक्षे सर्वेभ्य उन्नतः । ईमेनं नाव ग्लपयन्ति, ग्लानिं नैव कुर्वन्ति । न हि काल आदित्यो वाऽन्येन पराभूयते । दिवः पृष्ठे द्युलोकस्योपर्यन्तरिक्षे मन्त्रयन्ते । गुप्तं परस्परं भाषन्ते देवाः । किम् ? विश्वविदं विश्ववेदनसमर्थां विश्वैर्वेदनीयां वाविश्वमिन्वामसर्वव्यापिनीं वाचं गर्जितलक्षणाम्, अमुष्यादित्यस्य सम्बन्धिनीं मन्त्रयन्त इत्यर्थः ।

म०—द्वादशारं नहि तज्जराय

ववर्ति चक्रं परि द्यामृतस्य ।

आ पुत्रा अग्ने मिथुनासो अत्र

सप्त शतानि विंशतिश्च तस्थुः ॥११॥

०–द्वादशऽअरम् । नहि । तत् । जराय ।

वर्वर्ति । चक्रम् । परि । द्याम् । ऋतस्य ।

आ । पुत्राः । अग्ने । मिथुनासः । अत्र ।

सप्त । शतानि । विंशतिः । च । तस्थुः ॥ ११ ॥

भा०—ऋतस्योदकस्य सत्यात्मकस्य वादित्यस्य चक्रं पुनःपुनः
मणशीलं मण्डलाख्यं रथचक्रं वा वर्वर्ति, पुनःपुनर्वर्तते, सञ्चरति ।
त्र ? द्यां परि द्युलोकस्यान्तरिक्षस्य परितः । कीदृशं तत् ? द्वादशारं
ादशसंख्याकमेषादिराश्यात्मकैर्मासात्मकैर्वारै रथाङ्गावयवैर्युक्तम् ।
कश्च तच्चक्रं नहि जराय नैव खलु जरायै भवति । हे अग्ने सर्वदा-
मनयुक्तादित्य । यद्वा । अग्नेरेव स्थानत्रये तत्तदात्मना वर्तमानत्वा-
सावप्यग्निरित्युच्यते । अत्रास्मिंस्त्वदीये चक्रे मिथुनासः स्त्रीपुंसरूपेण
रस्परं मिथुनभूताः सप्त शतानि विंशतिश्च विंशत्युत्तरसप्तशतसङ्
याकाः पुत्राः पुत्रवदुत्पद्यमानाः प्राणिनां दुःखात् त्रातारो वाहोरात्र-
पास्तस्थुः, तिष्ठन्ति, निष्पद्यन्ते । षष्ठ्यधिकशतत्रयसङ्ख्याकान्यहानि
ावत्य एव रात्रय इत्येवं तद्विभागः । सप्त च वै शतानि विंशतिश्च
संवत्सरस्याहोरात्राः स एषोऽहःसंमानः (ऐ० आ० ३।२।१)
त्यारण्यकम् ।

०–पञ्चपादं पितरं द्वादशाकृतिं

दिव आहुः परे अर्धे पुरीषिणम् ।

अथेमे अन्य उपरे विचक्षणं

सप्तचक्रे षळर आहुरर्पितम् ॥१२॥

प०—पञ्चऽपादम् । पितरम् । द्वादशऽआकृतिम् ।

दिवः । आहुः । परे । अर्धे । पुरीषिणम् ।

अथ । इमे । अन्ये । उपरे । विऽचक्षणम् ।

सप्तऽचक्रे । षट्ऽअरे । आहुः । अर्पितम् ॥ १२ ॥

भा०—पञ्चपादं पञ्चसङ्ख्याकर्त्वात्मकपादोपेतम् । एतद्धेमन्त शिशिरयोरेकत्वाभिप्रायम् । पितरं सर्वस्य प्रीणयितारं द्वादशाकृ द्वादशमासा एवाकृतयो यस्य तादृशं पुरीषिणं वृष्ट्युदकेन तद्व प्रीणयितारं वा । पुरीषमित्युदकनाम । उक्तलक्षणं संवत्सरचक्रं दिव द्युलोकस्य परेऽर्धे । तात्स्थ्यात्ताच्छब्द्यम् । परस्मिन्नर्धेऽन्तरिक्षलक्ष ऽवस्थित आदित्य इत्यर्थः । तस्मिन्नर्पितमाहुः । एतदुत्तरत्र स्थितमत्रा प्यनुषज्यते । यद्यत्रार्पितं तत्तदधीनम्, अतः संवत्सरं सूर्यायत्तमाहु रित्यर्थः । अथेमेऽपि चान्ये केचन वेदवादिन एवमाहुः । किमिति उपरे, उपरमन्तेऽस्मिन्नुपरताः प्राणिनोऽत्रेति वोपरः संवत्सरः तस्मिन् कीदृशे ? सप्तचक्रे । सप्तादित्यरश्मयस्तद्द्वारेण चक्रस्थानीय यस्य स तथोक्तः । यद्वा । अयनर्तुमासपक्षाहोरात्रिमुहूर्तानि सप्त स चक्राणि पुनःपुनःक्रममाणानि यस्य तादृशे । षळरे षड़ृतव एवा नाभौ प्रत्यृताः सम्बद्धा यस्य तथोक्तलक्षणे संवत्सरे रथे विचक्ष विविधदर्शनकरमादित्यमर्पितमाहुः । एतदुक्तं भवति । अमुमादित्य दक्षिणतोत्तररूपमिन्नगतेस्तीव्रमन्दादिभावस्य च कालाधीनत्वात्त दधीनमाहुः । अन्ये तु संवत्सराद्यात्मकस्य कालस्य सूर्यगमनागमन साध्यत्वात्तदायत्तत्वमाहुरिति ।

म०—पञ्चारे चक्रे परिवर्तमाने

तस्मिन्ना तस्थुर्भुवनानि विश्वा ।

तस्य नाक्षस्तप्यते भूरिभारः

सनादेव न शीर्यते सनाभिः ॥१३॥

प०—पञ्चऽअरे । चक्रे । परिऽवर्तमाने ।

तस्मिन् । आ । तस्थुः । भुवनानि । विश्वा ।

तस्य । न । अक्षः । तप्यते । भूरिऽभारः ।

सनात् । एव । न । शीर्यते । सऽनाभिः ॥१३॥

भा०—पञ्चारे पञ्चर्तुरूपैररैर्युक्ते चक्रे संवत्सरात्मके परिवर्तमाने संवत्सरपरिवत्सरादिरूपेण पुनःपुनरावर्तमाने सति तस्मिन् कालचक्रे विश्वा भुवनानि सर्वाणि भूतजातानि वर्तन्त इत्यर्थः । किञ्च तस्य चक्रस्य मध्ये वर्तमानोऽक्षो भूरिभारः सकलभुवनवहनेन प्रभूतभारोऽपि न तप्यते, न पीड्यते । किञ्च सनादेव सनातन एव सनाभिः समाननाभिकः सर्वदैकरूपनाभिरसौ न शीर्यते, न भिद्यते । यथा लौकिकरथाक्षो भारेण भग्नो भवति अक्षघातेन च नाभिर्विद्वृता भवति तद्वदत्रापि नास्तीत्यर्थः ।

मं०—सनेमि चक्रमजरं वि वावृत

उत्तानायां दश युक्ता वहन्ति ।

सूर्यस्य चक्षू रजसैत्यावृतं

तस्मिन्नार्पिता भुवनानि विश्वा ॥१४॥

प०—सऽनेमि । चक्रम् । अजरम् । वि । ववृते ।

उत्तानायाम् । दश । युक्ताः । वहन्ति ।

सूर्यस्य । चक्षुः । रजसा । एति । आऽवृतम् ।

तस्मिन् । आर्पिता । भुवनानि । विश्वा ॥१४॥

भा०—सनेमि समाननेम्येकप्रकारबहिर्वलयमक्षीणनेमि चक्रं संवत्सराख्यमजरं सदातनमपि जरारहितं वि ववृते, पुनःपुनर्विशेषेण वर्तते । उत्तानायामूर्ध्वतनायामीषायामुपरिविस्तृतभूम्यां वा दशेन्द्रादयः पञ्च लोकपाला निषादपञ्चमाश्चत्वारो ब्राह्मणादयो वर्णा मिलित्वा दशसङ्ख्याका युक्ताः स्वस्वव्यापारयुक्ता वहन्ति, निर्वहन्ति, कृत्स्नं जगन्निर्वहन्तीत्यर्थः । तन्निर्वाहार्थत्वात् कालस्य । किञ्च सूर्यस्यादित्यस्य चक्षुः ख्यानस्वभावं सर्वस्य चक्षुःस्थानीयं वा मण्डलम् । चक्षुः ख्यातेर्वा चष्टेर्वेति निरुक्तम् ( नि० ४ । ३ ) । रजसा वृष्ट्युदकेनावृतं व्याप्तमेति, गच्छति । उदकं रज उच्यत इति यास्कः ( नि० ४ । १९ ) तादृशे मण्डले विश्वा भुवनानि सर्वाणि भूतजातान्यार्पिता अर्पितानि, तदधीनत्वात्तेषाम् ।

म०—साकञ्जानां सप्तथमाहुरेकजं

षळिद्यमा ऋषयो देवजा इति ।

तेषामिष्टानि विहितानि धामशः

स्थात्रे रेजन्ते विकृतानि रूपशः ॥१५॥

प०—साकम्ऽजानाम् । सप्तथम् । आहुः । एकऽजम् ।

षट् । इत् । यमाः । ऋषयः । देवऽजाः । इति ।

तेषाम् । इष्टानि । विऽहितानि । धामऽशः ।

स्थात्रे । रेजन्ते । विऽकृतानि । रूपऽशः ॥१५॥

भा०—साकञ्जानामेकस्मादादित्यात् सहोत्पन्नानां सप्ताना-मृतूनां मध्ये सप्तथं सप्तममृतुम् ।

थट् च छन्दसि ( पा० ५ । २ । ५० ) इति थट् ।

एकजमेकेनोत्पन्नमाहुः कालतत्त्वविदः । चैत्रादीनां द्वादशानां मासानां द्वयमेलनेन वसन्ताद्याः षड्तवो भवन्ति । अधिकमासेनैक उत्पद्यते सप्तमर्तुः । न च तादृशो मास एव नास्तीति मन्तव्यम् । अस्ति त्रयोदशो मास इत्याहुः ( तै० सं० ६ । ५ । ३ । ४ ) इति श्रुतेः । तदेवोच्यते । षडिद्यमाः । इच्छब्द एवकारार्थः । षडेवर्तवो मासद्वय-रूपा ऋषयो गन्तारः । ते च देवजा देवादादित्याज्जाता इत्येवमाहुः । सप्तमाधारस्य त्रयोदशस्य मासस्य देवाभावः । निःसूर्योऽधिकमासो मण्डलं तपते रवेरित्यादिस्मृतेः । तस्मात् षडेव देवजाः अदेवज एकः । तेषामृतूनां स्वरूपाणीष्टानि सर्वलोकाभिमतानि धामशस्तत्तत्स्थाने विहितानि पृथक् पृथक् स्थापितानि रूपशो रूपभेदेन विकृतानि विविधाकृतियुक्तानि । स च रूपभेदस्तैत्तिरीयैराम्नातः । स रसमह वसन्ताय प्रायच्छद्यवं ग्रीष्मायेत्यादि ( तै० सं० ७ । २ । १० । १ ) स्थात्रेऽधिष्ठात्रे तदर्थाय रेजन्ते, चलन्ति, जगद्व्यवहाराय पुनःपुन-रावर्तन्त इत्यर्थः ।

म०—स्त्रियः सतीस्ताँ उ मे पुंस आहुः

पश्यदक्षण्वान्न वि चेतदन्धः ।

कविर्यः पुत्रः स ईमा चिकेत

यस्ता विजानात् स पितुष्पितासत् ॥१६॥

प०—स्त्रियः । सतीः । तान् । ऊम् इति । मे । पुंसः । आहुः ।

पश्यत् । अक्षण्ऽवान् । न । वि । चेतत् । अन्धः ।

कविः । यः । पुत्रः । सः । ईम् । आ । चिकेत ।

यः । ता । विऽजानात् । सः । पितुः । पिता । असत् ॥१६॥

भा०—मे मदीया या दीधितयः स्त्रियः । संस्त्यानवत्यो योषितः सतीः सत्यः । योषिद्वदुदकरूपगर्भधारणात्स्त्रीत्वम् । एषां रश्मीनामाविष्टलिङ्गत्वात् स्त्रीलिङ्गता । तानु तान् रश्मीनेव पुंस आहुः । प्रभूतवृष्ट्युदकसेक्तॄन् पुरुषानाहुः । प्रतिनिर्देशापेक्षया पुँल्लिङ्गता । अमुमर्थमत्यन्तनिगूढमक्षण्वान् ज्ञानदृष्ट्युपेतः कश्चिन् महान् पश्यत्, जानाति । अन्धोऽतथारूपः स्थूलदृष्टिर्न वि चेतत्, न विचेतयति, न जानाति । किञ्च यः कविः क्रान्तदर्शी पुत्रः स्त्रीपुरुषरूपाणां रश्मीनां पुत्रस्थानीयः पुरु जगतां त्राता वृष्ट्युदकलक्षणोऽस्ति स ईं स एव पुत्रः । यद्वा । ईमेनमर्थम् । स्त्रीणां सतीनां पश्चात् पुरुषभावमा चिकेत सर्वतो जानाति । पित्रोः स्थितिं पुत्र एव जानाति, नान्यः । यः कश्चित्ता तानि विजानात् स्त्रीपुरुषपुत्ररूपाणि जानीयात् स पितुः पितासत् । पिता वृष्ट्या जगत्पालको रश्मिसमूहः । तस्यापि पितादित्यः स भवति, आदित्य एव भवतीत्यर्थः । यद्वा । लौकिकोक्तिरियम् । यस्तानि जानाति स एवं भवति । स्वयं पितुः पुत्रः सन्नपि स्वपुत्रापेक्षया पिता च भवति । पुत्रपौत्रादिसहितश्चिरकालं जीवी भवति । इत्याधिदैवतम् ।

अथाध्यात्मम् । या इदानीं स्त्रियः सतीः स्त्रीत्वं प्राप्ता आहुर्लौकिकाः तानु तानेव मे मह्यं पुंसः पुरुषानाहुः, प्रतिपादयन्ति तत्त्वज्ञाः । कथमन्यस्यान्यभावः ? उच्यते । एकस्यैव निरस्तसमस्तोपाधिकस्यात्मनस्तद्देहावस्थानमात्रेण तत्तद्व्यपदेशोपपत्तेः । श्रूयते हि ।

त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
( श्वे० उ० ४ । ३ ) इत्यादि ।

स्त्रीत्वं पुंस्त्वं चोभयमपि वस्तुतो नास्तीत्युक्तं भवति। श्रुतिरपि तदभावं बोधयति ।

नैव स्त्री न पुमानेष नैव चायं नपुंसकः ।
यद्यच्छरीरमादत्ते तेन तेन स चोद्यते ॥
( श्वे० उ० ५ । १० ) इति ।

द्वितीयः पादः पूर्ववत् । किञ्च पुत्रो वयसाल्पोऽपि यः कविः क्रान्तप्रज्ञो ज्ञानी स्यात् ईमिममर्थं स विचिकेत्, जानाति । एवमुक्तलक्षणस्य परमात्मनस्ता तानि स्त्रीत्वपुंस्त्वादीनि यो विजानात् औपाधिकानि जानीयात् स पितुः स्वोत्पादकस्यापि ज्ञानरहितस्य पितासत्, पितृवत् पूज्यो भवति । उक्तमर्थमभिप्रेत्य ताण्डकब्राह्मणम् । शिशुर्वा आङ्गिरसो मन्त्रकृतां मन्त्रकृदासीत् स पितॄन् पुत्रका इत्यामन्त्रयतेत्युपक्रम्य ते देवानपृच्छन्त ते देवा अब्रुवन्नेष वाव पिता यो मन्त्रकृदिति ( ता० १३ । ३ । २४ ) मन्त्रद्रष्टुरेव किल पितृत्वं तत्त्ववित् पितुः पितासदिति किमाश्चर्यमित्यभिप्रायः ।

म०—अवः परेण पर एनावरेण
पदा वत्सं बिभ्रती गौरुदस्थात् ।
सा कद्रीची कं स्विदर्धं परागात्
क्व स्वित् सूते नहि यूथे अन्तः ॥१७॥

प०—अवः । परेण । परः । एना । अवरेण ।
पदा । वत्सम् । बिभ्रती । गौः । उत् । अस्थात् ।

सा । कद्रीची । कम् । स्वित् । अर्धम् । परा । अगात् ।

क्व । स्वित् । सूते । नहि । यूथे । अन्तरिति ॥१७॥

भा०—अत्राग्नौ हूयमानाहुतिर्गोरूपेण स्तूयते । गौर्गोरूपा गमनशीलैषाहुतिसङ्केन पोष्यं वत्सं वत्सस्थानीयमग्निमवोऽवस्ताद्धोदेशे परेण पदा पादद्वयेन स्वावयवेनाकृष्य बिभ्रतो धारयन्ती तथा परः परस्तादुपरिदेश एनानेनावरेण च पदा पादद्वयेनाकृष्य तमेव वत्सं बिभ्रत्युदस्थात्, सूर्यं प्रत्युत्तिष्ठति ।

'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' (मनु० ३ । ७६) इति स्मृतेः । अथैवं कृतवती साहुतिः कद्रीची क्व गतेत्यनिश्चयगमना । आदित्यं प्राप्तवतीत्यर्थः । कं स्वित् कं फलभाजं पुरुषं प्रत्यर्धमर्धमार्गमागत्य । यद्वा । अर्धमृद्धम् । परागात्, परागच्छति । आगत्य च क्व स्वित् सूते ? कुत्र प्रदेशे फलमुत्पादयति ? नहीतरगोवदियं यूथेऽन्तः सजातीयगोमध्ये सूते । साधारण्येन यत्र क्वचिन्न सूते अपि तु कस्मिंश्चिदनुष्ठातरि । अतः स महान् को नु खल्विति ? यद्वा । आदित्यरश्मिसमूह एव गोरूपेण स्तूयते । गौरुक्तलक्षणा रश्मिरूपा गौर्वत्सं वत्सवद्रक्षणीयं यजमानमुक्तक्रमेण बिभ्रत्युदस्थात् । अथ तथा कृत्वा सा कद्राच्यदृश्यगमना सती कं स्विदर्धमृद्धमर्धस्थानभाजं वा कं स्वित्पुरुषमादित्यं परागात्, अप्रतिनिवृत्ता गता । 'तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः' ( मु० उ० १ । २ । ५ ) इति श्रुतेः । तथा कृत्वा च क्व स्वित् सूते ? कस्मिन्निन्द्रादिलोके जनयति ? न सर्वत्र । शिष्टं समानम् ।

म०—अवः परेण पितरं यो अस्या-

नुवेद पर एनावरेण ।

कवीयमानः क इह प्र वोचद्-

देवं मनः कुतो अधि प्रजातम् ॥१८॥

प०—अवः । परेण । पितरम् । यः । अस्य ।

अनुऽवेद । परः । एना । अवरेण ।

कविऽयमानः । कः । इह । प्र । वोचत् ।

देवं । मनः । कुतः । अधि । प्रऽजातम् ॥ १८ ॥

भा०—अवोऽवस्तात् स्थितमस्य पितरमेतल्लोकपालकमग्निं परेणादित्येन सह योऽनुवेद अनुक्रमेण जानाति तथा परः परस्तात् स्थितमादित्यमस्य पितरं पालकम् । सोऽपीममेव लोकं वृष्ट्यादिना पालयति । तादृशमादित्यमेनानेनावरेणाग्निना सह योऽनुवेद अग्न्यादित्यौ व्यतिहारेणोपास्ते । यद्वा । अभिभूतरजस्तमस्कावुद्बुद्धसत्त्वौ अत एव स्वाधीनमायावेतावेकत्वेन वाधिगच्छति । स तादृशः पुरुषः कवीयमानः कविवदाचरन् क्रान्तदर्शित्वमात्मनः ख्यापयन् क इहास्मिल्लोके प्र वोचत्, प्रब्रवीति । किञ्च देवं द्योतमानं देवविषयमलौकिकं वा मनः कुतः कस्माददृष्टविशेषादभ्याधिक्येन प्रजातम्, उत्पन्नम् । उभयमपि दुर्लभमित्यर्थः ।

म०—ये अर्वाञ्चस्ताँ उ पराच आहु-

र्ये पराञ्चस्ताँ उ अर्वाच आहुः ।

इन्द्रश्च या चक्रथुः सोम तानि

धुरा न युक्ता रजसो वहन्ति ॥ १९ ॥

प०—ये। अर्वाञ्चः । तान् । ऊम् इति । पराचः ।आहुः ।

ये । पराञ्चः । तान् । ऊम् इति । अर्वाचः । आहुः ।

इन्द्रः । च । या । चक्रथुः । सोम । तानि ।

धुरा । न । युक्ताः । रजसः । वहन्ति ॥ १९ ॥

भा०—ये सूर्यसोमयोश्चक्रे वर्तमाना रश्मयो ग्रहादयश्च तत्परिभ्रमणवशेनार्वाञ्चोऽर्वागञ्चना अधोमुखाः सन्ति ताँ उ तानेव पराच आहुः । पराङ्मुखाञ्चनानूर्ध्वानाहुः कालविदः । तथा प्रथमं ये पराञ्चः परागञ्चनाः ताँ उ तानेवार्वाच आहुः । हे सोम त्वमिन्द्रः परमेश्वर इरां भूमिं वृष्ट्या धारक आदित्यः । यद्वा । द्वादशादित्यानां मध्य इन्द्रोऽप्येकः । विवस्वदिन्द्रयुता इत्युक्तत्वादयमपीन्द्रः । स च युवां या यानि मण्डलपरिभ्रमणानि चक्रथुः कृतवन्तौ तानि रजसो रञ्जनात्मकस्य लोकस्य ।

कर्मणि षष्ठी ।

लोकं वहन्ति, निर्वहन्ति । तत्र दृष्टान्तः । धुरा शकटादौ धुरि युक्ताः सम्बद्धा अश्वादयो यथा धुरं वहन्ति तद्वत् । यद्वा । एतत् पूर्वार्धे दृष्टान्तितम् । धुरा युक्ताः । धुरि स्थितं चक्रमपि धुरशब्देनोच्यते । तत्र युक्ताः समर्पिताः पुरुषास्तत्परिभ्रमणवशेनार्वाञ्चोऽपि पराञ्चः पराञ्चोऽप्यर्वाञ्चो भवन्ति तद्वत् ।

म०—द्वा सुपर्णा सयुजा सखाया

समानं वृक्षं परि षस्वजाते ।

तयोरन्यः पिप्पलं स्वाद्वत्त्य-

नश्नन्नन्यो अभि चाकशीति ॥२०॥

प०—द्वा । सुऽपर्णा । सऽयुजा । सखाया ।

समानम् । वृक्षम् । परि । सस्वजाते इति ।

तयोः । अन्यः । पिप्पलम् । स्वादु । अत्ति ।

अनश्नन् । अन्यः । अभि । चाकशीति ॥ २० ॥

भा०—अत्र लौकिकपक्षिद्वयदृष्टान्तेन जीवपरमात्मानौ स्तूयेते । यथा लोके द्वौ सुपर्णौ सुपतनौ शोभनगमनौ सयुजा समानयोगौ सखाया सामानख्यानौ समानं वृत्तं परि षस्वजाते एकमेव वृत्तं परिषस्वजाते आश्रयतः । तयोरन्यः एकः पिप्पलं पक्वं स्वादुतरमत्ति अपरोऽनश्नन्नभि चाकशीति अभिपश्यति तद्वत् द्वौ सुपर्णस्थानीयौ क्षेत्रज्ञपरमात्मानौ सयुजा समानयोगौ । योगो नाम सम्बन्धः स च तादात्म्यलक्षणः । स एवात्मा जीवात्मनः स्वरूपं यस्य परमात्मन स तदात्मा । एवमन्यस्यापि स एवात्मा परमात्मनः स्वरूपं यस्य जीवात्मनः । एवमेकस्वरूपावित्यर्थः । अनेन भास्करमतानुसारिणोऽतिरेकिनाम्नो जीवात्मा परमात्मनो नान्यः स च परमात्मा जीवादन्यो नानाजीवाश्रयणादिति मतं निरस्तं भवति । ननु सम्बन्धो द्विष्ठः स च पक्षिणोरेव भेदमपेक्षते अतः कथमैकात्म्यमिति न । औपाधिकभेदं वास्तवाभेदं चापेक्ष्य प्रवृत्तः । अत एव सखायौ

समानख्यानौ नान्यख्यानौ। नन्वेकस्य यादृशं ख्यानं तादृशमेवान्यस्येति व्युत्पत्त्या भेदः स्फुटं प्रतिभाति कथं तादात्म्यमुच्यत इति न वक्तव्यम्। नात्र परस्परं दृष्टान्तदार्ष्टान्तिकभावः। अपि तु यस्य यादृशं ख्यानं स्फुरणं परमात्मनः तदेव ख्यानमितरस्यापि जीवात्मन इति सखायावित्युच्यते। एकरूपप्रकाशावित्यर्थः। अत उपपन्नमैकात्म्यम्। अनेन वास्तवभेदोऽपि निरस्तः। समानं वृक्षं परि षस्वजाते इत्यत्र यथाश्रयान्तराभावादुभयोरेकाश्रयत्वमभ्युपगन्तव्यं तद्वत् सयुजा सखायेत्युभयत्राप्येकयोगख्याने आश्रयणीये। वृश्च्यत इति वृक्षो देहः। स चोभयोः समान एक एव। जीवस्य भोगार्थत्वात् परमात्मना सृष्टैर्महाभूतैरारब्धत्वात्तस्योपलब्धिस्थानत्त्वाच्चोभयोरपि समानः। तादृशं समानं वृक्षं परि षस्वजाते, परिष्वजतः, आश्रयतः। न च जीवस्य वस्तुत ईश्वरत्वे कथं जीवबुद्ध्या संसारशोकाविति वाच्यं तयोर्मोहकृतत्वात्। तथा चाथर्वणिका अनुमन्त्रमाम्नायास्य सन्देहनिवर्तकमुत्तरं मन्त्रमेवमामनन्ति।

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः।

जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः॥

(मु० उ० ३। १। २) इति। अस्यायमर्थः। एक एव शरीरे पूर्णः पुरुषः परमात्मा निमग्नो निगूढः सन् स्वयमपीश्वरोऽप्यनीशत्वबुद्ध्या मुह्यमानो मूढः सञ्छोचति। संसारेऽहं कर्ता सुखी दुःखीति जननमरणे अनुभवति। यदा तु जुष्टं नित्यतृप्तमन्यं संसारशोकातीतमीशं परमेश्वरं पश्यति स्वानन्यतया साक्षात्करोति। तदा वीतशोको देहाद्व्यतिरिक्तः स्वस्वरूपसाक्षात्कारेण गततापत्रयः सन्नस्य महिमानमिति। निरस्तसमस्तौपाधिकस्य परमेश्वरस्य महिमानं सार्वात्म्यसर्वज्ञत्वादिमहिमानमिति। एति, प्राप्नोति। न च तद्भावनाप्तौ तन्महिमा प्राप्यते। अतस्तद्रूपो भवतीर्थः। तस्माद्वस्तुत एक एव। भेदस्तु मोहकृत इति प्रसिद्धम्। अनुभवदशायां लौकिकबुद्ध्या भेदमभ्युपेत्योच्यते। तयोरन्यो जीवात्मा पिप्पलं कर्मफलं स्वादुभूतमत्ति, भुङ्क्ते। यस्य यदुपार्जितं तत्तस्य स्वादु भवति। अन्यः परमात्मानश्नन्नाप्तकाम-

त्वेनाभुञ्जानः स्पृहाया अभावात् । आप्तकामस्य का स्पृहेति स्मृतेः । तस्मादवास्तवभेदमुपजीव्य तयोरन्य इत्युक्तम् । वस्तुतस्त्वनीशया शोचति मुह्यमान इत्युक्तत्वादभेद एव । तादृशः परमात्मा स्वात्मन्यध्यस्तं जगत्साक्षित्वेनेक्षते । अत्र द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारावित्यादि निरुक्ते गतमस्य मन्त्रस्य व्याख्यानमनुसन्धेयम् ( नि० १४ । ३० ) ।

म—यत्रा सुपर्णा अमृतस्य भाग-

मनिमेषं विदथाभिस्वरन्ति ।

इनो विश्वस्य भुवनस्य गोपाः

स मा धीरः पाकमत्रा विवेश ॥ २१ ॥

प०—यत्र । सुऽपर्णाः । अमृतस्य । भागम् ।

अनिऽमेषम् । विदथा । अभिऽस्वरन्ति ।

इनः । विश्वस्य । भुवनस्य । गोपाः ।

सः । मा । धीरः । पाकम् । अत्र । आ । विवेश ॥ २१ ॥

भा०—यत्रादित्यमण्डले सुपर्णाः सुपतनाः शोभनगमना रश्मयोऽमृतस्योदकस्य भागं भजनीयमंशमादायानिमेषमनवरतं विदथा वेदनेन ज्ञानेनास्माभिरेवं कर्तव्यमिति बुद्ध्याभिस्वरन्ति अभिप्रापयन्ति । यश्च विश्वस्य भुवनस्य भूतजातस्येनः स्वामी तथा तस्यैव गोपा गोपयिता रक्षिता । अयमादित्यः स परमेश्वरो धीरो धीमान् प्राण्यनुग्रहबुद्धियुक्तः सन् मा मां पाकं पक्तव्यमपक्वप्रज्ञमत्रा-

स्मिन् स्वकीयमण्डल आ विवेश, प्रवेशयति। अत्रास्मदीये देहे वा नियामकतया प्रविष्ट इत्यधिदैवतपक्षे।

अथाध्यात्मपक्षे। यत्र यस्मिन्नात्मनि सुपर्णाः शोभनपतनानि स्वस्वविषयग्रहणाय गमनकुशलानीन्द्रियाणि चक्षुरादीन्यमृतस्य भागम्। अत्र विषयावच्छिन्नचैतन्यममृतमित्युच्यते। तस्य भागं भजनीयं स्वस्वांशमनिमेषं निमेषरहितमनारतं विदथा वेदनेन वृत्त्यवच्छिन्नचैतन्येनावरुद्धान्यभिस्वरन्ति अभिप्रयन्ति आवरणापगमनेन स्फोरयन्ति। किञ्च यस्त्विनः स्वाम्यस्य देहस्य विश्वस्य भुवनस्य गोपा गोपायिता रक्षिता। यद्वा। विश्वस्य भुवनस्य भूतजातस्य स्वाम्यस्य देहस्य गोपाः। अनेन तत्त्वपदार्थयोरैकत्वं प्रतिपादितं भवति। स परमेश्वरो धीरः समाधिनिष्ठः सर्वदाविक्रियो मा मां पाकं परिपक्कमनस्कं यागदानादिनापगतरजस्तमस्कत्वेन दर्पणवदतिनिर्मलसत्त्वोद्रिक्तमनस्कं मामा विवेश। उक्तरूपे चित्ते तादृशं वस्तु स्फुरतीत्यर्थः। यद्वा। अपरिपक्कमना अहं पूर्वमज्ञानदशायां मदन्य ईश्वरोऽस्तीत्यविद्वान् ततः परमस्ति कश्चित् सर्वज्ञः सर्वेश्वरः सत्यज्ञानादिलक्षण इति निश्चित्य पश्चाद्गुरुशास्त्राभ्यां स एवाहमस्मीति मत्वा एवं पारम्पर्येणावगत्यासम्भावनाविपरीतभावने व्युदस्य भावनया साक्षात्कृत्य परिपूर्णः परमात्माभूवमित्यर्थः। अयमेव स मा धीरः पाकमत्रा विवेशेत्यनेनोच्यते। नन्वनवच्छिन्नस्य परमात्मनः सर्वत्र व्याप्तत्वात् प्राप्तिरेव नोपपद्यते सम्प्रत्यत्र प्राप्तिर्द्विविधा प्राप्तप्राप्तिरप्राप्तप्राप्तिश्चेति। प्राप्तस्यापि कण्ठे चामीकरन्यायेनावरणाज्ञानहानद्वारेण प्राप्तिरुपपद्यते। अस्य मन्त्रस्य यन्निरुक्तं यत्र सुपर्णाः सुपतना आदित्यरश्मय इत्यादिकं तदत्र द्रष्टव्यम् ( नि० ३।१२ )।

म०—यस्मि॑न् वृ॒क्षे म॒ध्वदः॑ सुप॒र्णा

नि॑वि॒शन्ते॒ सुव॑ते॒ चाधि॒ विश्वे॑।

तस्येदाहुः पिप्पलं स्वाद्वग्रे

तन्नोन्नशद्यः पितरं न वेद ॥ २२ ॥

प०—यस्मिन् । वृक्षे । मधुऽअदः । सुऽपर्णाः ।

निऽविशन्ते । सुवते । च । अधि । विश्वे ।

तस्य । इत् । आहुः । पिप्पलम् । स्वादु । अग्रे ।

तत् । न । उत् । नशत् । यः । पितरम् । न । वेद ॥ २२ ॥

भा०—अत्र वृक्षस्वरूपकल्पना । अधिदैवमादित्यमध्यात्ममात्मानं च प्रशंसति । यस्मिन्नादित्ये वृक्षे वृक्षवत् सर्वफलाश्रयभूते मध्वदः । मध्वित्युदकनाम । तददन्तीति मध्वद उदकस्यात्तारः सुपर्णाः सुपतना रश्मयो निविशन्ते प्रविशन्ति रात्रौ सुवते च पुनरुदयकाले प्रकाशं जनयन्ति च यस्मादादित्यात् । कुत्र ? अधि विश्वे विश्वस्योपरि । तस्यादित्यवृक्षस्य पिप्पलं पालकं फलं स्वादु रसवदग्र उपर्युपासनानन्तरमाहुः, कथयन्ति तत्त्वविदः । यद्वा । सर्वस्याप्युपरि वर्तमानमाहुः । ईदृशं पितरं जगतः पालयितारं यो नरो न वेद नोपास्ते स तन्नोन्नशत् । नशतिर्गतिकर्मा । तत्फलं न प्राप्नोति । वेदितुस्त्वग्रे पिप्पलमाहुरित्यर्थः । इत्यधिदैवपक्षे ।

अथाध्यात्मपक्षे । यस्मिन् परमात्मनि वृक्षे वृक्षवद्गमनादिरहितेऽविक्रिये सुपर्णाः शोभनगमनानीन्द्रियाणि मध्वदो मधुनो ज्ञानस्यातॄणि । तज्ज्ञानेन ज्ञानभाञ्जीत्यर्थः । निविशन्ते स्वापकाले स्वस्वविषयेभ्यः प्रतिनिवृत्तान्यात्मनिवृत्त्या लीयन्ते पुनः प्रबोधकालेऽधि विश्वे विश्वस्योपरि सुवते च उद्यन्ति । स्वस्वविषयाल्लँभन्त इत्यर्थः । तस्य परमात्मनः पिप्पलं पालकं संसारत उद्धारकं स्वाद्वास्वादनीयममृतत्वलक्षणं ज्ञानम् । यत्फलास्वादने पुनः क्षुत्तृष्णाशोकमोहजरामरणादयो न भवन्ति तद्धि स्वादुतमम् । इतरस्वर्गादिफलानि पुनर्जननाद्यापादकत्वा-

दापातस्वादूनि । तत्फलमग्रे स्वरूपज्ञानोत्तरकालमाहुः । यः पुमान् पितरं पालकं ज्ञानफलं तत्फलाधारमात्मानं वा न वेद न जानाति गुरुशास्त्रात् स तत्फलं नोन्नशत्, न प्राप्नोति । अत आत्मानं यो वेद स एव तन्मोक्षफलं प्राप्नोतीत्यर्थः । यद्वा । चर्मवदाकाशम् ( श्वे० उ० ६ । २० ) इत्यादिश्रुतेर्ज्ञानादन्योपायस्यामृतत्वप्राप्तिं निवारयति । ब्रह्म वेद ब्रह्मैव भवतीत्यादिकानुज्ञाप्राप्तिमाह । तस्मादीदृशं परमेश्वरं विदित्वा मुक्तो भूयासमित्यर्थः ।

म०—यद्गायत्रे अधि गायत्रमाहितं
त्रैष्टुभाद्वा त्रैष्टुभं निरतक्षत ।
यद्वा जगज्जगत्याहितं पदं
य इत्तद्विदुस्ते अमृतत्वमानशुः ॥२३॥

प०—यत् । गायत्रे । अधि । गायत्रम् । आऽहितम् ।
त्रैस्तुभात् । वा । त्रैस्तुभम् । निःऽअतक्षत ।
यत् । वा । जगत् । जगति । आऽहितम् । पदम् ।
ये । इत् । तत् । विदुः । ते । अमृतऽत्वम् । आनशुः ॥२३॥

भा०—गायत्रे अधि गायत्रमाहितम् । प्राथम्यात् सर्वैः स्तुत्यत्वाच्च गायत्री भूः । तदीयं स्थानं गायत्रम् । अध्युपरि तत्र गायत्रमाग्नेयं पदमाहितम् । प्रथमसृष्टत्वात् गायति त्रायते चेति व्युत्पत्त्या च प्रजापतेर्मुखाद्गायत्र्या सहोत्पन्नत्वाच्चक्तचाग्निरपि गायत्रः । गायत्रोऽग्निः ( तै० सं० २ । २ । ५ । ५ ) इति श्रुतेः । भूम्यामग्निः स्थापित इति यदस्ति । तथा त्रैष्टुभाद्द्वितीयत्वाद्विष्टिपर्जन्यविद्युद्-

त्रिस्तोभयुक्तादन्तरिक्षात् त्रैष्टुभं स्तोभयुक्तमूर्ध्वाधस्तिर्यग्लक्षणस्तो-
त्रयोपेतं वायुं निरतक्षत साधु सम्पादितवन्तो देवा इति यदस्ति।
अथवा जगति सर्वैर्गन्तव्य उद्गततमे वा तृतीयभूते द्युलोके जगद्गमन-
शीलमादित्याख्यं पदमाहितमिति यदस्ति। तदिदं त्रिषु स्थानेषु
त्रयाणामग्न्यादीनां पदाधानं य इद्य एव नरा विदुः जानन्ति त
एवामृतत्वमानशुः। अमरणरूपं पदमाप्नुवन्ति। इत्यधिलोकम्।

अथाधियज्ञम्। गायत्रे प्रातः सवनेऽध्युपरि गायत्रं छन्दः
पदमाहितमिति यत्। तथा त्रैष्टुभान्माध्यन्दिनात् सवनात् त्रैष्टुभं
छन्दो निरतक्षत तत्र आहितमिति यत्। वा किञ्चेत्यर्थः। जगति
तृतीयसवने जगज्जागतं पदमाहितमिति यत् तत्तादृशं सवनत्रयेषु
छन्दस्त्रयसंस्थानं ये नरा विदुः यजमाना विदुः जानन्ति तेऽमृतत्वं
ज्ञानानुष्ठानद्वारेण मोक्षमानशुः आप्नुवन्ति। अथवा गायत्रे प्रातःसवने।
त्रिषु सवनेषु छन्दस्त्रयपरिमाणात् सवनान्यपि तत्तच्छन्दःशब्देनोच्य-
न्ते। गायत्रं प्रातःसवनं त्रैष्टुभं माध्यन्दिनं सवनं जागतं तृतीयसवन-
मिति श्रुतेः ( तै० सं० २।२।९।५-६ )। तादृशे प्रातःसवनेऽध्यु-
परि गायत्रमष्टाक्षरात्मकमाहावप्रतिगररूपं गायत्रं पदमाहितम्।
तद्यथा होता शोंसावोमिति त्र्यक्षरेण तथा शंसामोदैवोमिति पञ्चा-
क्षरेणाध्वर्युः प्रतिगृणाति। तन्मिलित्वाष्टाक्षरं सम्पद्यते। तच्चाष्टाक्षरं
गायत्रीसदृशं तस्या अपि पादस्याष्टाक्षरत्वात्। इदमेकं प्रातःसवन-
रूपे गायत्रपदप्रतिष्ठापनम्। तथा सवनान्तेऽपि शंसनानन्तरमुक्थं
वाचीति चतुरक्षरमाह। ओमुक्थशा इति चतुरक्षरमध्वर्युः। तदष्टा-
क्षरं सम्पद्यते। एतदेकं परं गायत्रे गायत्रस्थापनम्। तथा त्रैष्टुभा-
न्माध्यन्दिनसवनात् त्रैष्टुभमाहावप्रतिगरणरूपं पदं निरतक्षत ऋ-
त्विजः। तद्यथा माध्यन्दिनसवने होताध्वर्यो शोंसावोमित्याह्वयते
षडक्षरेण अध्वर्युश्च शंसामोदैवोमिति पञ्चाक्षरेण प्रतिगृणाति।
तन्मिलित्वैकादशाक्षरं सम्पद्यते। इदमेकं माध्यन्दिनसवनादौ त्रैष्टुभे
त्रैष्टुभाधानम्। तथा सवनान्तेऽपि शंसनानन्तरमुक्थं वाचि इन्द्रा-
येति सप्ताक्षरमाह। अध्वर्युश्चोमुक्थशा इति चतुरक्षरेण प्रतिगृणाति।

तन्मिलित्वैकादशाक्षरं सम्पद्यते। इदमपरं त्रैष्टुभे त्रैष्टुभस्थापनम्। तथा तृतीयसवने होताध्वर्यो शोंशोंसावोमिति सप्ताक्षरेणाह्वयते शंसामोदैवोमिति पञ्चाक्षरेणाध्वर्युः प्रतिगृणाति। द्वादशाक्षरं भवति। तदिदं प्रथमं जागते जागतोत्पादनम्। तथा पश्चादपि शंसनानन्तरमाह उक्थं वाचि इन्द्राय देवेभ्य इति । एतदेवैकादशाक्षरं भवति। अध्वर्युश्चोमित्येकाक्षरेण प्रतिगृणाति । तदुभयं मिलित्वा द्वादशाक्षरं भवति। तदिदमपरं जागते जागतपदस्थानम् । एवं त्रिषु छन्दःसु त्रिषु गायत्र्यादिसवनेषु गायत्र्यादिछन्दस्त्रयपदप्रतिष्ठापनम्। एतत् सर्वमैतरेयब्राह्मणे देवविशः कल्पयित्वा इति खण्डे विस्पष्टमाम्नातम् (१।६)। तत्तादृशं छन्दसि छन्दःस्थापनं य इत्तद्विदुः य एव जानन्ति त एवामृतत्वमानशुः प्राप्नुवन्त्यनुष्ठानद्वारा । एवमजानन्तेऽनुष्ठानेनापि फलं न प्राप्नुवन्तीत्यर्थः। तस्य साकल्याभावादिति भावः।

म०—गायत्रेण प्रति मिमीते अर्क-

मर्केण साम त्रैष्टुभेन वाकम्।

वाकेन वाकं द्विपदा चतुष्पदा-

क्षरेण मिमते सप्त वाणीः ॥ २४ ॥

प०—गायत्रेण। प्रति। मिमीते। अर्कम्।

अर्केण। साम। त्रैस्तुभेन। वाकम्।

वाकेन। वाकम्। द्विऽपदा। चतुःऽपदा।

अक्षरेण। मिमते। सप्त। वाणीः ॥२४॥

भा०—गायत्रेण गयत्रच्छन्दसार्कमर्चनसाधनं मन्त्रं प्रति मिमीते। प्रत्येकं परिछिनत्ति। अर्को मन्त्रो भवति यदेनेनार्चन्तीति निरुक्तम्

( नि० ५ । ४ ) । प्रतिमन्त्रं गायत्रेण छन्दसोपनिबद्धं करोति । उपलक्षणमेतदन्येषां छन्दसाम् । यद्वा । इतरेषां छन्दसामस्यैव चतुश्चतुरक्षराधिक्येन तत्तच्छन्दोभिः प्रतिमिमीत इत्यर्थः । यद्वा । प्रतिशब्दः समित्येतस्मिन्नर्थे । छन्दोभिर्मन्त्रान् सम्मितं करोतीत्यर्थः । अर्केण साम । उक्तलक्षणेन मन्त्रेण साम गायत्ररथन्तरसंज्ञकं साम प्रति मिमीते । नन्वेकं साम तृचे क्रियत इति तिसृष्वेकं साम विहितम्, अतोऽर्कैः सामेति वक्तव्यं कथमुच्यतेऽर्केणेति न । वस्तुत एकं सामैकस्यामृच्यारूढम् पश्चादन्योन्यां तदुत्तरयोर्गायतीत्यतिदेशतः प्राप्तं तिसृषु गानम् । अत एकवचनमविरुद्धम् । त्रैष्टुभेन वाकम् । अत्र त्रिष्टुबुपादानमितरछन्दःप्रदर्शनार्थम् । अथवा अनादेशे सर्वत्र त्रिष्टुभो ग्रहणात् प्राचुर्याभिप्रयेणेदमुक्तम् । त्रैष्टुभेन द्विवारत्रिवारावृत्तेन द्वृचतृचरूपं वाकं वक्तव्यमेकैकं छन्दः प्रति मिमीते । अथवा वाकं सूक्तमेतावद्भिस्त्रिष्टुब्भिरुपनिबद्धमिदं सूक्तमिति । तादृशेन वाकेन वाकं वर्गमनुवाकं वा मिमीते । कीदृशेन वाकेनेति स विशेष्यते । द्विपदा चतुष्पदा । पादद्वयबद्धविराडादिछन्दोनिबद्धमन्त्ररूपेण चतुष्पदा पादचतुष्टयोपेतेनानुष्टुबादिमन्त्ररूपेणेति । इयतीभिर्द्विपदाभिर्वर्गः । इयतीभिश्चतुष्पदाभिरुपेतो वर्गः । इयद्भिर्द्विपदरूपैर्वाकैः इयच्चतुष्पदरूपैर्वाकैश्च परिमितोऽनुवाक इति । सूक्तपक्ष एतावद्भिः सूक्तैरयमनुवाक इति । किञ्चाक्षरेणाक्षरेणैव सप्त वाणीर्वागधिष्ठितानि सप्त छन्दांसि मिमते, निर्माणं कुर्वन्ति । अष्टाक्षरा गायत्री एकादशाक्षरा त्रिष्टुप् द्वादशाक्षरा जगतीति । अक्षरैः पादाः परिमीयन्ते । परिमितैः पादैश्छन्दांसि । ततः पादानां छन्दसामक्षरं मूलमिति । तथा ऋग्वर्गसूक्तानुवाकादीनां चाक्षरं मूलमित्यक्षरप्रशंसा ।

म०—जग॑ता॒ सिन्धुं॑ दि॒व्य॑स्तभाय-

द्रथन्त॒रे सूर्यं॒ पर्य॑पश्यत् ।

गायत्रस्य समिधस्तिस्र आहु-

स्ततो मह्ना प्र रिरिचे महित्वा ॥२५॥

प०—जगता । सिन्धुम् । दिवि । अस्तभायत् ।

रथंऽतरे । सूर्यम् । परि । अपश्यत् ।

गायत्रस्य । सम्ऽइधः । तिस्रः । आहुः ।

ततः । मह्ना । प्र । रिरिचे । महिऽत्वा ॥ २५ ॥

भा०—जगतीछन्दस्कायामृच्युत्पन्नं साम जगत् । तेन ब्रह्मा सृष्टिकाले सिन्धु स्यन्दनशीलमुदकस्य स्यन्दकं वादित्यं दिवि द्युलोकेऽस्तभायत्, स्तम्भितवान् । जागतो वा एष य एष तपतीति श्रुतिः । रथन्तर एतन्नामके साम्नि स्तम्भितं सूर्यं पर्यपश्यत्, परिदृष्टवान् प्रजापतिः । तदाधारभूतायामृचि ( ऋ० ७ । ३२ । २२ ) स्वर्दृशमिति सूर्यप्रतिपादकशब्ददर्शनात् । असौ वाव स्वर्दृगिति हि श्रुतिः । अत एव तत्र सूर्यदर्शनं विधीयते । रथन्तरे प्रस्तूयमाने सम्मीलयेत् स्वर्दृशं प्रति वीक्षेतेति सामब्राह्मणेन ( तां० ७ । ७ । १५ ) । गायत्रस्य गायत्र्यामुत्पन्नस्य साम्नः समिधः समिन्धनास्तिस्रो विभक्तीराहुः । पादत्रयमाहुरित्यर्थः । अथवा तिस्र ऋच आहुः । ततो हेतोर्मह्ना बलेन महित्वा महत्वेन प्र रिरिचे, प्ररिच्यते । अन्यानि सामानि पृथक्पृथङ्निर्मितवान् । यद्वा । गायत्रशब्दश्छन्दोवाची । तस्य तिस्रो मूर्तिराहुः क्रमेणाष्टाक्षरैकादशाक्षरद्वादशाक्षरैर्गायत्रीत्रिष्टुब्जगत्यात्मिकाः । यस्मादेवं ततस्तस्माद्गायत्री छन्दसां कनिष्ठा सती मह्ना बलेन महत्त्वेन प्र रिरिचे । सर्वाणि छन्दांस्यतिक्रामति । येनैव बलेन सोममाहृतवती तादृशेनैवं भवति ।

प्रावर्ग्ये घर्मधुगाह्वानकाल उप ह्वय इत्यादिके द्वे ऋचौ । उप ह्वये सुदुघां धेनुमेतामिति द्वे ( आ० ४ । ७ ) । इति सूत्रितत्वात् ।

म०—उप ह्वये सुदुघां धेनुमेतां

सुहस्तो गोधुगुत दोहदेनाम् ।

श्रेष्ठं सवं सविता साविषन्नो-

ऽभीद्धो घर्मस्तदु षु प्र वोचम् ॥२६॥

प०—उप । ह्वये । सुऽदुघाम् । धेनुम् । एताम् ।

सुऽहस्तः । गोऽधुक् । उत । दोहत् । एनाम् ।

श्रेष्ठम् । सवम् । सविता । साविषत् । नः ।

अभिऽइद्धः । घर्मः । तत् । ऊम् इति । सु । प्र । वोचम् ॥२६॥

भा०—अहं होतोप ह्वये । उपेत्याह्वयामि । किम ? एतां धेनुमागच्छन्तीं क्षीरेण प्रीणयित्रीं गां प्रवर्ग्यार्थम् । पुनः कीदृशीम् ? सुदुघां सुष्ठु दोग्ध्रीम् । उतापि चैनामुक्तलक्षणां गां सुहस्तः शोभनदोहनकुशलो गोधुग्गोदोग्धाध्वर्युर्दोहत्, दोग्धि । यस्मादेवं तस्मादुप ह्वय इत्यर्थः । तदर्थं सविता सर्वस्यानुज्ञाता परमेश्वरो नोऽस्मदीयं श्रेष्ठं प्रशस्य सवं सोमयागं क्षीरं वा साविषत्, अनुजानातु । कथमेवम् । तच्छन्दश्रुतेर्यच्छब्दाध्याहारः । यद्यस्माद्धर्मः प्रवर्ग्यः । यद्घ्राँ इत्यपतसद्धर्मस्य घर्मत्वमिति तैत्तिरीयकम् ( तै० आ० ५ । १ । ६ ) । तस्तादृशोऽभीद्धोऽभिदीप्तः । तदु शब्द एवकारार्थः । तस्मादेव कारणात् सु प्र वोचम्, सुष्ठु ब्रवीमि, उप ह्वय इति । यद्वा । एतां पुरतो दृश्यमानां धेनुं वृष्ट्या प्रीणयित्रीं मेघलक्षणां धेनुमुप ह्वये, आह्वयामि वर्षदोहाय । किञ्चैनां धेनुं सुहस्तः शोभनदोहनकुशलहस्तोपेतो गोधुग्गोदोग्धा दित्यो वा वायुर्वा दोहत्, दोग्धि । तदधीनत्वाद्वर्षणस्य । किञ्च

तदर्थं सविता प्रेरकः परमेश्वरोऽस्मदर्थमस्मदुपभोगादृष्टमपेक्ष्य साविषत्, अनुजानातु । प्रतिबन्धं मा करोत्वित्यर्थः । किमितीदमुच्यत इति उच्यते । घर्मो ग्रीष्मोऽवर्षणजनितः सस्यशोषोऽभीद्धः प्रवृद्धः। तदु षु प्र वोचम् । तस्मादेव कारणाद्ब्रवीमि ।

ब्रवीतेर्लुङि वच्यादेशोऽस्यतिवक्तीत्यादिना च्लेरङ् । छान्दसोऽडभावः ।

म०—हिङ्कृण्वती वसुपत्नी वसूनां
वत्समिच्छन्ती मनसाभ्यागात् ।
दुहामश्विभ्यां पयो अघ्न्येयं
सा वर्धतां महते सौभगाय ॥ २७ ॥

प०—हिङ्ऽकृण्वती । वसुऽपत्नी । वसूनाम् ।
वत्सम् । इच्छन्ती । मनसा । अभि । आ । अगात् ।
दुहाम् । अश्विभ्याम् । पयः । अघ्न्या । इयम् ।
सा । वर्धताम् । महते । सौभगाय ॥ २७ ॥

भा०—यथाहूता गौर्हिङ्कृण्वती वत्सं प्रति हिंकारं कुर्वती वसूनां वसुपत्नी क्षीरदध्याज्यादिबहुधनानां सर्वदा पालयित्री । वृत्त्यवृत्तिभ्यां वसुनः पालयितृत्वम् । तस्यैवाधिक्यं च प्रतिपाद्यते । पुनः कीदृशी ? मनसा वत्समिच्छन्ती । ईदृशी साभ्यागात्, अभ्यागमत् । इयमागताघ्न्या । गोनामैतत् । अहननीया गौरश्विभ्यां ताभ्यामर्थाय पयः क्षीरं दुहां, दुग्धाम् । सा तादृशी महते सौभगाय प्रवृद्धाय सौभाग्याय वर्धताम्, प्रवृद्धा भवतु । यद्वा । अस्मै सौभगाय चीरं वर्धताम् ।

अत्रापि वृष्टिपरत्वेन यथायोगं योग्यम्। हिंकृण्वती वर्षणाय शब्दयन्ती वसूनां गोसस्यादिधनानां बहूनां वसुपत्नी तेषामेव पालयित्री वत्सं लोकं वत्सवत् पोषणीयं मनसेच्छन्ती प्रीणयितुमभ्यागात्, अभिगच्छति मेघरूपा। सा चाघ्न्याहन्तव्या। प्रस्तुत्येत्यर्थः। पय उदकमश्विभ्यां व्याप्ताभ्यां स्थावरजङ्गमाभ्यामर्थाय। यद्वा। अश्विनौ वाय्वादित्यौ। ताभ्यां सकाशात्। दुहां, दुग्धाम्। तौ हि वृष्टेर्मोचयितारौ। शिष्टमविशिष्टम्।

प्रवर्ग्येऽभिष्टवे दोहनसमये वत्से मातुः सकाशादपनीयमाने गौरमीमेदित्येषा। सूत्रितं च। गौरमीमेदनु वत्सं मिषन्तं नमसेदुप सीदत (आ ४। ७) इति।

म०—गौरमीमेदनु वत्सं मिषन्तं
मूर्धानं हिङ्ङकृणोन्मातवा उ।
सृक्काणं घर्ममभि वावशाना
मिमाति मायुं पयते पयोभिः॥ २८॥

प०—गौः। अमीमेत्। अनु। वत्सम्। मिषन्तम्।
मूर्धानम्। हिङ्। अकृणोत्। मातवै। ऊम् इति।
सृक्काणम्। घर्मम्। अभि। वावशाना।
मिमाति। मायुम्। पयते। पयःऽभिः॥ २८॥

भा०—गौर्धेनुर्मिषन्तं निमीलिताक्षं वत्समनुप्राप्यामीमेत्, शब्दं करोदि। मीमयतिः शब्दकर्मा। यद्वा। उक्तं वत्समन्वात्मानं प्रक्षिपति। किञ्च तस्य वत्सस्य मूर्धानं मातवै मातुं निर्मातुं लेहनेन शोध-

यितुम् । उशब्दोऽवधारणे । हिङ्ङ्कृणोत्, हिङ्कारमकरोत्, करोति । किञ्च सृक्काणं वत्सस्य शब्दवदनप्रान्तं फेनस्य स्रष्टारं घर्मं क्षीरस्य क्षरणशीलं वत्समभ्यभिलक्ष्य वावशाना भृशं कामयमाना मायुं शब्दं मिमाति, निर्माति। करोति । तादृशी सती पयोभिः प्रभूतैः क्षीरैः पयते, प्यायते, आप्यायनं करोति वत्सम् ।

अत्रापि मेघपरतया योजनीयम् । एवमाहूता मेघरूपा गौर्धेनुर्मिषन्तं वृष्टिरूपक्षीराभावेन निमीलिताक्षं लोकाख्यं पुत्रमन्वनुसृत्याभीमेत् । गर्जनशब्दं वर्षणचिह्नरूपं करोति । मूर्धस्थानीयां भूमिं मातवा उ निर्मातुमेव सस्यादियुक्तां कर्तुं हिङ्ङ्कृणोत्, हिंकाररूपं शब्दमकरोत् । प्रतिपादनभेदादपुनरुक्तिः । किञ्च सृक्काणं फलस्य स्रष्टारं घर्मं दीप्तं पुत्रमभि वावशानाभिमुख्येन कामयमाना पयोभिरुदकैः पयते, प्यायते, आप्यायनं करोति ।

म०—अयं स शिङ्क्ते येन गौरभीवृता
मिमाति मायुं ध्वसनावधि श्रिता ।
सा चित्तिभिर्नि हि चकार मर्त्यं
विद्युद्भवन्ती प्रति वव्रिमौहत ॥ २९ ॥

प०—अयम् । सः । शिङ्क्ते । येन । गौः । अभिऽवृता ।
मिमाति । मायुम् । ध्वसनौ । अधि । श्रिता ।
सा । चित्तिऽभिः । नि । हि । चकार । मर्त्यम् ।
विऽद्युत् । भवन्ती । प्रति । वव्रिम् । औहत ॥ २९ ॥

भा०—सोऽयं वत्सः शिङ्क्ते, अव्यक्तध्वनिं करोति। येन वत्सेन गौर्माताभीवृता आगत्याभितो वेष्टिता भवति। किञ्च सा गौर्मायुं शब्दं मिमाति, निर्मिमाति। कुत्र स्थिता। ध्वसनावधि श्रिता ध्वसनस्थाने गवां निवासाश्रयेऽधिष्ठिता। सा तादृशी चित्तिभिर्ज्ञानैस्तत्पूर्वकैः कर्मभिर्वा मर्त्यं नि चकार हि, नीचैः करोति। ज्ञानविशिष्टा मनुष्या यथा बालकस्यादनस्तनपानादिस्नेहं कुर्वन्ति ततोऽप्यतिशयमियं करोतीत्यर्थः। किञ्च विद्युद्भवन्ती बहुक्षीरतया विद्योतमाना वव्रिं स्वकीयं रूपम्। वव्रिरिति रूपनाम। रूपं प्रत्यौहत, प्रकाशयति। यद्वा। वत्सस्नेहातिशयस्वरूपं विद्युद्भवन्ती विद्युदिव शीघ्रदर्शनौहत। अयमेकोऽर्थः।

अर्थान्तरं च। शाकपूणिर्नाम निरुक्ताचार्यः सकलमन्त्रदेवता जानामीत्यभिमानितवान्। दुर्ज्ञेयस्य तत्त्वस्य स्वरूपमसौ जानाति किलैनं व्यामोहयामीति मनसि कृत्वा सन्दिग्धोभयलिङ्गा देवता प्रादुरासीदथ तस्य पुरतः। स च तां न बुबुधे। बुभुत्सया च तां स्वरूपं प्रदर्शयेति पप्रच्छ। सा चायं स शिङ्क्त इत्येषा मद्देवता तत्र प्रतीयमानं मत्स्वरूपमित्युपदिदेश (नि० २।८)। कथमत्रोभयलिङ्गत्वं वस्तुत उभयलिङ्गत्वे कथं दैवतैक्यमिति उच्यते। अत्रोभयलिङ्गत्वमुभयथा सम्भवति स्त्रीपुँल्लिङ्गद्वयेन मध्यमोत्तमलिङ्गद्वयेन च। तत्कथम्। अयं स येनेति पुँल्लिङ्गवाचिना शब्दत्रयेण मेघः प्रतीपते। अधिश्रिता सेत्यादिना स्त्रीलिङ्गवाचकेन माध्यमिका वाक्। अत उभयलिंगत्वम्। तथा विद्युद्भवन्तीत्यन्तं मध्यमलिङ्गं तत्र मेघस्तनितयोर्माध्यमिकयोः प्रतीतेः। तथा सति वव्रिमौहतेत्यत्र वर्षेण पृथिवीं प्रच्छाद्य तस्या रसं प्रत्यादत्त इत्ययमर्थो विवक्षितः। स चादित्यव्यापार इत्युत्तमलिङ्गत्वम्। तर्हि वस्तुत उभयलिङ्गत्वप्रतीतेरुभे अपि देवते यल्लिङ्गं सा देवता (अनु०ऋ० १।१२९) इति न्यायात् अतः कथमेकदेवतासिद्धिरिति अयं स येनेत्येतेषां व्यत्ययाश्रयणेन सर्वदेवतानामधिष्ठात्मिकाया एकत्वाश्रयणेन वा सर्वफलदात्रात्मन एकत्वाश्रयणेन वा देवतैक्योपपत्तेः। अनेनमध्यमोत्तमभेदेनोभयलिङ्गत्वपक्षेऽपि देवतैक्यमुक्तं भवति। अत एकव वा महानात्मा देवतेत्युक्तत्वाद्वस्तुतो देवतैक्यं अधिष्ठात्रधिष्ठानभेदेन

भेदश्च न विरुध्यते अयं स शिङ्क्ते। इयं सा माध्यमिकाया वाचोऽधिष्ठात्री देवता शिङ्क्ते, अव्यक्तध्वनिं करोति। येन गौरभीवृता। गौरिति वाङ्नाम। माध्यमिका वाग्ययाभिवृता अभितो व्याप्ता, अधिष्ठितेत्यर्थः। सेयं शिङ्क्ते। अथवा अयं स शिङ्क्त इति नैव माध्यमिका वाग्निर्दिश्यते अपि तु मेघः। तस्यां वाचि शिञ्जानायां स एव शिङ्क्त इत्युपचर्यते मञ्चाः क्रोशन्तीतिवत्। अयं स मेघः शब्दं करोति येन माध्यमिका वागभिव्याप्ता। शब्दने प्रकार एवोच्यते। मिमाति मायुम्, स्तनितलक्षणं शब्दं करोति। अथवायम्। लुप्तोपमा। मिनोति स्वतेजः सर्वत्र प्रक्षिपतीति मायुरादित्यः। तमिवातिदीप्तं करोतीत्यर्थः। अथवा सामर्थ्यादात्मानमादित्यसदृशं निर्मिमीते। कुत्र स्थिता? ध्वसनावधिश्रिता। ध्वंसने मेघेऽधिश्रिता। सेदृशी चित्तिभिः। कर्मनामैतत्। स्वकर्मभिर्वृष्टिरूपैर्मर्त्यं मरणधर्माणं स्थावरजङ्गमरूपं कृत्स्नं जगन्नि हि चकार, नीचैः करोति, मनुष्यान् प्रणतान् करोति, ओषध्यादिकं फलेनावनतं करोति। अथवा चित्तिभिर्द्योतनलक्षणैः कर्मभिः। विद्युति विद्योतमापद्यमाना प्रति वव्रिमौहत। वव्रिरिति रूपनाम। ऊहतिरत्र सामर्थ्यादुपसंहारवाची। प्रत्युपसंहरति। उदकलक्षणं रूपं पुनरादत्ते। रश्मिद्वारा वृष्टमुदकं पुनर्घर्मकाल आदत्ते। एकस्यैव ज्योतिषस्त्रेधाकरणाद्विद्युतः सूर्यरश्मिभाव उपपद्यते तमू अकृण्वन्त्रेधा भुवे कम् ( ऋ० १०। ८८। १० ) इति वक्ष्यमाणत्वात्। स्तनितस्य विद्युद्भावो मेघविद्युत्स्तनितानामभेदाभिप्रायेण।

इदं शरीरं जीवावस्थायाम्। अनेन देहस्यासारता जीवस्य नित्यत्वं च प्रतिपाद्यते।

म०—अनच्छये तुरगातु जीवमेजद्-
ध्रुवं मध्य आ पस्त्यानाम्।
जीवो मृतस्य चरति स्वधाभि-
रमर्त्यो मर्त्येना सयोनिः ॥३०॥

प०—अनत् । शये । तुरऽगातु । जीवम् । एजत् ।

ध्रुवम् । मध्ये । आ । पस्त्यानाम् ।

जीवः । मृतस्य । चरति । स्वधाभिः ।

अमर्त्यः । मर्त्येन । सऽयोनिः ॥३०॥

अनत् प्राणनं कुर्वज्जीवं जीवनवत्तुरगातु स्वव्यापाराय तूर्णगमनं सदेजत्तच्छये, शेते, वर्तते । पश्चात्प्राणापगमनानन्तरमुक्तविलक्षणं सद्ध्रुवमविचलितं सत् पस्त्यानां गृहाणां मध्य आशेते च। स्थाणुवत्ति-ष्ठति । आकारः पूरणो वा । जीवस्य वैलक्षण्यमाह । मृतस्य शरीरस्य सम्बन्धी जीवो मर्त्येन मरणधर्मकेण शरीरेण सयोनिः पूर्वं समानो-त्पत्तिस्थानः । यद्यपि जीवस्य न जन्मास्ति तथापि वपुषस्तत्सद्भा-वात्तत्सम्बन्धेनोपचर्यते । तदेवाह । अमर्त्योऽमरणस्वभावः । जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते ( छा० उ० ६ । ११ । ३ ) इति श्रुतेः । उक्तस्वभावो जीवः स्वधाभिश्चरति । पुत्रकृतैः स्वधाकारपूर्वक-दत्तैरन्नैश्चरति, वर्तत इत्यर्थः ।

प्रवर्ग्येऽभिष्टवेऽपश्यं गोपामित्येका विनियुक्ता । सूत्रितं च । अपश्यं गोपामनिपद्यमानं स्रक्के द्रप्सस्य ( आ० ४ । ६ ) इति ।

म०—अपश्यं गोपामनिपद्यमान-

मा च परा च पथिभिश्चरन्तम् ।

स सध्रीचीः स विषूचीर्वसान

आ वरीवर्ति भुवनेष्वन्तः ॥३१॥

प०—अपश्यम् । गोपाम् । अनिऽपद्यमानम् ।

आ । च । परा । च । पथिऽभिः । चरन्तम् ।

सः । सध्रीचीः । सः । विषूचीः । वसानः ।

आ । वरीवर्ति । भुवनेषु । अन्तरिति ॥ ३१ ॥

भा०—अहं गोपां सर्वस्य लोकस्य वृष्टिप्रकाशादिना गोपायितारमनिपद्यमानं कदाचिदप्यविषण्णं तथा पथिभिर्विचित्रैर्मार्गैरन्तरिक्षरूपैरा चरन्तं च परा चरन्तं च उदयप्रभृत्या मध्याह्नमागच्छन्तं मध्याह्नप्रभृत्या सायं पराङ्मुखं गच्छन्तम् एवं महानुभावमादित्यमपश्यम्, याथात्म्येन पश्येयम् । किञ्च स आदित्यः सध्रीचीः सहाञ्चन्तीर्विषूचीर्विष्वगञ्चन्ती रात्रावपि चन्द्रभौमादित्यानां प्रकाशयित्रीस्त्विषो वसान आच्छादयन् भुवनेषु भुवनैकदेशेषु लङ्कादिप्रदेशेष्वन्तर्मध्य आ वरीवर्ति, उदयास्तमयं कुर्वन् पुनःपुनरावर्तते । तमपश्यमित्यर्थः । एष वै गोपा एष हीदं सर्वं गोपायतीत्याद्यस्मद्ब्राह्मणम् । अपश्यं गोपामित्याह असौ वा आदित्यो गोपा स हीमाः प्रजा गोपायतीत्यादि तैत्तिरीयकं च द्रष्टव्यम् ( तै० आ० ५ । ६ । ४ )

म०—य ईं चकार न सो अस्य वेद

य ईं ददर्श हिरुगिन्नु तस्मात् ।

स मातुर्योना परिवीतो अन्त-

र्बहुप्रजा निर्ऋतिमा विवेश ॥३२॥

प०—यः । ईम् । चकार । न । सः । अस्य । वेद ।

यः । ईम् । ददर्श । हिरुक् । इत् । नु । तस्मात् ।

सः । मातुः । योना । परिऽवीतः । अन्तः ।

बहुऽप्रजाः । निःऽऋतिम् । आ । विवेश ॥ ३२ ॥

भा०—अत्र गर्भवासक्लेशपूर्वकजननप्रतिपादनेन तत्परिहारायात्मा ज्ञातव्य इत्यर्थात् प्रतिपाद्यते । यः पुमान् पुत्रार्थीमेनं गर्भं चकार करोति विक्षिपति वा तत्कारणभूतस्य विक्षेपद्वारेण न स पुमानस्य तत्त्वं वेद ।

कर्मणि षष्ठी वा ।

एनं गर्भं न जानाति । कथम्भूतः कथं वा केन प्रयोजनेनेति सर्वात्मना न जानातीत्यर्थः । यश्च मातुरुदरस्थं ददर्श उदरवृद्ध्यन्यथानुत्पत्त्यानुमानेन वा दर्शयति तस्माद्द्रष्टुः सकाशात्स हिरुगिन्नु, हिरुगित्यन्तर्हितनाम । इच्छब्द एवकारार्थः । नु निश्चये । अत्यन्तमन्तर्हित एव खलु । यद्वा । यः संसारावस्थायामीमेनं कृषिवाणिज्यवेदाध्ययनादिकं चकार सोऽस्यैतन्न वेद लोकान्तरे जन्मान्तरे वा । तथा य ईमेनं ददर्श गिरिनदीसमुद्रबन्ध्वादिकं ददर्श जीवनसमये तस्यादृष्टाद्धिरुगिन्नु पृथगेव । यत्रानुभूतं सर्वं न जन्मान्तरे लोकान्तरे वानुभवतीत्यर्थः । स तादृशो मातुर्जनन्या योना योनावन्तः परिवीत उल्बजरायुभ्यां परितो वेष्टितः सन् बहुप्रजा बहुजन्मभाक् । अथवा । उत्पन्नः सन् स्वयमप्यपत्योत्पादनेन बहुप्रजाः । एवं गर्भदुःखमनुभवन्निर्ऋत्यभिधानं प्रदुःखमनुभवति यावत् स्वरूपभूतात्मज्ञानम् । अतस्तत्परिहारायात्मा ज्ञातव्य इत्युक्तं भवति । एवमात्मविदामभिप्रेतोऽर्थः ।

नैरुक्तानां तु मते य ईं चकार मध्यस्थानो वायुर्मेघो वैतद्वृष्ट्युदकं करोति सोऽस्य । तत्त्वमिति शेषः । अथवा एतत् कर्म । न

जानाति । तयोरचेतनत्वादिति भावः । यस्त्वीमेतद्ददर्श पश्यति तस्मादपि हिरुगन्तर्हितः । प्राणिकर्मवशेन काले वर्षिता परमेश्वर आदित्यात्मनि गूढ इत्यर्थः । य ईं हिरुगन्तर्हितमीमेतद्ददर्श पश्यति स वृष्टिलक्षणः पुत्रो मातुर्निर्मातुरन्तरिक्षस्य योनौ योनिवदुत्पत्त्याधारभूतेऽन्तरिक्षे । उभयोरप्यन्तरिक्षनामत्वात् सामान्यविशेषभावो द्रष्टव्यः । अन्तरिक्षैकदेशे योन्यामन्तर्मध्ये बहुप्रजा बहुप्रजातान्नो बहुप्राण्युपकारी । अथवा । जनिरत्रान्तर्भावितण्यर्थः । बहूनां धाराणां सस्यनिष्पादनद्वारेण प्राणिनां वा प्रजनयिता सन् । निर्ऋतिं निरमणसाधनां भूमिमा विवेश, प्रविशति, प्राप्नोतीत्यर्थः ।

**म०—द्यौर्मे पिता जनिता नाभिरत्र-**
**बन्धुर्मे माता पृथिवी महीयम् ।**
**उत्तानयोश्चम्वो३ योनिरन्त-**
**रत्रा पिता दुहितुर्गर्भमाधात् ॥ ३३ ॥**

**प०—**द्यौः । मे । पिता । जनिता । नाभिः । अत्र ।
बन्धुः । मे । माता । पृथिवी । मही । इयम् ।
उत्तानयोः । चम्वोः । योनिः । अन्तः ।
अत्र । पिता । दुहितुः । गर्भम् । आ । अधात् ॥ ३३ ॥

**भा०—**दीर्घतमा ब्रवीति । मे मम द्यौर्द्युलोकः पिता पालकः । न केवलं पालकत्वमात्रम् अपि तु जनिता जनयितोत्पादयिता । तत्रोपपत्तिमाह । नाभिरत्र नाभिभूतो भौमो रसोऽत्र तिष्ठतीति शेषः ।

ततश्चान्नं जायते अन्नाद्रेतः रेतसो मनुष्य इत्येवं पारम्पर्येण जननसम्बन्धिनो हेतो रसस्यात्र सद्भावात् । अनेनैवाभिप्रायेण जनितेत्युच्यते । अत एव बन्धुर्बन्धिका तथेयं महो महती पृथिवी मे माता मातृस्थानीया स्वोद्भूतौषध्यादिनिर्मात्रीत्यर्थः । किञ्चोत्तानयोरूर्ध्वतनयोश्चम्वोः सर्वस्यात्रयोर्भोगसाधनयोर्द्यावापृथिव्योरन्तर्मध्ये योनिः सर्वभूतनिर्माणाश्रयमन्तरिक्षं वर्तत इति शेषः । अत्रास्मिन्नन्तरिक्षे पिता द्युलोकः । अधिष्ठात्रधिष्ठानयोरभेदेनादित्यो द्यौरुच्यते । स्वरश्मिभिः । अथवा इन्द्रः पर्जन्यो वा । दुहितुर्दूरे निहिताया भूम्या गर्भं सर्वोत्पादनसमर्थं वृष्ट्युदकलक्षणमाधात्, सर्वतः करोति ।

आश्वमेधिके मध्यमेऽहनि ब्रह्मोद्ये होत्रादयः पृच्छामि त्वेत्यनया यजमानं पृच्छेयुः । तथा च सूत्रितम् । एकैकशो यजमानं पृच्छन्ति पृच्छामि त्वा परमन्तं पृथिव्याः ( आ० १० । ९ ) इति ।

म०—पृच्छामि त्वा परमन्तं पृथिव्याः

पृच्छामि यत्र भुवनस्य नाभिः ।

पृच्छामि त्वा वृष्णो अश्वस्य रेतः

पृच्छामि वाचः परमं व्योम ॥३४॥

प०—पृच्छामि । त्वा । परम् । अन्तम् । पृथिव्याः ।

पृच्छामि । यत्र । भुवनस्य । नाभिः ।

पृच्छामि । त्वा । वृष्णः । अश्वस्य । रेतः ।

पृच्छामि । वाचः । परमम् । विऽओम ॥३४॥

भा०—हे यजमान त्वा त्वां पृच्छामि, प्रश्नं करोमि । किम् ?

पृथिव्याः परमन्तमुत्कृष्टां काष्ठाम्। यत्र सर्वा पृथिवी समाप्यते तत् पृच्छामि। तथा त्वामन्यत् पृच्छामि। किं तदित्युच्यते। यत्र भुवनस्य भूतजातस्य नाभिः सन्नाहो बन्धनम्। यत्र सर्वं सन्नद्धं भवति तमित्यर्थः। किञ्च त्वा त्वां वृष्णो वर्षकस्याश्वस्य व्याप्तस्यादित्यस्य। असौ वा आदित्यो वृषाश्व इति तैत्तिरीयकम्। तस्य रेतो रेतोवत्कारणं तत्किमिति पृच्छामि। तथा वाचः सर्वस्य वाग्जातस्य परमं निरतिशयं व्योम स्थानं सर्वस्य वचसः कारणम्। एतत् प्रश्नचतुष्टयं पृच्छामि।

अथैवं पृष्टो यजमान इयं वेदिरित्यनया प्रतिब्रूयात्। इयं वेदिः परो अन्तः पृथिव्या इति प्रत्याह ( आ० १०। ९ ) इति सूत्रितत्वात्।

म०—इयं वेदिः परो अन्तः पृथिव्या

अयं यज्ञो भुवनस्य नाभिः।

अयं सोमो वृष्णो अश्वस्य रेतो

ब्रह्मायं वाचः परमं व्योम ॥ ३५ ॥

प०—इयम्। वेदिः। परः। अन्तः। पृथिव्याः।

अयम्। यज्ञः। भुवनस्य। नाभिः।

अयम्। सोमः। वृष्णः। अश्वस्य। रेतः।

ब्रह्मा। अयम्। वाचः। परमम्। विऽओम ॥ ३५ ॥

भा०—पृथिव्याः प्रथनवत्या भूम्याः परो अन्तः परमन्तं पर्यवसानमियं वेदिः। न हि वेद्यतिरिक्ता भूमिरस्ति। एतावति वै पृथिवी यावती वेदिरिति श्रुतेः। तथायं यज्ञो भुवनस्य भूतजातस्य नाभिः

सन्नहनम् । तत्रैव वृष्ट्यादिसर्वफलोत्पत्तेः सर्वप्राणिनां बन्धकत्वात् । अथ वृष्णो वर्षकस्यादित्यस्य रेतोऽयं सोमो रसात्मकः । अग्नौ हुतः सोमरस आदित्यं प्राप्य वृष्ट्यादिफलं जनयति । अयं ब्रह्मा प्रजापतिरेव वाचो मन्त्रादिरूपायाः परमं व्योम, उत्कृष्टं रक्षकं स्थानम् । तत्रैवोत्पत्तेस्तत्रैव पर्यवसानाच्च ।

म०—सप्तार्धगर्भा भुवनस्य रेतो

विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ।

ते धीतिभिर्मनसा ते विपश्चितः

परिभुवः परि भवन्ति विश्वतः ॥ ३६ ॥

प०—सप्त । अर्धऽगर्भाः । भुवनस्य । रेतः ।

विष्णोः । तिष्ठन्ति । प्रऽदिशा । विऽधर्मणि ।

ते । धीतिऽभिः । मनसा । ते । विपःऽचितः ।

परिऽभुवः । परि । भवन्ति । विश्वतः ॥ ३६ ॥

भा०—सप्त सर्पणस्वभावाः सप्तसङ्ख्या वा रश्मयोऽर्धगर्भाः संवत्सरस्यार्धे गर्भं गर्भस्थानीयमुदकं धारयमाणाः । यद्वा । ब्रह्माण्डस्यार्धे मध्येऽन्तरिक्षे गर्भवद्वर्तमानाः । भुवनस्य लोकस्य रेतः सारं वृष्टिप्रदत्वेन रेतोभूताः तादृशा रश्मयो विष्णोर्व्यापकस्यादित्यस्य विधर्मणि जगद्धारणव्यापारे प्रदिशा प्रदेशेन तिष्ठन्ति वर्तन्ते । किञ्च ते धीतिभिः प्रज्ञाभिर्मनसा जगदुपकारः कर्तव्य इति बुद्ध्या च विश्वतः सर्वतः ।

द्वितीयार्थे तसिः ।

विश्वं परि भवन्ति, परितो भावयन्ति, कृत्स्नं जगद्व्याप्नुवन्तीत्यर्थः । यस्मादेवं तस्मात्ते त एव विपश्चितो बुद्धियुक्ताः परिभुवः सर्वत्र व्याप्ताश्च ।

यद्वा । सप्तार्धगर्भाः । सप्त महदहङ्कारौ पञ्च तन्मात्राणीति मिलित्वा सप्तसङ्ख्यानि तत्त्वानि । अर्धगर्भा अविकृतिरूपाः । विकाराश्रयाया मूलप्रकृतेः प्रकृतिवृक्तेरुदासीनस्यात्मनश्चोत्पन्नत्वादर्धांशेन प्रपञ्चाकारेण परिणामादर्धगर्भाः । पुरुषांशस्याविक्रियत्वादित्यभिप्रायः । अत एव तेषां प्रकृतिविकृतित्वम् । यस्मादेवं तस्माद्भुवनस्य रेतः कारणम् । कारणभूतानि तान्येव विष्णोर्व्याप्तस्य पुरुषस्य विधर्मणि प्रदिशा प्रदेशेन तिष्ठन्ति । इतरत् समानम् ।

म०—न वि जा॑नामि॒ यदि॑वे॒दमस्मि॑

नि॒ण्यः सन्न॑द्धो॒ मन॑सा चरामि ।

य॒दा माग॑न् प्रथम॒जा ऋ॒तस्या-

दिद्वा॒चो अ॑श्नुवे भा॒ग॒मस्याः ॥३७॥

प०—न । वि । जा॒ना॒मि॒ । यत्ऽइ॑व । इ॒दम् । अस्मि॑ ।

नि॒ण्यः । संऽन॑द्धः । मन॑सा । च॒रा॒मि॒ ।

य॒दा । मा॒ । आ । अग॑न् । प्र॒थ॒म॒ऽजाः । ऋ॒तस्य॑ ।

आत् । इत् । वा॒चः । अ॒श्नु॒वे । भा॒ग॒म् । अ॒स्याः ॥३७॥

भा०—आहं यदि वेदं यदपीदं विश्वमस्मि । कृत्स्नः प्रपञ्चोऽप्यहमेवास्मि । नामरूपांशं परमार्थे त्यक्त्वा सर्वत्रानुगतोऽस्मि

योऽयं सच्चिदानन्दाकारोऽस्ति सोऽहमस्मीति न विजानामि विविच्य नाज्ञासिषम् । परं शास्त्रजनितमिदमहमस्मीति ज्ञानं जातम् । अविवेक्यहमित्यर्थः । कार्यकारणयोरभेदात् । कृत्स्नप्रपञ्चस्यापि ब्रह्मानन्यत्वेन ब्रह्मैकत्वावगमे प्रपञ्चजातमपि स्वस्वरूपमेव भवति । इदं सर्वं यदयमात्मा ब्रह्मैवेदं सर्वं आत्मैवेदं सर्वं स ईक्षत बहु स्यां प्रजायेयेत्यादिश्रुतिभ्य एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् । तदनन्यत्वमारम्भणशब्दादिभ्यः ( वेदां० २ । १ । १४ ) इत्याद्युपपत्तिभिश्च प्रपञ्चस्य ब्रह्मानन्यत्वं सिद्धम् । यद्वा । इवशब्द उपमार्थः । यदिव यत्परोक्षज्ञानं सर्वैकात्म्यरूपमानुभाविकमस्ति तदिव तद्वदेवाहमस्मि । इदं सर्वमहमस्मीति ज्ञानं मे जातम् । अपि त्वेतद्दार्ष्टान्तिकभूतम् । आनुभविकं सार्वात्म्यं यदस्ति तन्न वि जानामि, न प्राप्तोऽस्मि । शास्त्रजनितं सार्वात्म्यं जातं न त्वानुभाविकमित्यर्थः । तत्र कारणमाह । यतोऽहं निण्यः । अन्तर्हितनामैतत् । अन्तर्हितो मूढचित्तः । चित्तप्रत्यक्प्रवणताभावेन परिच्छिन्न इत्यर्थः । तत्रोपपत्तिमाह । सन्नद्धोऽविद्याकामकर्मभिः सम्यग्बद्धो वेष्टितः अत एव मनसा युक्तो भावनासहिष्णुना बहिर्मुखेन विक्षिप्तेन चेतसा युक्तः सञ्चरामि संसारे । अथवा मनसा सन्नद्धश्चरामि । इन्द्रियपरवश एव सन् संसारे दुःखमनुभवामि । न सार्वात्म्यं जानामीति परिदेवते । यास्कोऽपीमं परिदेवनार्थत्वेनोदाजहार । अथापि परिदेवना कस्माच्चिद्भावात् न वि जानामि यदिवेदमस्मि ( नि० ७ । ३ ) इति । बहिर्मुखचेतसः स्वरूपापरिज्ञानजनितं दुःखमन्यत्र श्रूयते । पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ् पश्यति नान्तरात्मन् (क० उ० ४ । १) इति । तर्हि कदैतद्भवतीत्याह । यदा मागन् आगमिष्यति तदा । किं तदिति उच्यते । ऋतस्य परमार्थस्य परस्य ब्रह्मणः प्रथमजाः प्रथमोन्मेषः प्रथमोत्पन्नश्चित्तप्रत्यक्प्रवणजनितो ऽनुभावः । स यदा मा मां प्राप्नोति आदिदनन्तरमेवाव्यवधानेनास्या वाच ऐकात्म्यप्रतिपादिकाया उपनिषद्वाचो यदि वेदमस्मीत्युक्ताया वा भागं भजनीयं शब्दब्रह्मणा व्याप्तव्यं परं ब्रह्मपदमश्नुवे प्राप्नोमि । चित्तस्य बहिर्मुखतां परित्यज्यान्तर्मुखतैवादुःसम्पादा । सा यदा स्यात् तदानीमेव स्वरूपं द्रष्टुं सुशकं भवति । पश्चाद्विलम्बाभावात्

यथा गिरिशिखरात् पतन् पाषणोऽविलम्बेन पतति तद्वत्। चित्त-प्रत्यङ्मुखत्वस्य दुःशकत्वमपि तत्रैव श्रूयते। कश्चिद्धीरः प्रत्यगात्मानमैच्छदावृत्तचक्षुरमृतत्वमिच्छन्निति।

म०—अपाङ् प्राङेति स्वधया गृभीतो-

ऽमर्त्यो मर्त्येना सयोनिः।

ता शश्वन्ता विषूचीना वियन्ता

न्य १ न्यं चिक्युर्न नि चिक्युरन्यम् ॥३८॥

प०—अपाङ्। प्राङ्। एति। स्वधया। गृभीतः।

अमर्त्यः। मर्त्येन। सऽयोनिः।

ता। शश्वन्ताः। विषूचीना। विऽयन्ता।

नि। अन्यम्। चिक्युः। न। नि। चिक्युः। अन्यम् ॥३८॥

भा०—अमर्त्योऽमरणधर्मायमात्मा मर्त्येन मरणधर्मणा भूतात्मना देहेन सयोनिः समानस्थानः। यत्र परिच्छेदको देहोऽस्ति तत्र सर्वत्र सोऽयमपि तिष्ठन्नित्यर्थः। यद्वा। समानोत्पत्तिः। सहवासेन स्वस्मिन्नप्युत्पत्तिरुपचर्यते। एवंभूतः सन् स्वधयान्नोपलक्षित तद्भोगेन गृभीतः। यद्वा। स्वधाशब्देनान्नमयं शरीरं लक्ष्यते। तेन गृहीतः सन्नपाङेति। अशुक्लं कर्म कृत्वाधो गच्छति। प्राङेति। ऊर्ध्वं स्वर्गादिलोकं प्राप्नोति। परमात्मैव सूक्ष्मशरीरोपाधिकः सन्नानाविधकर्म कृत्वा तद्भोगाय जीवसञ्ज्ञां लब्ध्वा शरीरत्रयेण सम्बद्धो लोकान्तरेषु सञ्चरति। स्थूलसूक्ष्मोभयशरीरपरिग्रहेण लोके गुणत्रयान्वितः सन् परिभ्रमति। तथा च श्रूयते।

गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता।

स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः सञ्चरति स्वकर्मभिः ।
( श्वेता० उ० ५ । ७ ) इति ।

इदानीमुभयप्राधान्येनाह । ता तौ भूतात्मकर्त्रात्मानौ शश्वन्ता विभागेन सर्वदा वर्तमानौ । यद्वा । सूक्ष्मशरीरपक्षे सर्वदा सहवास उपपद्यते । स्थूलशरीरपक्षेऽपि सात्त्विकजातेः । तत्कारणानां भूतसूक्ष्माणां सद्भावात्तत्र शरीरसम्बन्ध उपपद्यते । विषूचीनेह लोके सर्वत्रगमनौ वियन्ता तत्तत्फलोपभोगाय सर्वत्र लोकान्तरेषु गच्छन्तौ वर्तेते । तत्र नरा अन्यं भूतात्मानं नि चिक्युः, नितरां विशेषेण पश्यन्ति, जानन्ति । अन्यमपरं देहवच्छायातिरिक्तं न नि चिक्युः, न जानन्ति । केचन पामरा देहव्यतिरिक्तं न जानन्ति । केचन विवेकिनः कर्तृत्वभोक्तृत्वोपेतो देहातिरिक्तः कश्चिदस्तीत्यनुमिमते । न केऽपि देहत्रयव्यतिरिक्तमात्मानं जानन्ति । अतो दुर्लभमात्मज्ञानमित्यर्थः ।

म०—ऋचो अक्षरे परमे व्योमन्
यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति
य इत्तद्विदुस्त इमे समासते ॥ ३९ ॥

प०—ऋचः । अक्षरे । परमे । विऽओमन् ।
यस्मिन् । देवाः । अधि । विश्वे । निऽसेदुः ।
यः । तत् । न । वेद । किम् । ऋचा । करिष्यति ।
ये । इत् । तत् । विदुः । ते । इमे । सम् । आसते ॥ ३९ ॥

भा०—पूर्वमन्त्रे देहात्मजीवात्मानावुक्तौ । तयोरन्यस्य जीवात्मनः पारमार्थिकं रूपमस्ति तदत्रोच्यते । ऋचो अक्षरे । अत्र ऋक्-

शब्देन ऋक्प्रधानभूताः साङ्गापरविद्यात्मकाश्चत्वारो वेदा उच्यन्ते। ऋगादीनामपरविद्यात्वं मुण्डके श्रूयते। द्वे विद्ये वेदितव्ये इति प्रतिज्ञाय तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदः (मु० उ० १।१।५) इत्यादिना। तस्याः सम्बन्धिन्यक्षरेऽदृश्यादिगुणके क्षरणरहितेऽनश्वरे नित्ये सर्वत्र व्याप्ते ब्रह्मणि। अक्षरशब्दस्य ब्रह्मवाचकत्वम् एतद्वै तदक्षरस्य प्रशासने गार्गि ( बृ० उ० ३।८ ) । यया तदक्षरमधिगम्यते ( मु० उ० १।१।५) येनाक्षरं पुरुषं वेद सत्यम् ( मु० उ० १ । २ । १३ ) इत्यादिश्रुतिषु प्रसिद्धम्। ऋगक्षरयोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः । सर्वैर्वेदैः खलु ब्रह्माधिगम्यते तं त्वौपनिषदं पुरुषं पृच्छामि (शत० १४।६।९।२८) इत्यादिश्रुतेः । ननूपनिषद्भागानां तथास्तु । इतरेषां तु कथं ब्रह्मविषयत्वमिति उच्यते । यद्यपीतरभागानां यागादिविषयत्वं तथापि बुद्धिः श्रुत्युत्पादनद्वारा वेदनसाधनत्वेन ब्रह्मविषया भविष्यति वेदानुवचनेन ब्राह्मणा विविदिषन्ति ( बृ० उ० ४ । ४ । २२ ) इत्यादिश्रुतेः । तदेव विशेष्यते । परम उत्कृष्टे निरतिशये व्योमन् व्योमनि व्योमसदृशे अलेपत्वनीरूपत्वव्यापित्वादिसादृश्येन व्योमेत्युक्तम् । यद्वा । विशेषेण सर्वस्य रक्षके । निरधिष्ठा न कस्यचिदस्ति स्वाध्यस्तस्य सर्वस्याधिष्ठानत्वेन रक्षकत्वात्। तादृशे तत्त्वे सर्वमध्यस्थस्तमित्यर्थः। पुनस्तदेव विशेष्यते। यस्मिन् परमात्मनि विश्वे सर्वे देवा अधिनिषेदुः निषीदन्ति आश्रित्य तिष्ठन्ति तस्मिन् । यद्वा। उक्तलक्षणे वस्तुन्यृगुपलक्षिताः सर्वे सांगा वेदाः पर्यवसिता इत्यर्थः। यः यो मर्त्यस्तत्तादृशं देवादीनां स्वरूपलाभास्पदं कृत्स्नवेदैस्तात्पर्यं प्रतिपाद्यं यद्वस्तु न वेद न जानाति स मर्त्य ऋचा पूर्वोक्तेनर्गादिशब्दजालेन किं करिष्यति। वेदनसाधनेन वेदेन वेद्यमविदित्वा किं साधयतीत्यर्थः। प्रयोजनाभावात् सर्वस्यापि वेदस्य नैष्फल्यादिति भावः। अथवा योऽक्षरमविदित्वा कर्मणां कर्ता भवति यागादीननुतिष्ठति तेन किञ्चिदपि कर्म कृतं न भवतीत्यर्थः। य इद्य एव तत्तत्त्वं विदुः जानन्ति त इमे समासते, त एवेमे ज्ञातारः समासते, सम्यक् तिष्ठन्ति। अपुनरावृत्त्या स्वरूपेऽवस्थानं समासनम्। यद्वा। ये विदुरिद्ये जानन्त्येव नानुतिष्ठन्ति । इच्छब्दोऽवधारणे। त इमे त एव समासते। गवामयनादिसहस्रसंवत्सरसत्रपर्यन्तानि सहो-

पयन्ति । सहार्थे संशब्दः । सत्त्रादधिकानां यागानामभावात् तेषा-मपि फलमेतज्ज्ञानेनैव प्राप्तं भवतीत्यर्थः । कर्तॄणां बहुत्वाद्बहु-वचननिर्देशः ।

अन्ये त्वन्यथा वर्णयन्ति । ऋचः । ऋगर्चनीयमादित्यमण्डल-मृगादिमयं वा । ऋग्भिः पूर्वाह्णे दिवि देव आदित्यो वा एष एत-न्मण्डलं तपति तत्र ता ऋच इत्यादिश्रुतेः । तस्य सम्बधिन्यक्षरे परमे व्योमन्नित्युक्तलक्षणे ब्रह्मणि य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत इत्यादिश्रुत्युक्तस्वरूपे यस्मिन् सर्वे देवा द्योतमाना रश्मयो निषेदुः वर्तन्ते । य एतन्न वेद स केवलयर्चा किं करिष्यति । ये जानन्ति भाव-यन्ति त एव विद्वांसः समासते । भूम्यां सुखेन रोगादिरहिता भोगिनः सन्तश्चिरकालं जीवन्ति ।

अपरे प्रकारान्तरेण प्रतिपादयन्ति । ऋचोऽक्षर ऋगुपलक्षित-सर्ववेदसम्बन्धिन्यक्षरे प्रणवरूप ओङ्कारेऽविनाशिनि सर्ववेदेषु व्याप्ते वा । प्रणवस्य सर्ववेदसारत्वं ब्राह्मणे श्रूयते। तान् वेदानभ्यतपत्तेभ्यो-ऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति तानेकधा समभरत् तदेतदोमिति ( ऐ० ब्रा० ५।३२ ) इति । परमे निरतिशये न हि प्रणवादधिकं किञ्चिन्मन्त्रजातमस्ति त्रिकालातीतस्य ब्रह्मणः प्रतिपादकत्वात् । यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव ओमिति ब्रह्म ( तै० आ० ७।८ ) इत्यादिश्रुतेः । वेदानां प्रणवस्य स्थानप्रति-निधिभावः सम्बन्धो य ऋचोऽधीत इत्याद्युपक्रम्य यः प्रणवमधीते स सर्वमधीते ओमिति प्रतिपद्यत एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत् परममक्षरम् ( तै० आ० २।११।४ ) इत्यादिश्रुतेः। यस्मिन् विश्वे सर्वे देवा अधि निषेदुः । प्रणवस्य सर्वमन्त्रात्मकत्वात् मन्त्रेषु सर्वदेवतानां निवासात् सर्वदेवनिवासत्वम् । ब्रह्माधिष्ठानत्वाद्वा ब्रह्मणि सर्वदेवानां निवासात् । शिष्टमविशिष्टम् ।

अयं मन्त्रो निरुक्ते व्याख्यातः । ( नि० १३ । १० )

अपरे त्वपरथा वर्णयन्ति । ऋचः । ऋगर्चनीयो जीवः । तस्य सम्बन्धिन्यक्षरेऽविनाशे व्याप्ते वा परमात्मनीत्यर्थः । अत एव जीवा-पेक्षया परम उत्कृष्टे निरुपाधिके व्योमन् विशेषेण सर्वाधिष्ठानत्वेन

रक्षके व्योमसदृशे वा। यस्मिन् परमात्मनि देवा गमनवन्तो व्यवहरन्तो वेन्द्रियसंज्ञका विश्वे सर्वेऽप्यधि निषेदुः निषीदन्ति आश्रित्य वर्तन्ते। यस्तन्न वेद न जानाति उपाध्यंशपरित्यागे तदेव स्वरूपमिति न पश्यति स्थूलो जनः किमृचा करिष्यति। केवलेन जीवेन जीवभावेन किं फलं प्राप्स्यति । जननमरणादिक्लेशस्यात्यागादिति भावः । ये तत्तत्त्वं विदुस्त इत्यादिसिद्धम् ।

अग्निहोत्रार्था धेनुर्यदि कुत्सितं शब्दं कुर्यात्तदानीं सूयवसादित्यनया यवसादिकं प्रयच्छेत् । तथा च सूत्रितम् । वाश्यमानायै यवसं प्रयच्छेत् सूयवसाद्भगवतो हि भूयाः (आ० ३। ११) इति।

प्रवर्ग्येऽभिष्टव एषैव परिधानीया। सूत्रितं च। सूयवसाद्भगवती हि भूया इति परिदध्यात् ( आ० ४। ७ ) इति।

म०—सूयवसाद्भगवती हि भूया

अथो वयं भगवन्तः स्याम।

अद्धि तृणमघ्न्ये विश्वदानीं

पिब शुद्धमुदकमाचरन्ती ॥ ४० ॥

प०—सुयवसऽअत्। भगऽवती। हि। भूयाः।

अथो इति। वयम्। भगऽवन्तः। स्याम।

अद्धि। तृणम्। अघ्न्ये। विश्वऽदानीम्।

पिब। शुद्धम्। उदकम्। आऽचरन्ती ॥ ४० ॥

हे अघ्न्ये। गोनामैतत्। अहननीये हे गौः त्वं सूयवसाच्छोभनयवसस्य तृणादिकस्यात्त्री भगवती। भग इति धननाम। सर्वैर्भ-

जनीयप्रभूतक्षीरादिधनवती भूयाः, भव । हिः पूरणः प्रसिद्धौ वा । लोके यवसादिभक्षणेन क्षीरादिसमृद्धिः प्रसिद्धा । अथो अनन्तरमेव वयं यजमाना अपि भगवन्तः प्रभूतेन धनेन तद्वन्तः स्याम । अथैक-वारं पूर्वमुक्तमिदानीं सर्वदा कर्तव्यमिति प्रार्थयते । विश्वदानीं विश्व-कालं सर्वदा तृणमद्धि, भक्षय । आचरन्ती सर्वतो निर्गच्छन्ती शुद्धं निर्मलमुदकं पिब । अयं मन्त्रो यास्केनैवं व्याख्यातः । सुयवसादिनी भगवती हि भवाथेदानीं वयं भगवन्तः स्यामाद्धि तृणमघ्न्ये सर्वदा पिब च शुद्धमुदकमाचरन्ती ( नि० ११ । ४४ ) इति ।

म०—गौरीर्मिमाय सलिलानि तक्षत्ये-

कपदी द्विपदी सा चतुष्पदी ।

अष्टापदी नवपदी बभूवुषी

सहस्राक्षरा परमे व्योमन् ॥ ४१ ॥

प०—गौरीः । मिमाय । सलिनानि । तक्षती ।

एकऽपदी । द्विऽपदी । सा । चतुःऽपदी ।

अष्टाऽपदी । नवऽपदी । बभूवुषी ।

सहस्रऽअक्षरा । परमे । विऽओमन् ॥ ४१ ॥

भा०—गौरीर्गरणशीला माध्यमिका वाक् ।

सुलोपाभावश्छान्दसः ।

मिमाय, शब्दयति । किं कुर्वती ? सलिलानि वृष्ट्युदकानि तक्षती सम्यक् सम्पादयित्री । एकपद्येकपादोपेतैकाधिष्ठाना मेघे वर्तमाना गमनसाधनेन वायुनैकपदी वा द्विपदी मेघान्तरिक्षाख्य-

यद्व्यधिष्ठाना । आदित्यो वा द्वितीयः । तथा सा चतुष्पदी पादचतुष्टयोपेता दिक्चतुष्टयाधिष्ठाना । अथाष्टापदी विदिगपेक्षयाष्टपादोपेताष्टाधिष्ठाना नवपद्युपरिदिगपेक्षया सूर्येण वा नवदिगधिष्ठाना बभूवुष्येवंभूता ।

भवेश्छान्दसः क्वसुः । ततो ङीपि वसोः सम्प्रसारणम् ।

किमनया परिगणनया ? सहस्राक्षरा । अपरिमितवचनोऽयम् । अपरिमित व्याप्तियुक्ता । बहुव्यापनशीलोदकवतीत्यर्थः । कुत्रेति ? तदुच्यते । परमे व्योमन्नुदकाश्रयत्वेनोत्कृष्टेऽन्तरिक्षे ।

केचिदेवमाहुः । गौरीर्गरणशीला शब्दब्रह्मात्मिका वाक् मिमाय माति ।

प्रसिद्धार्थे धातुः ।

प्रतिष्ठितानि घटादिद्रव्यानि तक्षती तत्तद्वाचकत्वेन निष्पादयन्ती एकपद्यव्याकृतत्वेनैकप्रतिष्ठानैकरूपा वात्मना द्विपदी सुप्तिङ्भेदेन पादद्वयवती चतुष्पदी नामाख्यातोपसर्गनिपातभेदेन अष्टापद्यामन्त्रितसहिताष्टभेदेनाष्टपदी नवपदी बभूवुषी साव्ययैरुक्तैरष्टभिर्नवपदी । अथवा सनाभिकेषूरः कण्ठादिषु नवसु पदेषु भवन्ती पश्चाद्बहुविधाभिव्यक्तिमुपेयुषी परमे व्योमन्नुत्कृष्टे हृदयाकाशे मूलाधारे सहस्राक्षरानेकाकारेण व्याप्तानेकध्वनिप्रकारा भवतीत्यर्थः ।

अयं अत्र आचार्येणैवं व्याख्यातः । 'गौरीर्मिमाय सलिलानि तक्षती कुर्वत्येकपदी मध्यमेन द्विपदी मध्यमेन चादित्येन च चतुष्पदी दिग्भिरष्टापदी दिग्भिश्चावान्तरदिग्भिश्च नवपदी दिग्भिश्चावान्तरदिग्भिश्चादित्येन च सहस्राक्षरा बहूदका परमे व्यवने' ( नि० ११ । ४० ) इति ।

म०—तस्याः॑ समु॒द्रा अधि॒ वि क्ष॑रन्ति॒

ते॑न जीवन्ति प्र॒दिश॒श्चत॑स्रः ।

ततः क्षरत्यक्षरं

तद्विश्वमुप जीवति ॥ ४२ ॥

प०—तस्याः । समुद्राः । अधि । वि । क्षरन्ति ।

तेन । जीवन्ति । प्रऽदिशः । चतस्रः ।

ततः । क्षरति । अक्षरम् ।

तत् । विश्वम् । उप । जीवति ॥ ४२ ॥

भा०—तस्या उक्ताया गोः सकाशात् समुद्रा वृष्ट्युदकसमुन्दनाधिकरणभूता मेघा अध्यधिकं प्रभूतमुदकं विक्षरन्ति, विविधं क्षरन्ति । तेनोदकेन प्रदिशश्चतस्रः । प्रशब्दो वीत्यर्थः । विदिशश्चतस्रो दिशश्च । अथवा प्रकृष्टा दिशो मुख्याश्चतस्रः । तत्स्थेषु ताच्छब्द्यम् तत्स्थाः पुरुषा जीवन्ति । ततः पश्चात्तदक्षरमुदकं क्षरति । सस्यादिकमुत्पादयतीत्यर्थः । तत् सस्यादिकं विश्वं जगदुपजीवति । अयमपि यास्केन व्याख्यातः । तस्याः समुद्रा अधिविक्षरन्ति वर्षन्ति मेघास्तेन जीवन्ति दिगाश्रयाणि भूतानि ततः क्षरत्यक्षरमुदकं तत्सर्वाणि भूतान्युपजीवन्ति ( नि० ११ । ४१ ) ।

म०—शकमयं धूममारादपश्यं

विषूवता पर एनावरेण ।

उक्षाणं पृश्निमपचन्त वीरा-

स्तानि धर्माणि प्रथमान्यासन् ॥४३॥

प०—शकऽमयम् । धूमम् । आरात् । अपश्यम् ।

विषुऽवता । परः । एना । अवरेण ।

उक्षाणम् । पृश्निम् । अपचन्त । वीराः ।

तानि । धर्माणि । प्रथमानि । आसन् ॥४३॥

भा०—शकमयं शकृन्मयं शुष्कगोमयसम्भूतं धूममारान्नातिदूर अपश्यम, दृष्टवानस्मि । दिवा धूमस्य दूरे दृश्यमानत्वात् स एव दर्शनाविषयतयोक्तः । विषुवता व्याप्तिमतैनानेनावरेण निकृष्टेन धूमेन परः परस्तात्तत्कारणभूतमग्निमपश्यम् । अहं यजमान इत्यर्थः । किञ्चोक्षाणं फलस्य सेक्तारं पृश्निं शुक्लवर्णम् । प्राश्नुते तेन फलमिति स्वयं प्राश्नुत इति वा पृश्निर्वल्लीरूपः सोमः । तं वीरा विविधेरणकुशला ऋत्विजोऽपचन्त । अत्र धात्वर्थानादरेण तिङ्प्रत्ययः करोतीत्यर्थः । स च क्रियासामान्यवचनोऽत्रौचित्यादभिषवेण सम्पादितवन्त इत्यर्थः । तानि तत्साधनानि धर्माण्यनुष्ठानानि प्रथमानि प्रतमानि प्रकृष्टानि फलपर्यवसानीयान्यासन, सम्पादितान्यभवन् । यद्वा । सोम उक्षाभवत् । पूर्वं तं देवा शकृतापचन् यज्ञार्थं तद्भवो धूमो मेघ आसीत् तदुच्यते । तत्परत्वेन वा मन्त्रो व्याख्येयो विचक्षणैः ।

म०—त्रयः केशिन ऋतुथा वि चक्षते

संवत्सरे वपत एक एषाम् ।

विश्वमेको अभि चष्टे शचीभि-

र्ध्राजिरेकस्य ददृशे न रूपम् ॥४४॥

प०—त्रयः । केशिनः । ऋतुऽथा । वि । चक्षते ।

संवत्सरे । वपते । एकः । एषाम् ।

विश्वम् । एकः । अभि । चष्टे । शचीभिः ।

ध्राजिः । एकस्य । ददृशे । न । रूपम् ॥४४॥

भा०—केशस्थानीयप्रकृष्टरश्मियुक्तास्त्रयोऽग्न्यादित्यवायवः । ते चर्तुथा काले काले विचक्षते । विविधलक्षणां भूमिं पश्यन्ति । तेषां पृथक्पृथक्कार्यमाह । एषां मध्य एकोऽग्निः संवत्सरेऽतीते सति संवत्सरं वपते । दाहेन केशस्थानीयौषधिवनस्पत्यादिके छेदनं नापित-कार्यं करोति । एक अन्य आदित्यो विश्वं सर्वं जगच्छचीभिः स्वकीयैः प्रकाशवृष्ट्यादिकर्मभिरभिचष्टे, सर्वतः पश्यति । एकस्य वायोर्ध्रा-जिर्गतिर्ददृशे, दृश्यते सर्वैः । न रूपम् । अप्रत्यक्षत्वात् स्पर्शशब्दधृति-कम्पलिङ्गैर्गम्यत इति हि न्यायविदो वदन्ति । अयमपि मन्त्रो यास्केनैव व्याख्यातः । त्रयः केशिन ऋतुथा विचक्षते काले काले-ऽभिविपश्यन्ति संवत्सरे वपत एक एषामित्यग्निः पृथिवीं दहति सर्वमेकोऽभिपश्यति कर्मभिरादित्यो गतिरेकस्य दृश्यते न रूपं मध्य-मस्य ( नि० १२ । २७ ) इति ।

वाग्देवत्ये पशौ चत्वारि वागिति हविषोऽनुवाक्या । चत्वारि वाक्परिमिता पदानि यज्ञेन वाचः पदवीयमायन् ( आ० ३ । ८ ) इति सूत्रितत्वात् ।

म०—चत्वारि वाक्परिमिता पदानि

तानि विदुर्ब्राह्मणा ये मनीषिणः ।

गुहा त्रीणि निहिता नेङ्गयन्ति
तुरीयं वाचो मनुष्या वदन्ति ॥ ४५ ॥

प०—चत्वारि । वाक् । परिऽमिता । पदानि ।
तानि । विदुः । ब्राह्मणाः । ये । मनीषिणः ।
गुहा । त्रीणि । निऽहिता । न । इङ्गयन्ति ।
तुरीयम् । वाचः । मनुष्याः । वदन्ति ॥४५॥

भा०—वाग्वाचः कृत्स्नायाः पदानि चत्वारि परिमिता परिमितानि। लोके या वागस्ति सा चतुर्विधा विभक्तेत्यर्थः। तानि पदानि ब्राह्मणा वेदविदो मनीषिणो मनस ईषिणो मेधाविनो विदुः, जानन्ति । तेषां मध्ये त्रीणि गुहा गुहायां निहिता स्थापितानि नेङ्गयन्ति, न चेष्टन्ते, न प्रकाशन्त इत्यर्थः । वाचस्तुरीयं पदं मनुष्या अज्ञास्तज्ज्ञाश्च वदन्ति, व्यक्तमुच्चारयन्ति व्यवहरन्ति । कानि तानि चत्वारीत्यत्र बहवः स्वस्वमतानुरोधेन बहुधा वर्णयन्ति । सर्ववैदिकवाग्जालस्य सङ्ग्रहरूपा भूरादयस्तिस्रो व्याहृतयः प्रणव एक इति वेदत्रयसारत्वात्तासां व्याहृतीनामेव सारसङ्ग्रहभूतत्वादकाराद्यात्मकस्य प्रणवस्येति सप्रणवासु व्याहृतिषु सर्वा वाक् परिमितेति केचन वेदवादिनो वदन्ति ।

अपरे व्याकरणमतानुसारिणो नामाख्यातोपसर्गनिपातभेदेन । क्रियाप्रधानमाख्यातम् । द्रव्यप्रधानं नाम । प्रागुपसृज्यत आख्यातपदस्येत्युपसर्गः प्रादिः । उच्चावचेष्वर्थेषु निपतनान्निपातोऽपितु चेत्यादिः । एतेष्वेव सर्वा वाक् परिमितेत्यखण्डायाः कृत्स्नाया वाचश्चतुर्धा व्याकृतत्वात् । 'वाग्वै पराच्यव्याकृतावदत् तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते' ( तै० सं० ६ । ४ । ७ । ३) इति श्रुतेः ।

अन्ये तु याज्ञिका मन्त्राः कल्पो ब्राह्मणं चतुर्थी लौकिकीति। याज्ञिकैः समाख्यातोऽनुष्ठेयार्थप्रकाशको वेदभागो मन्त्राः। मन्त्रविधानप्रतिपादको वेदभाग इति मन्त्राः कल्पोऽत ऊर्ध्वम्, ( तै आ० १। ३१। २ ) इत्यादिनोक्तः कल्पः। मन्त्रतात्पर्यार्थप्रकाशको वेदभागो ब्राह्मणम्। भोगविषया गामानयेत्यादिरूपा व्यावहारिकी। एष्वेव सर्वा वाङ्नियमितेति याज्ञिकाः।

ऋग्यजुः सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः।

सर्पाणां वाग्वयसां क्षुद्रसरीसृपस्य च चतुर्थी व्यावहारिकीत्यैतिहासिकाः।

पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मवादिनः।

अपरे मातृकाः प्रकारान्तरेण प्रतिपादयन्ति। परा पश्यन्ती मध्यमा वैखरीति चत्वारीति। एकैव नादात्मिका वाग्मूलाधारादुदिता सती परेत्युच्यते। नादस्य च सूक्ष्मत्वेन दुर्निरूपत्वात् सैव हृदयगामिनी पश्यन्तीत्युच्यते योगिभिर्द्रष्टुं शक्यत्वात्। सैव बुद्धिगता विवक्षां प्राप्ता मध्यमेत्युच्यते मध्ये हृदयाख्य उदीयमानत्वान्मध्यमायाः। अथ यदा सैव वक्त्रे स्थिता ताल्वोष्ठादिव्यापारेण बहिर्निर्गच्छति तदा वैखरीत्युच्यते। एवं चत्वारि वाचः पदानि परिमितानि। मनीषिणो मनसः स्वामिनः स्वाधीनमनस्का ब्राह्मणा एवाख्यस्य शब्दब्रह्मणोऽधिगन्तारो योगिनः परादिचत्वारि पदानि विदुः, जानन्ति। तेषु मध्ये त्रीणि परादीनि गुहा निहितानि हृदयान्तर्वर्तित्वात्। तुरीयं तु पदं वैखरीसञ्ज्ञकं मनुष्याः सर्वे वदन्ति।

व्याकरणप्रसिद्धानामाख्यातादिपक्षे मनीषिणो ब्राह्मणाः प्रकृतिप्रत्ययादिविभागज्ञा वाग्योगविदस्तानि पदानि जानन्ति। अवाग्योगविदः पामरा वाचो वाङ्मयस्य तुरीयं चतुर्थं भागं वदन्ति, व्यवहरन्ति। अर्थप्रकाशनाय प्रयुञ्जते।

अयं मन्त्रो निरुक्ते व्याख्यातः। सोऽत्राप्यनुसन्धेयः ( नि० १३। ९ )।

अथापि ब्राह्मणं भवति। सा वै वाक् सृष्टा चतुर्धा व्यभवदेष्वेव लोकेषु त्रीणि पशुषु तुरीयम्। या पृथिव्यां साग्नौ सा रथन्तरे।

यान्तरिक्षे सा वायौ सा वामदेव्ये । या दिवि सादित्ये सा बृहति सा स्तनयित्नावथ पशुषु ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुः । तस्माद्ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणामिति।

म०—इन्द्रं मित्रं वरुणमग्निमाहु-

रथो दिव्यः स सुपर्णो गरुत्मान् ।

एकं सद्विप्रा बहुधा वद-

न्त्यग्निं यमं मातरिश्वानमाहुः ॥४६॥

प०—इन्द्रम् । मित्रम् । वरुणम् । अग्निम् । आहुः ।

अथो इति । दिव्यः । स । सुऽपर्णः । गरुत्मान् ।

एकम् । सत् । विप्राः । बहुधा । वदन्ति ।

अग्निम् । यमम् । मातरिश्वानम् । आहुः ॥४६॥

भा०—अमुमादित्यमैश्वर्यविशिष्टमिन्द्रमाहुः । तथा मित्रं प्रमीतेर्मरणात्त्रातारमहरभिमानिनमेतन्नामकं देवं तमाहुः । वरुणं पापस्य निवारकं रात्र्यभिमानिनं देवमाहुः । तथाग्निमङ्गनादिगुणविशिष्टमेतन्नामकमाहुः । अथो अपि चायमेव दिव्यो दिविभवः सुपर्णः सुपतनो गरुत्मान् गरणवान् पक्षवान्वा । एतन्नामको यः पक्ष्यस्ति सोऽप्ययमेव । कथमेकस्य नानात्वमित्युच्यते अमुमेवादित्यमेकमेव वस्तुतः सन्तं विप्रा मेधाविनो देवतातत्त्वविदो बहुधा वदन्ति । तत्तत्कार्यकारणेनेन्द्राद्यात्मानं वदन्ति । एकैव वा महानात्मा देवता स सूर्य इत्याचक्षत इत्युक्तत्वात् । किं च तमेव वृष्ट्यादिकारणं वैद्युताग्निं यमं नियन्तारं मातरिश्वानमन्तरिक्षे श्वसन्तं वायुमाहुः । सूर्यस्य ब्रह्मणोऽनन्यत्वेन सर्वा-

त्म्यमुक्तं भवति । अत्र ये केचिदग्निः सर्वा देवताः (ऐ० ब्रा० २ । ३) । इत्यादिश्रुतितोऽयमेवाग्निरुत्तरे अपि ज्योतिषी इति मत्वाग्नेरेव सर्वात्म्यप्रतिपादकोऽयं मन्त्र इति वदन्ति । तत्पक्षे प्रथमोऽग्निशब्द उद्देश्यः । तमग्निमुद्दिश्येन्द्राद्यात्मकत्वकथनम् । अयं मन्त्रो निरुक्त एवं व्याख्यातः । इममेवाग्निं महान्तमात्मानमेकमात्मानं बहुधा मेधाविनो वदन्ति इन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तम् । दिव्यो दिविजो गरुत्मान् गरणवान् गुर्वात्मा महात्मेति वा (नि० ७ । १८) इति ।

वर्षकामेष्ट्यां तिस्रः पिण्ड्यो होतव्याः । तत्र कृष्णं नियानमिति तृतीयस्यानुवाक्या । कृष्णं नियानं हरयः सुपर्णा नियुत्वन्तो ग्रामजितो यथा नरः (आ० २ । १३) इति ।

म०—कृष्णं नियानं हरयः सुपर्णा
अपो वसाना दिवमुत्पतन्ति ।
त आववृत्रन्त्सदनादृतस्या-
दिद्घृतेन पथिवी व्युद्यते ॥ ४७ ॥

प०—कृष्णम् । निऽयानम् । हरयः । सुऽपर्णाः ।
अपः । वसानाः । दिवम् । उत् । पतन्ति ।
ते । आ । अववृत्रन् । सदनात् । ऋतस्य ।
आत् । इत् । घृतेन । पृथिवी । वि । उद्यते ॥४७॥

भा०—कृष्णं कृष्णवर्णं नियानं नियमेन गच्छन्तं मेघं हरय उदकस्य हर्तारः सुपर्णाः शोभनपतना रश्मयोऽपो वसाना उदकानि

वासयन्तो मेघेषु । अद्भिर्मेघान् पूरयन्त इत्यर्थः ।

अन्तर्भावितण्यर्थाद् द्विकर्मकत्वम् ।

यद्वा । कृष्णं नियानं नियमनं रात्रिः । देवानां हि रात्रिर्दक्षिणायनम् । तत्प्रति । तस्मिन् वर्षकाल इत्यर्थः । एवं कुर्वन्तो दिवं द्युलोकं तदाश्रितमादित्यं वोद्दिश्योत्पतन्ति, ऊर्ध्वं गच्छन्ति । ते रश्मय ऋतस्य सदनादुदकस्य स्थानादादित्यमण्डलादाववृत्रन्, अवर्तन्ते, अर्वाञ्च आगच्छन्ति । आदिदनन्तरमेव यदावर्गाच्छन्ति तदानीमेव घृतेनोदकेन पृथिवी व्युद्यते, विविधं क्लिद्यते । कृष्णं निरयणं रात्रिरादित्यस्य हरयः सुपर्णा हरणा आदित्यरश्मय इत्यादि निरुक्तं द्रष्टव्यम् (नि० ७ । २४)।

म०—द्वादश प्रधयश्चक्रमेकं
त्रीणि नभ्यानि क उ तच्चिकेत ।
तस्मिन्त्साकं त्रिशता न शङ्कवो-
ऽर्पिताः षष्टिर्न चलाचलासः ॥ ४८ ॥

प०—द्वादश । प्रऽधयः । चक्रम् । एकम् ।
त्रीणि । नभ्यानि । कः । ऊम् इति । तत् । चिकेत ।
तस्मिन् । साकम् । त्रिऽशताः । न । शङ्कवः ।
अर्पिताः । षष्टिः । न । चलाचलासः ॥ ४८ ॥

भा०—द्वादशैतत्सङ्ख्याकाः प्रधयः परिधयः प्रहिता वर्तन्ते । तत्स्थानीया द्वादश मासा एकमद्वितीयं चक्रं क्रमणस्वभावं संवत्सराख्यं चक्रमाश्रिताः तथा त्रीणि त्रिसङ्ख्याकानि नभ्यानि नाभ्या-